# अथाद्भुतशान्तिविधानम् ।

ॐ अग्निकोष्ठाऽग्निवासशुद्धियुक्तशुभग्रहवासरेऽद्भुतशान्तिः कार्या । सैका तिथिर्वारयुता कृताप्ता शेषे गुणेऽस्रे भुवि वह्निवासः । सौख्याय होमः शशियुग्मशेषे प्राणार्थनाशौ दिवि भूतले वा ॥ सूर्यभात्त्रित्रिभे चन्द्रे सूर्यविच्छुक्रपङ्गवः । चन्द्रारेज्यागुशिखिनो नेष्टा होमाहुतिः खले ॥ ॥ "सामग्री" अश्मचूर्ण अक्षोटाः शरावाः औषधानि (मेरे वेदकल्पद्रुम के प्रथमखण्ड के पृष्ठ १२८ और १५६ पर भी लिखे हैं) तदर्थं कुम्भं पशुं मीनमांसं चर्वणं गोधूमापूपाः तण्डुलापूपाः समिधः अग्निहोत्रं "मार्तण्डभवनीयं सूक्ष्मं सुवर्तुलं नीलाश्म" कूर्चं तदर्थं कन्याकर्तितसूत्रपिण्डं (माषा मसूरं मुद्गं च श्वेतसस्यं मयोष्टकम् । कलुत्थं राजमाषं चेति सप्तसस्याः) यवागोधूमनीवारश्यामकङ्गुप्रियङ्गुकाः । धान्यं चेति सप्त व्रीहयः । सुवर्ण रूप्य कांस्य भाङ्गुर ताम्र सर्तल त्रपु इति सप्त धातवः ॥ सप्त मृत्तिकाः । सप्त तीर्थजलानि ॥ ॥ अथ कूर्चविधिः ॥ यजमानस्य पादाग्रादारभ्य-शिखान्तं नवरङ्गसूत्रं (नारेवन) मापयित्वा पञ्चगुणं च कृत्वा गायत्रीमन्त्राभिमन्त्रितानि तदक्षरसंख्यया च चतुर्विंशति २४ ग्रन्थीनि तत्सूत्रे विधाय तथाऽष्टोत्तरशतदर्भपिञ्जानि १०८ च मूलतो दशाङ्गुलमानं वेष्टयित्वा तदुपरि मध्ये सर्षपयवतिलव्रीहियुतान्सर्वौषधिगणान् ग्रन्थियुतनवरङ्गसूत्रं चाक्षोटश्री-

फलादि च संस्थाप्य मूले श्रीफलद्वययुतं यथायोग्यं कृत्वा शुक्ल-कर्पटेन वा कन्याकर्तितसूत्रेण वेष्टयेत् एवं चतुर्विंशत्यङ्गुलं कूर्चं कुर्यात् ॥ ॥ आदावऽश्मचूर्णेन गृहमण्डलं तद्दक्षे औषधकुम्भपद्मं एकादशक्षेत्रेशांश्चोल्लिख्य । भद्रपाठादि-वषट्कृते विष्णु तावत् । ॐ यन्नो भयं गृहमागादऽबुद्धं यद्देवतापितृभ्यो मनुष्यतः । अग्निर्यविष्टः प्रणुदातु तद्भयं शन्नः प्रजाभ्यः शमुनः पशुभ्यो नमः[1] ॥ यदद्भुतं प्रहितं नो अमित्रैर्गृहे निखातं यदि वापि क्षेत्रे । अग्निर्यवि[2]-॥ यदद्भुतं प्रहितं नो अमित्रैर्गवां गोष्ठे यदिवा नः पशूनाम् । अग्निर्यवि[3]-॥ यदारोहच्छकटे यद्रथाङ्गे आत्मवधे ज्ञातृवधाय सृष्टम् । अग्निर्य[4]-॥ या गोमायुर्वदति या उलूको याश्च वाचो अशिवा नो वदन्ति । अग्निर्य[5]-॥ यद्धेनु-र्धेनुं धयति गृहे नो श्वा वा श्वानं खादति रासभो युगम् । अग्निर्य[6]-॥ चन्द्रग्रहे सूर्यग्रहे तु यद्भयमुल्कापाते भूमिचले वा स्फूर्जथौ । अग्निर्यवि[7]-॥ यदद्भुतं यदिह किञ्चिद्भूतं भविष्यदऽ-भवद्यदऽहः कर्हिचित् । अग्निर्य-॥ "तिस्रोऽनुष्टुभः अग्निवायुसूर्या देवताः सौत्रामण्या निचाङ्कुणस्य समस्तपापनिवारणे विनियोगः" । यद्देवा देवहेळनं देवासश्चकृमावयम् । अग्निर्मा तस्मादेनसो विश्वा-न्मुञ्चत्वंहसः[9] ॥ यदि दिवा यदि नक्तमेनांसि चकृमा वयम् । वायुर्मातस्माँ[10]-॥ यदि जागृद्यदि स्वप्नमेनांसि चकृमा वयम् । सूर्यो मा[11]तस्मादे-॥ (शिशुशैशवयोः) भद्रङ्कर्णेभिः शृणुयामदेवाः[12]-॥ स्वस्ति न इन्द्रो वृद्धश्रवा[13]-॥ पृषदश्वा मरुतः[14]-॥ शतमिन्नो

शरदो[१५]-॥ ( वायोरार्षम् ) ऐन्द्राग्नं वर्म बहुलं[१६]-॥ अग्नयेय-
विष्ठायनमः, अग्नये, वायवे, सूर्याय, विश्वेभ्योदेवेभ्यः, इंद्रा-
ग्निभ्यां अद्भुतशान्तियागदेवताभ्योनमः ॥ औषधकुम्भप्रधानं ॥
इमं मे गङ्गे यमुने सरस्वति शतरुद्रिस्तोमं स च तापरुष्णः ।
असिक्रिया मरुद्वृधे वितस्तायार्जीयेके शृणवह्रा सुषोमयानमः ॥
सितासिते सरिते यत्र सङ्गते तत्राप्लुतासो दिवमुत्पतन्ति ।
ये वै तन्वां विसृजंति धीरास्ते जनासोऽमृतत्वं भजन्ते[२] ॥
उदुत्तमं वरुण-॥ एवावन्दस्व वरुणं-॥ याते धामानि दिवियां-॥
सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयान्तु यजमा-
नस्य दुरितक्षयकारकाः ॥ वरुणायनमः चन्द्रमसे सोमाय
औषधकुम्भदेवताभ्योनमः ॥ ग्रहशान्तिप्रधानं । यो रुद्रो अग्नौ ॥
भवायदेवाय ८ तद्विष्णोः परम-॥ वासुदेवादिभ्यो विष्णुपञ्चा-
यतनदेवताभ्यः । यत इन्द्र भयामहे० । अभयङ्करीदेव्यैनमः ॥
क्षेत्रस्य पतिना वयं ॥ पूर्वे हेरकायनमः । इन्द्रापर्वता० । ऐन्द्राग्नं॥
सावित्राणिमहागणपतये, अग्नयेयविष्टाय, अग्नये वायवे सूर्याय
विश्वेभ्योदेवेभ्यः इन्द्राग्निभ्यां अद्भुतशान्तिदेवताभ्यः । वरुणाय
चन्द्रमसे सोमाय औषधकुम्भदेवताभ्यः । भवाय देवाय विष्णु-
पञ्चायतनदेवताभ्यः इन्द्रादिभ्यः । पूर्वेहेरकाय, आग्नेयेत्रिपु-
रान्तकाय, दक्षिणेवेतालराजाय, नैर्ऋतेअग्निजिह्वाय, पश्चिमेकरा-
लाय, वायवेकशालिने, उत्तरेएकपादाय, ईशानेभीमरूपिणे, ऊर्ध्वे
तारकाख्याय, पातालेहाटकेश्वराय, मध्येराजराजेश्वराय, हेरका-

दिभ्यो बटुकादिभ्यः ॥ मात्रामधुपर्कं ॐनमोनैवेद्यं । अर्चन्त-स्त्वा ॥ यजमानमानीय । आसनशोधनं । अनाभौ । तीर्थस्तेयं । यत्रास्तिमाता । महागणपतये दीपधूपः । अपसव्येन समस्तमातापितृभ्यो दीपःस्वधा । सव्येन । गायत्र्यैनमः २ शान्तिरूपाय विद्महे वीर्यातीतायधीमहि, तन्नोदेवदेवः प्रचोदयात् ३ । तत्पुरुषायवि-महादे-तन्नोरुद्रःप्र-। ३ । अद्यतावत् महागणपतेः- अग्नेर्यविष्टस्य, अग्नेः वायोः सूर्यस्य विश्वेषान्देवानां इन्द्राग्न्योः अद्भुतशन्तियागदेवतानां । वरुणस्य चन्द्रमसः सोमस्य औषधकुम्भदेवतानां । भवस्यदेवस्य ८ विष्णुपञ्चायतनदेवतानां । इन्द्रस्य वज्रहस्तस्य । पूर्वे हेरकस्य, आ-त्रिपुरान्तकस्य, द-वेतालराजस्य, नै-अग्निजिह्वस्य, प-करालस्य, वा-करालिनः, उ-एकपादस्य, ई-भीमरूपिणः, ऊ-तारकाख्यस्य, पा-हाटकेश्वरस्य, म—राजराजेश्वरस्य । आत्मनो० दिव्यान्तरिक्षभौमोपद्रवनिवारणार्थं भूकम्पोल्कापातग्रहयुद्धाद्युत्पातकृतविविधदुःखाशान्त्यर्थं अद्भुतशान्तिनिमित्ते द्वार्देवता-ग्रहमण्डल-औषधकुम्भ-एकादशक्षेत्रेशपूजनमचामऽहं करिष्ये । एवमेवाऽसनम् । महागणपतये युष्मान्वः पूजयामि । महागणपतिं । अग्निं यविष्ठं, अग्निं वायुं सूर्यं विश्वान्देवान् इन्द्राग्नी अद्भुतशान्तिदेवताः । वरुणं चन्द्रमसं सोमं औषधकुम्भदेवताः । भवंदेवं ८ विष्णुपञ्चायतनदेवताः । इन्द्रंवज्रहस्तं । पू-हेरकं अ-त्रिपुरान्तकं द-वेतालं, नै-अग्निजिह्वं प-करालं वा-करालिनं उ-एकपादं ई,-भीमरूपिणं ऊ-तारकाख्यं

पाताले-हाटकेश्वरं म-राजराजेश्वरं अद्भुतशान्तिदेवताःआवाहयिष्यामि ॥ आवाहनं ॥ (वेदके २ खण्ड के पृष्ठ ९७ पर)। दक्षिणान्तं ॥ ततः पुरोडाशमीनमांसचर्वणादि नैवेद्यं कलशसमीपे नवग्रहेषु पृथक् ॥ अमृतमस्तु सावित्राणि। महागणपतये अग्नयेयविष्ठाय अग्नये, वायवे, सूर्याय, विश्वेभ्योदेवेभ्यः इंद्राग्निभ्यां भवायदेवाय ८ विष्णुपञ्चायतनदेवताभ्यः इन्द्रादिभ्यः ॐनमो आदित्याय ऋषिकश्यपपुत्राय (वेदके प्रथमखण्डं पृष्ठ ११९ पर) ब्रह्मणे कूर्माय। अद्भुतशान्तिदेवताभ्यो अपूपमीनमांसादिबलिं ॐनमो-नैवेद्यं ॥ "अथाग्निकर्म"। पात्रंतिला। अग्निंपरिसमूह्य ९ आदौ पञ्च १६ अग्निकुण्डपूजा (वेद द्वितीयखण्ड के पृष्ट ८३ पर) उत्तरतः संस्तीर्णे। चरुद्वयं। अपूपचरौ। अग्नयेयविष्ठाय अग्नये वायवेसूर्याय विश्वेभ्यो देवेभ्यः इन्द्राग्निभ्यां अद्भुतशान्तिदेवताभ्यः जुष्टंनिर्वपामि। अन्नचरौ। महागणपतये औषधकुम्भदेवताभ्यः भवायदेवाय विष्णुपञ्चायतनादिभ्यः इन्द्रादिभ्यः। पूर्वेहेरुकाय, दक्षिणेवेता जुष्टं निर्वपामि। एवं प्रोक्षामि। आज्यभागान्ते ॥

ततःसर्वौषधिसर्वधान्यसम्भारदियुतं पात्रमेकमप्यानीय तत्पात्रान्तरे समुपहताख्यकर्मण्यऽद्भुते वा शान्त्यै। शमीं शामुकं शाम्यवाकमश्वत्थप्लक्षन्यग्रोधौदुम्बरम्। दूर्वांश्च प्राचीनप्रसृतानि षट्दर्भपिञ्जविष्टर-सुमनश्चाऽपामार्गं सर्वबीजानि सीतालोष्टं गोमयं हिरण्यं वाल्मीकवपांचाद्भिः संसृज्यात्। तद्यथा। ("माषा मुसूरमित्यादि, विधि से (पृष्ठ १ पर)

कूर्चंबनाकर वर्तुलंसूक्ष्मं दृढंच चतुरस्रां भूमिंघृतेन संलिप्य तत्पृष्टे पात्र-मध्ये तप्तघृतस्निग्धसहितं मार्तण्डभवनात्सुतप्तंनीलाश्मानं कूर्चं च संस्थाप्य पूजयेत् ॥ ) संवः सृजामि । अश्विनोः । गायत्र्यैनमः ३ अद्यतावत् अग्नेः प्रजापतेः सोमस्य ईशानस्य आदित्यस्य बार्हस्पतेः मैत्रस्य भगदैवतस्य अर्यम्णः सवितुः त्वष्टुः पूष्णः इन्द्राग्न्योः वायोः वाम-नस्य मित्रस्य भ्रातृव्यस्य वैश्वदेवस्य वासवस्य विष्णोः रुद्रस्य कुबेरस्य आश्विनस्य ब्रह्मणः २४ अश्मदेवतानां आत्मनो॰ दुष्टा-रिष्टभयभङ्गोपद्रवशमनार्थमद्भुतशान्तिनिमित्तं कूर्चस्थगायत्र्यक्षरदे-वतायुत-कूर्चपूजनमश्मपूजनमर्चामहं करिष्ये । दक्षिणान्तं मिष्टान्नं फलादि वा नैवेद्यं । पृथिवीशान्तिरिति पठित्वा पुष्पंक्षिपेत् ॐगा-यत्र्यैनमः ३ अच्छिद्रं ॥ आपन्नोस्मि । नमो ब्रह्मणे ॥ तत ओषधिपात्रमानीय षट्दर्भपिञ्जविष्टरेण मृत्सहितान्यौषधानि चा-लोडयन् "ॐसंव्वः सृजामि हृ १ संय्यावः प्रि-२। पुनः ( वेद-द्वितीयखण्डपृष्ठ ६२ पर) या ओषधयः प्रथमजा–ता नः स्तुता ओषधीः पारयन्तु" इत्यन्तं ऋचः १८) पठेत् ॥ ततः पुरोधाः कूर्चं गृहीत्वा यजमानस्य शिरस्याऽरात्रिकां कृत्वाऽश्मानमुपरि एभिर्वक्ष्यमाणैः प्रतिमन्त्रं त्रिः संघट्टयेत् ( उशनसः काव्यस्यार्षं नैर्ऋ-तिर्देवता त्रिष्टुप्छन्दः प्रोक्षणेविनियोगः ॥ ॐअपस्मादेतु निर्ऋति-रिहास्य अपिकिञ्चन। आगतं राष्ट्रं पाप्मानं सर्वं तदऽपहन्महे १ ( इत्यश्मानं यजमानारात्रिकापूर्वकं संघट्टयेत् ॥ पुनः, अपास्य नैर्ऋता-न्पाशान्मृत्योरेकशतंचये । आपस्य येऽसिना पाशान्मृत्योरेकंशतं

स्रवे २ इति संघट्टयेत् । पुनः, ये ते पाशानेकशतं मृत्यो मर्त्याय हन्तवे । तांस्ते यज्ञस्य मायया सर्वानवयजामहे ३ । इति संघट्टयेत् । शेषेण "देवीमहं" इत्यनेनचाङ्कादध्यात् । देवीमहं निर्ऋतिं बाधमानः पितेव पुत्रान्दमयै वचोभिः । या यजमानस्य जायमानः शिरोदेवीप्रतिसूरिर्विचष्टे ॥ (वेश्मनि चतुरऽङ्कान्दद्यात् ॥) आग्नेय्यां पूर्वाग्रं १ नैर्ऋते दक्षिणाग्रं २ नैर्ऋते पश्चिमाग्रं ३ वायवे उत्तराग्रं दद्यात् ४ इति ततो (पृष्ठे २) "यन्नोभयं, इत्यादि, ऐन्द्राग्नं" तावत्षोडशप्रधानाहुतीरऽपूपचरुणा जुहुयात् ॥ इति प्रथमसंस्कारः । ततोद्वितीयसंप्रोक्षणं पूर्ववत् ॥ अपस्सादेतु निर्ऋति-१ अपास्य नैर्ऋतान्पाशान्-३ । ये ते पाशानेकशतं-३ इति शिरस्यारात्रिकां कृत्वाश्मनि संघट्टयेत् ॥ शेषेण "देवीमहं" इत्यनेन चतुरङ्कान्दद्यात् । पूर्वस्यामुत्तराग्रं १ दक्षिणस्यां पूर्वाग्रं २ पश्चिमायामुत्तराग्रं ३ उत्तरस्यां पूर्वाग्रं ४ दद्यात् ॥ तत अग्निर्मूर्धा १ उभावामिन्द्राग्नी २ अयमिह प्रथमो ३ अयन्ते योनिर्ऋतयो ४ इति धूराख्यैश्चतुर्ऋग्भिः । "स्तोमो देवानां" । उपप्रयन्तो अध्वरं-५ अस्य प्रत्नामनो-६ कदाचनस्तरीरसि-७ परिते दूळभूरतो इत्युपधूराख्यैश्चतुर्ऋग्भिः स्रुवेणाष्टावाज्येनोपहोमो दद्यात् ॥ इति द्वितीयसंस्कारः ॥ ॥ "अथ तृतीयसंस्कारः" ॥ पुनः 'अपस्सादेतु निर्ऋति-१ अपास्य नैर्ऋतान्पाशा-२ ये ते पाशानेकशतं-३ इति संघट्टयेत् ॥ ततो "देवीमहं" इत्यनेन ईशान्यामुत्तराग्रं १ आग्नेय्यांपूर्वाग्रं २ वायव्यामुत्तराग्रं ३ उत्तरे एशान्यग्रं ४ दक्षिणे पूर्वाग्रं ५ ततो भूमौवेश्ममध्ये पूर्वाग्रं कूर्चं ६

दद्यात् सर्वेकूर्चाङ्काः १४ ततः । "देवासुराणाम्" तत्र श्रिये (वेदे १ खण्डपृष्ट २९ पर)-परिते दूळभू इत्यन्तं ऋच २४ "इन्द्रापर्वता" उति दिक्पालानां नवग्रहाणां च पृथक् २ स्रुवेणाज्यहोमः ॥ ततो ""देवीमह"मिति "शन्नो देवी"रिति । "ऊर्जं बिभ्रदित्यन्तैश्च" बाह्याभ्यन्तरेषु वेश्मप्रदेशेषु कूर्चेन चाङ्कान्संप्रोक्षणं च कृत्वाऽथ "शन्नो देवी-१ ऊर्जं बिभ्रद्वसुवनिः सुमेधां गृहानाऽगा मोदमानः स्ववर्चः । अघोरेण चक्षुषाहं शिवेन गृहाणां पश्यन्वयमुत्तरामि ॥ गृहाणामायुः प्रवहन्ति रामागृहानस्माकं प्रातरन्त्वायुः २ ॥" "आभ्यामृग्म्यां शेषेण सौषधिमृज्जलेनगृहद्वारोपरि धारापातं कुर्यात् ॥ ततो "येन देवा" इति कूर्चेन यजमानस्य मृत्तिलकं कार्यम् ॥ येन देवा ज्योतिषोर्ध्वा उदायय येनादित्या वसवो येन रुद्राः । येनाङ्गिरसो महिमानमानशुस्तेनैतु यजमानाय स्वस्ति ॥ इति कूर्चविधिः ॥ ( ततो ग्रहशान्तिमारभेत ॥ ) आदौ समिद्भिरेकचक्रहोमः । तेजोसि, "अग्निर्हिरण्यं, सोमो हिरण्यं" इति चतुर्गृहीतेनोत्तरादक्षिणाघारावाज्यभागौ ॥ ( वेदे १ खण्डपृष्ठ ३६। पर ) एकचक्रं-सीदन्निहोता यजथाय सुक्रतु"रित्यन्तं ऋचः १८ हुत्वा ततो ध्यानं । निष्वसीद गणपते-वषट्कृते विष्ण तावत् । प्रधानं योरुद्रो अग्नौ० भवायदेवाय० इमं मे गङ्गयमुने-६ वरुणाय-विष्णु-पञ्चायतनदेवताभ्यः । इन्द्रापर्वता । पूर्वे हेरकाय । ऐन्द्राग्नं । एवमेवैकचक्रसहितमन्नहोमंकृत्वा "पशूपहारः" ॥ ( वेदे १ खण्ड-पृष्ठे १२६ ) एवमेकचक्रयुतमाज्यहोमं कृत्वा "आदित्यस्तेजस्वी"

( वेदके प्रथम खण्डपृष्ठ ३८ पर) इत्येकचक्रोपहोमान्स्रुवेणाज्येनाज्यं-द्वष्ट्वा २ जुहुयात् ॥ ततो "आदित्या रुद्रावसवो ( वेदे १ खण्ड-पृष्ट ३९ पर ) भुवनस्याधिपतये" इत्यन्तं ग्रहेष्टब्राह्मणं पूर्णां विना हुत्वाऽथ "अग्नेर्देवा इहावह वेदे, खण्ड पृष्ठ ४२ पर ) यमो दाधार २ "इत्यन्तं नक्षत्रयज्ञं च सर्वं हुत्वा ( "पूर्णां" ) "तेजोसि" आगस्त्यस्यैतत्सूक्तं" इत्यनेनग्रहेष्टब्राह्मणान्तेन जुहु-यात् ॥ तर्पणम् ॥ आत्मनो दुष्टारिष्टभयोपशान्त्यर्थमद्भुतशान्ति-निमित्तं समिदन्नाज्याहुतिभिः प्रीयन्तां प्रीताः सन्तु ॥ ॥ "अथ यवतिलतुण्डलहोमः" । ॐकारो यस्य मूलं-( गायत्री-ब्राह्मणं सूक्तानि १ विष्णुपञ्चक रुद्रपञ्चकदेवीपञ्चकरक्षोघ्नसू-क्तादि हुत्वा पूर्णां तावत्। अग्नेर्यविष्टस्य अग्नेः वायोः सूर्यस्य विश्वे-षान्देवानां इन्द्राग्न्योः अद्भुतशान्तिदेवतानां आत्मनो० अर्चामहं करिष्ये, दक्षिणान्तं ॥ आश्रावितं ॥ विमुच्य । नयामि । वैश्व-देवादि नित्यकर्म ॥ कलशपृच्छां विसर्ज्य । आपन्नोसि । अहिंस-कस्यदान्तस्य ( वेद १ खण्डपृष्ठ १२० ) आह्वानं । उभाभ्यां १ नमोब्रह्मणे । औषधकुम्भस्य जलं कलशान्तरे क्षिप्त्वा । उदकलशं १ स्वरास्त्वामभिषिञ्चन्तु ( वेद १ खण्डपृष्ठ १०९ ) भुक्त्वापीत्वा-वेश्माऽतिक्रम्याश्मानं ( गृहोपरि ) क्षिपेत् ॥ कूर्चं गृहमध्ये निक्षि-पेत् ॥ इत्यऽद्भुतशान्तिः संपूर्णा ॥

---

## अथ गणेशचतुर्थीव्र० "वा" चतुर्दशीव्रतोद्यापनम् ।

अश्मचूर्णेन ग्रहमण्डलं तद्दक्षे त्रयोदशकलशान् मध्ये गणेशप्रतिमाकलशं वेदचतुष्टयीं क्षेत्रेशद्वयं च संस्थाप्य ॥ प्रधानं । अग्नयेनमः ६ । गणानान्त्वा- । विनायकायनमः ८ त्रयोदशकलशेषु । गणानान्त्वा गणपतिं[1] । ससुष्टुभा[2], अग्निरुक्तेषु[3] । उत्तिष्ठ ब्रह्मणस्पते[4] । अर्यमाऽयातु[5] । येते अर्यमन्[6] । अस्मे इन्द्राबृहस्पती[7] । ब्रहस्पतिर्नः परि[8] । हिरण्यगर्भः सम[9] । यः प्राणतो[10] । उदुत्यञ्जा[11] । चित्रन्देवानां[12] । तरणिर्विश्वदर्शतो[13] । मध्ये । दिवो रुक्मो[14] । (वेदे १ खण्डे८७) "गणानान्त्वा" इतिसूक्तर्चः क्रमेण क्षिपेत् ॥ पुनः । भीमस्वामिने,[1] भीषणाय[2], विघ्नेशाय[3], दीर्घनासिकाय[4], गणराजाय[5], । शुभाननाय[6], गणेशाय[7], विरूपाय[8], त्रिनेत्राय[9], मन्मथाय[10], विष्वक्सेनाय[11], वरदाय[12] महाहेरम्बाय[13], मध्ये । सर्वकामप्रदायिन्यै अम्बिकायै[14]नमः । ॐग्लूंगंगणपतयेनमः ॥ वेदचतुष्टये । प्रतद्विष्णु, (वा) यो रुद्रो अग्नौ । तद्विष्णोः । विष्णुपञ्चायतनदेवताभ्योनमः । इन्द्रा पर्वता । ऐन्द्राग्नं ॥

॥ यजमानमानीय ॥ अनाभो । हृदि, गणानान्त्वा । ललाटे, निष्वसीद गणपते । मूर्ध्नि, त्र्यम्बकं यजा । कवचाय, योरुद्रो-अग्नौ । नेत्राभ्यां, चित्रन्देवानां । अस्त्रायफट्, रक्षोहणं ॥ गणानान्त्वा गणपतिं हवामहे, हृदयायनमः । कविङ्कवीनां, शिरसेस्वाहा । उपमश्रवस्तमं, शिखायै । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत, कवचाय । आनःशृण्वन्, नेत्राभ्यां । ऊतिभिःसीद

सादनं, अस्त्रायफट् । ॐगांहृ । ॐगी, गूं, गैं, गौं, गः, अस्त्रायफट् ॥ गणनांन्त्वा, शिरसि । देवश्चित्ते, ललाटे । अविबाधा, नेत्रयोः । सुनीतिभिर्व, श्रोत्रयोः । नतमंहोन, नासिकायां त्वन्नो गोपा पथि, मुखे । उत वायो नो, कण्ठे । त्रातारन्तां तनूनां, दक्षिणस्कन्दे । त्वया वयं सद्य, वामस्कन्दे । त्वया वयमुत्तमं, सव्यहस्ते । अनानुदो वृषभो, वामहस्ते । बृहस्पते मा पृणक्तु, हृदि । विश्वायदऽर्यो, नाभौ । बृहस्पते अति, गुह्ये । मानस्तेनेभ्यो, लिङ्गे । विश्वेभ्यो हित्वा, ऊर्वोः । तवश्रिये, जानुनोः । बृहस्पते त्वमस्य, पादयोः ॥ ॥ तीर्थेस्त्रेयं । यत्रास्ति माता । जीवादानं ॥ ॐभूः पुरुषमाऽवाहयामिनमः ३ तत्पुषाय विद्महे, वक्रतुण्डायधी, तन्नोदन्ती ३ अद्यतावत् । महागणपतेः । अग्नेः, वायोः ६ । विनायकस्य । विकटाननस्य, वक्रतुण्डस्य, विघ्नराजस्य, तथा । भीमस्वामिनः, भीषणस्य, विघ्नेशस्य, दीर्घनासिकस्य, गणराजस्य, शुभाननस्य, गणेशस्य, विरूपस्य, त्रिनेत्रस्य, मन्मथस्य, विष्वक्सेनस्य, वरदस्य, महाहेरम्बस्य, सर्वकामप्रदायिन्याः अम्बिकायाः, महागणपतेः । चतुर्वेदेश्वराणां । विष्णुपञ्चायतनदेवतानां । इन्द्रस्यवज्रहस्तस्य । हेरुकादीनां । आत्मनो । गणेशचतुर्थीव्र० "वा" गणेशचतुर्दशीव्रतोद्यापननिमित्ते, कलशपू० गणेशपू० चतुर्वेदेश्वरपू० क्षेत्रेश्वरपूजनमऽर्चामऽहंकरिष्ये ॐकुरुष्व ॥ देवश्चितेध्रुवाद्यौः, इत्यासनम् । महागणपतये युष्मान्वः पूजयामि ।

गणनान्त्वा—युञ्जते मान, महागणपतिं, आवाहयिष्यामि ॐआ-
वाहय। आवाहनं। ( वेदे २ खण्डे पृ. ८९ ) आविवाध्या—हिरण्य-
वर्णा ४, इति पाद्यं। स्वर्नीतिभिर्न। आपो हिष्ठा इत्यर्घ्यं। नत-
मोहनं, शन्नआपो इत्याचनीयं। त्वन्नो गोपा-इदमापः, इतिमन्त्र-
स्नानीयं॥ पयोदधि। एकविंशतिस्नानानि। षोडशस्नानानि।
चतुर्दशस्नानानि। देवर्षिपितृतर्पणम्। उतमायो नो, मन्नगुडकं।
रक्षोहणं, आरात्रिका। त्रातारन्ता तनूनां, नेत्रस्पर्शनम्॥ ध्रुवा
द्यौ, आसनायनमः। मध्यकलशेसंस्थाप्य। रथेअक्षेषु, अनुलेपनं।
त्वया वयं सुवृधा-युवासुवासः वस्त्रं। त्वयावयमुनमं-कयान-
श्चित्र, यज्ञोपवीत। अनानुदो-गन्धद्वारं इतिचन्दनं। बृहस्पते
माप्र-पुष्पवती अर्घोनमः रक्तपुष्पाणि॥ पूर्वे लम्बोदरायनमः। आ-
ग्नये, गणराजाय। दक्षिणे, विकटाननाय। नैर्ऋते, भीमाय।
पश्चिमे, विघ्नेशाय, वायवे दीर्घनासाय। उत्तरे, गजराजाय।
ईशाने, विष्वक्सेनाय मध्ये, हेरम्बायअर्घोनमः पुष्पंनमः। विश्वा
यदऽर्यो-धूरसि, धूपंनमः। बृहस्पते अति-तेजोसि, रत्नदीपं, चाम-
रादि। दीपोनमः। चन्द्रमामनसोजातः, हिरण्यगर्भः, पायसमो-
दकापूपान्। विश्वेभ्यो हित्वा, नाभ्या आसीत्, कुसुमाञ्जलिः।
तवश्रिये, त्रीणिप्रदक्षिणानि। बिभ्रद्दक्षिणहस्तपद्म, पुष्पं। दक्षि-
णान्तं।॥ अथाऽग्निकर्म॥ पात्रं तिला। आज्यभागान्ते। समि-
द्धोमः। गणानां त्वा १०८। निष्वसीद गणपते॥ प्रदानं॥ ऐन्द्राग्नं
एवं, अन्नाऽज्यहोमौ कृत्वा। तर्पणं॥ पुनः समिधां सँहँस्रं "गणा-

नान्त्वा" तर्पणं। विष्णुपंचकं, तर्पणं कूष्माण्डं हुत्वाऽज्येन प्रधानं। अग्नयेस्वाहा। ततोरुद्रजपं यथाविस्तरं जप्त्वा। यवतिलहोमः। ओंकारोयस्य मूलं। सूक्तानि च हुत्वा। रुद्रपञ्चकदेवीपञ्चकरक्षोघ्नमन्त्रान् हुत्वा। ऋतुतिथिः। इळाभागं, वैश्वानरायेतितर्पणम्। पूर्णां यावत्। प्रभाते स्नानादि कृत्वा संक्षेपतो गणेशादि पूजां कृत्वा। आज्यदर्शनं॥ गोप्रदानं। ब्राह्मणपूजनं दक्षिणान्तं। कलशान्विसृज्य। आपन्नोऽस्मि॥ गणेशप्रतिमायां। विनायक नमस्तेऽस्तु भालचन्द्राय वै नमः। कृष्णपिङ्गलवर्णाय गजानन नमोऽस्तुते[१]॥ लम्बोदर नमस्तुभ्यं भालचन्द्राय ते नमः। हेरम्बाय नमस्तुभ्यं नमो विकटनासिके[२]॥ नमस्ते वक्रतुण्डाय नमश्चाऽखुरथाय च। विघ्नराज नमस्तुभ्यं गणराजाय ते नमः[३]॥ मध्ये तु प्रतिमा पूज्या गणेशस्याऽम्बिकायुता। नमस्ते गणराजाय नमस्ते चण्डविक्रमे[४]॥ गणेशाय नमस्तुभ्यं विघ्नान्तक नमोऽस्तुते[५]। गाङ्गेयाय नमस्तुभ्यं गणेश्वर नमोऽस्तुते[६]॥ गजानन नमस्तुभ्यं टङ्कधारिन् नमोऽस्तुते। गणाध्यक्ष नमस्तेऽस्तु नमस्ते विकटानने[७]॥ लम्बोदर नमस्तेऽस्तु मदोत्कट नमोऽस्तुते। जम्बुकाय नमस्तुभ्यं हेमकुम्भ नमोऽस्तुते॥ नायकाय नमस्तेऽस्तु विघ्नेशाय नमोनमः। विश्वरूप नमस्तेऽस्तु घटोदर नमोनमः[८]॥ नमो मन्मथनाशाय भीमस्वामिन्नमोस्तु ते। त्रिनेत्राय नमस्तुभ्यं वामनाय नमोनमः[९]॥ लम्बोष्ठाय नमस्तुभ्यं शूर्पकर्णाय वै नमः। वरदाय नमस्तुभ्यं

भीमरूप नमोनमः ॥ हेरम्बाय नमस्तुभ्यमेकदन्ताय वै नमः ।
लम्बोदर नमस्तुभ्यं वरदाऽनन्ददायिने[११] ॥ ततस्त्रयोदशकलशेषु ॥
लम्बोदरैकवदनः कमलासनस्थश्चन्द्रार्धमौलिरऽमलोभुजगेन्द्र-
हारः । भीमोऽष्टबाहुरुदितार्कमरीचिरिष्टिसिद्धिप्रदो भवतु
वाञ्छितसिद्धियोगः ॥ वन्दे वराऽभयपिनाककपालशूलखट्वांग-
हस्तमुसुलान्तकरं त्रिनेत्रम् । भीमं जटामुकुटिनं कमलासनस्थं
कश्मीरवासमऽरुणं गजराजमाऽद्यम्[२] ॥ रक्ताङ्गरागं परश्वऽक्ष-
मालां सुदन्तपाणिं सितलड्डुपात्रम् । गजाननं सिंहरथाधिरूढं
गणेश्वरं विघ्नहरं नमामि[३] ॥ जटामुकुटमण्डितं त्रिनयनं परं
षड्भुजं सतीसरनिवासिनमऽसुरनाशनं लोहितम् । वराऽभय-
पिनाकिनं त्वसिकपालिनं शूलिनं गणैः परिवृतं परं सपदि
नौमि भीमाकृतिम्[४] ॥ लाक्षासिन्दूरवर्णं सुरवरं ॥ बिभ्रद्दक्षिण-
हस्तपद्मयुगले[६] ॥ माता यस्य शिवा पिता पशुपतिर्भ्राता मयूर-
ध्वजः, स्तोतारश्चतुराननादिमरुतश्चक्रायुधो मातुलः । ब्रह्मान-
न्दमयं वपुः सहचरो भृगुर्गणाधीश्वरः शक्ताः किं तव सद्गुणा-
न्नरपतेः स्तोतुं वयं जन्तवः[७] ॥ संसिद्ध्यर्थनमत्सुराऽसुरमिल-
न्मौलिस्थितिप्रोल्लसत्सद्रत्नप्रभवप्रकृष्टविविधप्रेङ्खन्मयूरोज्ज्वलम् ।
श्रेयो विघ्नमहामयप्रशमने दिव्यं यदेकौषधं भूयान्नोद्विर-
दाननाङ्घ्रिकमलद्वन्द्वं तदिष्टाप्तये[८] ॥ सिन्दूरकुङ्कुमहुताशन[९] ॥
मूषकवाहनमोदकहस्तं चामरकर्णविलसितगात्रम् । वामनरूपं
महेश्वरपुत्रं विघ्नविनाशकरं च नमस्ते[१०] ॥ अभयवरदपाणि

सोदपात्रं सदन्तं नरशिरजपमालानागयज्ञोपवीतम् । मणिक-नकविचित्रभूषणं बाहुपद्मैर्मुसुलपरशुधारं विघ्नराजं नमामि[११]॥ गजाननं भूतगणाधिसेवितं कपित्थजाम्बूरससालभक्षितम् । उमाप्रियं शोकविनाशकारकं नमामि विघ्नेश्वरपादपङ्कजम्[१२] ॥ अभिप्रेतार्थसिद्ध्यर्थं पूजितो यः[१३]॥ आह्वानं ॥ उभाभ्यां । ततः कलशान्प्रतिपादयेत् ॥ सावित्राणि, अद्यतावत् आत्मनो० यथोक्त-फलप्राप्त्यर्थं, चतुर्थी "वा" चतुर्दशीव्रतोद्यानिमित्ते क्रमेण भीमस्वामिकलशं[१], भीषणं[२], विघ्नेशं[३], दीर्घनासिकं[४], गणराजं[५], शुभाननं[६], गणेशं[७], विरूपं[८], त्रिनेत्रं[९], मन्मथं[१०], विष्वक्सेनं[११], वरदं[१२], महाहेरम्बकलशं[१३] सहिरण्यं सवाससं सान्नं सलवणं तत्तद्रू-पाय ब्राह्मणाय ददानि ३ प्रतिगृह्णामि ३ ॥ "क इदं कस्मै अदात्" ततो होत्रे प्रतिमां प्रतिपादयेत् ॥ सावित्राणि० अद्यतावत्, आत्मनो० यथोक्तफलप्राप्त्यर्थं चतुर्थी "वा" चतुर्दशीव्रतोद्या-पननिमित्ते गणेशरूपाय ब्राह्मणाय इमांगणपतिप्रतिमां[१४] सहिरण्यं० ददानि ॥ दध्यऽक्षततिलैर्विप्रहस्ते तर्पणं । ये चरन्ति सदा मेरौ ब्रह्मणाधिष्ठिताः सुराः । तृप्तिमायान्तु ते सर्वे, चतुर्थ्युद्यापनाद्विभो ॥ (वा) चतुर्दशीव्रताद्विभो[१] ॥ नागलोकगता येच हाटकेश्वरतत्पराः । तृप्ति[२] ॥ अत्रिर्वसिष्ठः पुलहः कश्यपो गौतमो भृगुः । तृप्तिमा[३] ॥ च्यवनो व्याघ्रपाद्विष्णुर्देवलो लोमहर्षणिः । तृप्ति[४] ॥ कश्यपो वै दीर्घतपाः पाराशर्यपराशरौ । तृप्तिमा[५] ॥ विश्वामित्रोऽथ जाबालिर्भारद्वाजश्च शौनकः । तृप्ति[६] ॥ कण्ठोपवीती । सनन्दः

पिपिलादश्च वोढा पञ्चशिखस्तथा । तृप्ति ॥ यज्ञवल्कयो मनु-र्दक्षः सनकात्रिमरीचयः । तृप्ति ॥ लौगाक्षिः कपिलः काण्वो हारितो जमदग्नयः । तृप्ति ॥ आपस्तम्बः सुमन्तुश्च बौधायन-वलायनौ । तृप्ति ॥ अपसव्येन ॥ पिता पितामहश्चैव तथैव प्रपितामहः । तृप्ति[११] ॥ माता पितामही चैव तथैव प्रपितामही । तृप्ति[१२] ॥ श्वश्रूः स्वसा गुरुपत्नी भार्या मित्रं च बन्धवः । तृप्ति[१३] ॥ ये मत्कुल्याः स्वर्गलोके नरके वा वसन्ति ये । तृप्ति[१४] ॥ अवीच्यन्तर्गता येच कुम्भीपाके च ये स्थिताः । तृप्तिमायान्तु ते सर्वे चतुर्थ्युद्यापनाद्विभो[१५] ॥ सव्येन । नमो देवेभ्यः० ॥ अक्षय्यं एता देवता ॥ ब्राह्मणपृच्छां विसर्ज्य ॥ आश्रावितं । वैश्वदेवादि । क्षेत्रेशबलिः ॥ कलशपृच्छां विसर्ज्य । आपन्नोसि । आरोग्यं तरुणि । यदक्षरपद । नमो ब्रह्मणे । उदकलशं । मन्त्रार्थः । तृणासनादिप्रतिपादनम् ॥ इति महागणपतिव्रतोद्यापनम् ॥

---

## अथ पञ्चमीव्रतोद्यापनं लिख्यते ॥

ॐउद्यापननिरुक्तिः ॥ संसारेऽस्मिन्नुच्चैः स्थानं च धत्ते तारयति नरकानां च समूहान् । यन्नाकं च प्रापयत्येव मर्त्यानुद्यापनं कथ्यते शास्त्रविद्भिः ॥ उत् मायातमस उद्धृत्य प्रकाशानन्दमयं परमात्मानं दुःखार्तं जीवात्मानं प्रापयतीति उद्यापनम् ॥ जाम्बूनदस्य कालुष्यं परिशुद्धेद्यथाऽग्निना । अनाचारस्य मालिन्यं प्रायश्चित्ताग्निना दहेत् ॥ आदौ गोमयेन पञ्चगव्येन भूमिमुपलिप्य

रात्रौ जागरणमुपवासंहोमं च कुर्यात्। चतुर्थ्यां सायं अश्मचूर्णेन ग्रहमण्डलं तद्दक्षे नवदलपद्मं तन्मध्ये सौवर्णसरस्वतीप्रतिमाकलशं वेदचतुष्टयं क्षेत्रेशद्वयं च संस्थाप्य, । अग्निनो देवी-वषट् ते विष्ण तावत् । प्रधानं। अग्नयेनमः ६ सरस्वतीन्देवयन्तो । सरस्वत्यभिं पावकानः नवदलकलशेषु । सरस्वतीन्देवयन्तो इति । प्रक्षोदस इति वा। शुक्रसूक्तेन अथवा। लक्ष्म्यै नमः, धरायै, पुष्टयै गौर्यै तुष्टयै प्रभायै मत्यै मध्ये श्रीसरस्वत्यै इति नामभिः पुष्पं क्षिपेत्। वेदचतुष्टये। वेदचतुष्टये। योरुद्रोअग्नौ ॥ विष्णुपञ्चायतनदेवताभ्यः । इन्द्रापर्वता। ऐन्द्राग्नं। सावित्राणि महागणपतये लक्ष्म्यै ९ नैवेद्यं। हिरण्यगर्भः । अर्चन्तस्त्वा॥ यजमानमानीय ॥ अनाभौ ततो द्वितीयन्यासः। सरस्वतीन्देव–हृदया । सरस्वत्याभिन-शिरसे–। पावकानः-शिखायै। चोदयित्री-कवचा। महोअर्णःस-नेत्राभ्यां। दिव्यं सुपर्ण-अस्त्रायफट्॥ ततस्तृतीयोन्यासः। प्रक्षोदसा-पादयोः । एका चेतत्जान्वोः। सवाव्रधे ऊर्वोः। उतस्याना-सरस्वती-नाभौ। इमा जिह्वाहृदि। अयमुतेम-कण्ठे। बृहदुगायि-बाह्वोः। उभेयत्तेम-मुखे। भद्रमिद्भद्रा-श्रवणयोः। जनीयन्तो नेत्रयोः। येतेसरस्वऊर्मयोललाटे। प्रपिपीवासं-शिरसि ॥ तीर्थे स्नेयं। दीपधूपौ संकल्प्य । जीवादानं। देहवद्देवस्य न्यासं। ॐभूःपुरुषमाऽवाहयामिनमः ३ । ॐतत्सवितुः ३ अद्यतावत् महागणपतेः अग्नेः ६ लक्ष्म्याः ९ । विष्णुपञ्चायतनदेवतानां। चातुर्वेदेश्वराणां इन्द्रादीनां हेरुकादीनां आत्मनो-

यथोक्तफलप्राप्त्यर्थं सरस्वतीप्रीत्यर्थं पञ्चमीव्रतोद्यापननिमित्तं सरस्वतीपूजनं कलशपूजनमऽर्चामऽहं । ध्रुवाद्यौ । एकाचेतदित्यासनं । सरस्वत्यै युष्मान्वः पूजयामि । युञ्जते मान । प्रक्षोदसा आवाहनं । एहि सरस्वतीदेवि सर्वशास्त्रवतीस्थिता । दिव्यप्रसादकर्त्री त्वं भुक्तिमुक्तिफलप्रदा । सरस्वतीमावाहयिष्यामि ॥ प्राणायामः ॥ शन्नोदेवी । लाजाश्व । सवावृधे । हिरण्यवर्णा इतिपाद्यं । उतस्याना । आपोहिष्ठेत्यर्घ्यं । इमाजिह्वानां- । शन्न आपो इत्याचमनीयं । अयमुतेम । इदमापः इति मन्त्रस्नानीयं । एकविंशतिस्नानं । षोडशस्नानं । शुक्रसूक्तद्वयेनस्नानं । देवर्षिपितृतर्पणं । सरस्वतीदेवनिदो । मन्त्रगुडुकम् । प्राणो देवीस प्रषी पार्थिवां । त्रिषदस्था सप्तधातुरित्यारात्रिका ॥ यस्त्वादेवीस । नेत्रस्पर्शनं । रथेअक्षेषु । प्रियामहिम्ना । चिकितुषासरस्वती, तावत् अनुलेपनं । ध्रुवाद्यौरिति प्रतिमां मध्यकलशे संस्थाप्य । त्वन्देवि सरस्वती । युवासु इतिवस्त्रं । उतस्यानः सरस्वती । घोरा हिरण्यवर्तनिः । यज्ञोपवीतं । बृहदुगायशोवर्चो । गन्धद्वारमितिगन्धः । उभेयत्ती महिना । पुष्पवती । शुक्रसूक्तद्वयेन च प्रतिमायां पुष्पं । भद्रमिद्भद्रा । धूरसि । इतिधूपं । जनेयन्तोनु । तेजोसि । रत्नदीपचामरव्यञ्जनादर्शादि । धूपोनमः वासोनमः । अर्घ्यदानाद्य । येते सरस्वन्नूर्मयो । हिरण्यगर्भः । नैवेद्यं । पिपिवांसंसरस्वतः, इति कुसुमाञ्जलिः । इयं शुष्मेभिर्बिसखा एकप्रदक्षिणं । इयमऽददाद्रभसानोविश्वा । पुष्पं क्षिपेत् ॥ अद्यदिने दक्षि-

णान्तं ॥ अथाऽग्निकर्म ॥ पात्रं तिला । अग्निं परिसमूह्य ९ परिस्तीर्य निर्वपणप्रोक्षणे आज्यभागान्तं । आदौ समिद्धोमः । पावकानः १०८ निष्वसीद प्रधानं । सरस्वतीदे[1], सरस्वत्याभि[2], पावकानः[3], शुक्रसूक्तद्वयं यजेत् ॥ लक्ष्म्यैस्वाहा ९ इन्द्रापर्वता । ऐन्द्राग्नं । ततोऽन्नहोमः । सरस्वतींदेवयन्तो १०८ पूर्ववत् प्रधानादि । ततआज्येन । सरस्वत्याभिनोनिषि १०८ पूर्ववत्प्रधानादि तर्पणम् । विष्णुपञ्चकं । तर्पणं । ततः कूष्माण्डहोमः । आज्येन । अग्नये ६ स्वाहा ॥ ततोयवतिलहोमः । ओंकारोयस्य मूलं । ऋतुपतिं हुत्वा । प्रायश्चित्तस्थानकं । तर्पणं । तद्विष्णोः० । इन्द्रापर्वता । सूक्तानि । यथाविस्तरं पृथक्तर्पणम् । ततो रुद्रपञ्चकं । देवीपञ्चकं । रक्षोघ्नमन्त्राः । तर्पणं । ऋतुतिथिः । नैवेद्यम्-इळाभागं । वैश्वानरायेत्युपस्थानं । यद्देवाइत्यञ्जलिः वैश्वानरायेति तर्पणं । हुतमेक्षणं । पूर्णान्तं । पञ्चम्यां प्रातःस्नात्वा सूक्ष्मप्रकारेण मण्डलपूजनं दक्षिणान्तं । नैवेद्यं । ततो गोप्रदानं । ब्राह्मणपूजनं दक्षिणान्तं । ततः कलशानां पृच्छां सम्पाद्य । पूर्ववत्क्रमेण ॥ ततः क्षमाश्लोकाः ॥ पद्मपत्रविशालाक्षि पद्मकेसरमालिनि । नित्यं पद्मासने देवि सरस्वति नमोऽस्तुते ॥ १ ॥ पद्मवर्णा जपेत्पद्मां पद्माक्षीं पद्मवासिनीम् । पद्मद्वयवराभीष्टभास्वत्पाणिचतुष्टयाम् । २ । सरस्वतीं श्रियं- देवीं हीनबुद्धिप्रबोधिनीम् । सरस्वतीहितार्थाय सिद्धिधात्रीं सरस्वतीम् । ३ । या सा देवी जगन्माता सर्वभूतानुकम्पिनी । सरस्वती च विख्याता हीनबुद्धिप्रबोधिनी । ४ । सरस्वति

महाभाग्ये वरदे कामरूपिणि । विश्वरूपे विशालाक्षि देहि विद्यां प्रसीदमे । ५ । शारदा वरदादेवी मोक्षदात्री सरस्वती । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥ या देवी स्तूयते नित्यं ब्रह्मेन्द्रसुरकिन्नरैः । सा मे वसतु जिह्वाग्रे पद्महस्ता सरस्वती । पद्माधिरूढां सुसितां त्रिनेत्रां । ८ । या कुन्देन्दु-तुषारहारधवला या श्वेतपद्मासना या वीणावरदण्डमण्डित कराया शुभ्रवस्त्रावृता । या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ९ दोर्भिर्युक्ता चतुर्भिः स्फटिकमणिमयीमक्षमालां दधाना हस्तेनैकेन पद्मं सितमपि चषकं पुस्तकं चापरेण । या सा कुन्दे-न्दुशङ्खस्पटिकमणिनिभा भासमाना समन्तात्सा मे वाग्देव तेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥ १० ॥ या श्रीर्वेद-मुखी तथा फलमुखी नित्यं च निद्रामुखी नानारूपधरी तथा जयकरी विद्याकरी शङ्करी । गौरी पीनपयोधरी रिपुहरी माला-धरी सुन्दरी सा मां पातु सरस्वती भगवती निःशेषजाड्या-पहा ॥ ११ ॥ इति प्रतिमायां पुष्पं क्षिपेत् ॥ परंब्रह्मात्मिकां देवीं भुक्तिमुक्तिप्रदायिनीम् इत्यादि सरस्वतीस्तोत्रैः पुष्पं क्षिपेत् । अभेदं चाऽतिदम्पत्योर्धनं विद्यां तपोधिकम् । आयुश्च विपुलां कीर्तिं देहि देवि सरस्वति । ततः कलशान्प्रतिपादयेत् । सवित्राणि अद्यतावत् । आत्मनो वाङ्मनः० यथोक्तफलप्राप्त्यर्थं पञ्चमीव्रतोद्यापननिमित्तं सरस्वतीप्रीत्यर्थं लक्ष्मीकलशं सहिरण्यं

सवाससं सान्नं ददानि ३ प्रतिगृह्णामि ३ एवं क्रमेण सर्वान्कलशान्प्रतिपादयेत् ॥ ततोहोत्रे । प्रतिमां प्रतिपादयेत् । सावित्राणि अद्यतावत् आत्मनो० यथोक्तफलप्राप्त्यर्थं पञ्चमीव्रतोद्यापननिमित्तं सरस्वतीप्रीत्यर्थं इमां प्रतिमां सहिरण्यं ददानि ३ । प्रतिगृह्णामि ॥ ततो दध्यक्षततिलैस्तर्पणम् । येचरन्ति सदा—पञ्चभ्युद्यापनाद्धरे । ( पृ० १५ ) ॥ ततोऽक्षय्यम् एता देवताः । ततो ब्राह्मणपृच्छां सम्पाद्य पूर्णां दत्वा । अग्निं विसृज्य । ततोवैश्वदेवादि नित्यकर्म । ततो गोग्रासादि । क्षेत्रेशबलिः । आरोग्यं तरणिः । नमो ब्रह्मणे । उदकलशं । मन्त्रार्थाः । अनन्तशाख । तृणासनादि प्रतिपादयेत् ॥ इति पञ्चमीव्रतो द्यापनम् ॥ २ ॥

## अथ कार्तिकमासोद्यापनम् ॥ ३ ।

अश्मचूर्णेन ग्रहमण्डलं तद्दक्षे षोडशकलशान्मध्ये मासपतिविष्णुप्रतिमाकलशं तद्दक्षे चतुर्वेदेश्वरान्क्षेत्रेशद्वयं च संस्थाप्य ॥ प्रधानं । कलशो । अग्नयेनमः वायवे[६] । आप्यायस्व समेतु[१] । सन्ते पयांसि[२] । तद्वि[३]ष्णोः । श्रीश्चतेलक्ष्मी[४] । तदेवाग्निस्तद्वायु[५] । सर्वे निमेषा जज्ञिरे[६] । उदुत्तमं[७] । मक्षूदार्ता । भूयोजातो[९] । देवानां पंती[१०] । याते धामानि[११] । या ते धामानि हविषा[१२] । सोमो राजामृतं[१३] ॥ चन्द्रायनमः, वरुणाय, कुमाराय, खड्गाय नमः । महिमासहिताय दामोदरायनमः ॥ सहस्रशीर्षा १६ कार्तिकोद्यापनदेवताभ्यो नमः । चन्द्रमण्डलकलशेषु ॥ स्वादोपञ्चोना इतिसूक्तेन (वेदे १ खण्डे पृ ६१) पूर्वादित एकैकर्चा एकैकपुष्पं ॥ पुनः । रोहिणीसहिताय चन्द्र-

मसे । रेवतीस-उडुपतये[2], क्षणदास-रजनीपतये[3], तारास-निशा-
कामुकाय[4], चन्द्रिकास-ज्योत्स्नापतये[5], रमणीस-ओषधीशाय[6],
रामास-जैवात्रिकाय[7], अमृतास-सुधांशवे[8], यशोवतीस-अमृतक-
राय[9], शोभास-अब्जाय[10], महाश्वेतास-शशाङ्काय[11], कृत्तिकास-
कलानिधये[12], परमामृतास-वृषाङ्कभूषणाय[13], आह्लादास-अमृत-
बान्धवाय[14], कलाभूषणास-शुक्लदेवाय[15], अमृताख्यास-नित्यामृत
मयाय[16], ॥ पुनः ॥ पूर्णोनमः[1], यशसे[2], सौमनसे[3], प्रीत्यै[4], तुष्टिकर्यै[5],
धृत्यै[6], वृद्धिकर्यै[7], सौम्यै[8], मरीच्यै[9], अंशुमालिन्यै[10], शशिन्यै[11],
मोहिन्यै[12], लक्ष्म्यै[13], च्छायायै[14], सम्पूर्णमण्डलायै[15], अमृताख्या-
यैनमः[16] ॥ चतुर्वेदेश्वरेभ्योनमः । वासुदेवायनमः ८ विष्णुपञ्चा-
यतनदेवताभ्योनमः । ऐन्द्राग्नं ॥पुनः॥ यजमानमानीय ॥ आस-
नशोधनादि । अनाभौ । पुरुषसूक्तन्यासः ॥ वामकरे । स्वादो-
रभक्षि[1] । दक्षिणकरे, अन्तश्च प्रागा[2] । वामपादे, अपाम सोम[3] ।
दक्षिणपादे, शन्नोभव[4] । वामजानौ, इमे मा पिता[5] । दक्षिणजानौ,
अग्निर्नमा[6] । कट्यां, इषिरेण ते[7] । गुह्ये, सोम राजन्[8] । नाभौ,
त्वं हि नस्तन्वो[9] । उदरे, ऋदुदरेण[10] । ग्रीवायां, अपत्या अस्तु[11] ।
वामस्कन्दे, यो न इन्दो[12] । दक्षिणस्कन्दे, त्वं सोमपितृभि[13] । मुखे,
त्रातारो देवा[14] । नेत्रयोः, त्वन्नः सोम[15] । दक्षपादे, त्वं सोमासि
सत्पतिः[16] । वामपादे, त्रातारोदेवा[2] । जङ्घयोः, अग्निर्नमा । दक्ष-
जानौ, अयङ्कतुरगृभीतो विश्वजिदुद्भिदित्सोमः । ऋषिर्विप्रः
कव्येन ॥ वामजानौ, त्वं सोमतनूकृद्भ्यो द्वेषो मनकृतेभ्यः ।

तद्वयन्तमिव रूथम् ॥ ऊर्वोः, त्वं चित्वीतवदक्षैर्दिव आपृथिव्या ऋग्भिजीषित् । या वीराघस्य चिद्विपः ॥ वामकुक्षौ, आप्यायस्व समेतु । दक्षकुक्षौ, सन्ते पयांसि । लिङ्गे, त्वं सोम प्रचिकेतो मनीषा त्वं रजिष्ठा मनुनेषि पन्था । तव प्रनेति पितरो नयन्दु देवेषु रन्नमाभजन्तु धीराः । गुह्ये, सोमाय पितृमते । नाभौ; यातेधामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् । गायस्फानः प्रतरणासुवीरो वीरहा प्रचरा सोम दुर्यान् । स्तनयोः, देवनतु मनसा देवसोम रायो भागं सहसावन्नभिबुद्ध्य । माता तनू दिशिषे वीर्यस्योभवेच्या प्रचिकित्सा गविष्टौ ॥ कण्ठे, त्वमिमा ओषधीः सोम विश्वास्त्वमापो अजनयंस्त्वङ्गः । त्वमाउक्तोवन्तरिक्षं त्वं ज्योतिषा वितमेववत्त ॥ दक्षस्कन्दे, सोमो धेनुं । वामस्कन्दे, आषाढं यत्स्वपृतनासुपप्रिं स्वर्षामप्सां वृजनयस्य गोपाः । भरेषुजां सुक्षितिं सुश्रवसञ्जायन्तन्त्वामनुमदेम सोम ॥ दक्षबाहौ, सोमानं सुरणं कृण्व सोमयास्ते मयोभुव-ऊतयः सन्ति दाशुषे । वामबाहौ, तेभिर्नोऽविताभव ॥ ओष्ठयोः, स्वादिष्ठया मादिष्ठया पवस्व सोमधारया । इन्द्राय पवते स्वतः ॥ आस्ये, सोम गीर्भिष्ट्वा वयं वर्धयामो वाचोविदः । सुमृढीकोना आविवेश ॥ दन्तेषु, यन्ते राजद्भृतं हविस्तेन सोमाभिरक्षणाः । आरातीवामानस्तरीर्मोचन किश्चनामसुदिन्द्रायेन्मोपरिस्रुवः ॥ दक्षकपोले, चन्द्रमा मनसो । वामकपोले, सचित्र चित्रं चित्रयन्तमस्मै चित्रक्षत्रचित्रतमं वयो-

धाम् । चन्द्रं रयिपुरुवीरं बृहन्तं चन्द्रचन्द्राभिर्गृणे तेषु वसु ॥ नासाग्रे, चन्द्रमऽग्निं । दक्षनेत्रे, अपाम सोम ॥ वामनेत्रे, इमे मा पीता यशसा । भ्रूमध्ये, यत्र ब्रह्मा पवमानच्छन्दस्यां वाचं वदन्ग्राव्णा सोमे महीयते । सोमेरनानन्दञ्जनयन्निन्द्रयेन्द्रोपरि स्रुव । उभयोर्भ्रुवोः, देवी षडुर्वीरुरुणस्कृणुते विश्वेदेवास इह वीरयध्वम् । महम्महि प्रजयासस्तनूभिर्मारधामद्विषन्ते सोम राजन् ॥ ललाटे, मर्माणि ते वर्मणाच्छादयामि सोम त्वा राजामृतेनानुवस्तान् । उर्वीरीयो वरुणस्ते कृणोति जयन्त त्वानु-देवा मदन्त । शिरसि, शन्नो भव हृद आपीत ॥ तद्विष्णोः परमं पदं, हृदयायनमः, ॥ तीर्थस्नेयं । अद्यतावत् । महागणप-तये । अग्नये वायवे । वासुदेवार्थ । चन्द्रमसे रोहिणीसहितायच-न्द्रमसे । पूष्णे । दीपधूपः ॥ जीवाधानं । न्यासं । ॐभूः पुरुष-मावाहयामिनमः ३ नमोऽस्त्वऽनन्ताय ३ निशाकरायवि-शीत-रश्मयेधी-तन्नः सोमः प्र ३ । अद्यतावत् । महागणपतेः । का-र्तिकव्रतोद्यापननिमित्ते कलशपू विष्णुपू० चन्द्रकलशपू-ग्रहम-ण्डलपू-चतुर्वेदेश्वरपू-क्षेत्रेशपूजनमर्चामहं करिष्ये । पुरुष एवेदं, अन्तश्च प्रागा, ध्रुवाद्यौरित्यासनं । महागणपतये युष्मान्वः पूज-यामि । सहस्रशीर्षा । स्वादोरभक्षि । युञ्जतेमान । महागण-पतिं । महिमासहितंदामोदरं, भगवन्तं वासुदेवं आवाहयिष्यामि ॐआवाहय ॥ आवाहनं । आवाहयाम्यमर । शन्नोदेवी । लाजाश्च ॥ एतावानस्य । अपाम सोम । हिरण्यवर्णाः । पाद्यंनमः ॥ त्रिपा-

दूर्ध्वे । शन्न भव हृद । आपोहिष्ठा । इदं वोर्घ्यंनमः ॥ तस्माद्वि-
राळजा । इमेमा पीता । शन्न आपो । आचमनीयंनमः । यत्पुरु-
षेण । अग्निर्नमा । इदमापः । मन्त्रस्नानीयंनमः ॥ एकविंशति-
स्नानं । स्वादोर भक्षि वयसः इति च षोडशस्नानं । देवर्षितर्पणम् ।
याते धामानि मन्त्रगुड्डकं । प्रत्यग्ने आरात्रिका । ता वां वास्तून्यु ।
नेत्रस्पर्शनम् ॥ रथे अक्षेषु । अनुलेपनं । तं यज्ञं बर्हिषि ।
इषरेण ते । युवा सुवासा इतिवस्त्रम् । तस्माद्यज्ञात् । सोम
राजन् । यज्ञोपवीतं ॥ तस्मादृचः । त्वं हिनस्तन्नः । गन्ध-
द्वारं गन्धोनमः । तस्मादश्वा । ऋदूदरेण । पुष्पवती । पूर्वे
नारायणायनम इति । रुद्राय, इन्द्राय, कुमाराय, अग्नये,
कृत्तिकाभ्यः, यमाय, खड्गाय, नैर्ऋतये विष्णवे वरुणाय
मृगाय वायवे ताराभ्यो वैश्रवणाय सोमाय महेशाय चन्द्राय
ब्रह्मणे अत्रिपुत्राय अनन्ताय समुद्राय अद्भ्यः आकाशाय
अस्ताचलाय, उदयाचलाय अनित्याय नित्याय अग्नये
चन्द्राय वरुणाय कुबेराय खड्गाय, महिमासहिताय दामोदराय
चन्द्रमसे अनन्तकलाधारिणे परमेश्वरजटामुकुटवासिने नित्या-
नन्दामृतमयाय जगदाप्यायनकर्त्रे चन्द्रमसे तारापतये अर्घो-
नमः पुष्पं नमः (आनन्दाह्लादकरणं तारकं कामुकं परम् ।
नमामि सोमं विश्वेशं चन्द्रं सम्पूर्णमण्डलम्)। इति प्रदक्षिणं
कृत्वा पुष्पाञ्जलिं क्षिपेत् ॥ यत्पुरुषेण । अपत्या अस्तु । धूरसीति
धूपं । ब्रह्मणोसि । योनइन्दु । तेजोसि । रत्नदीपं । अर्घ्यंदा-

नाद्यर्ऽर्चनविधिः । **चन्द्रमा म** । **त्वं सोमासि** । **हिरण्यगर्भ** इति चरुः । **नाभ्या आसीदन्त** । **त्रातारो देवा** इति कुसुमाञ्जलिः । **सप्तास्यासन्** । **त्वन्नं सोम** इति चत्वारिप्रदक्षिणानि । **अन्नंनमः** । **दक्षिणायै** एता देवता । **कलशेषु पुष्पं** ॥ अथाग्निकर्म ॥ **पात्रं तिला** । आज्यभागान्तं । **आप्यायस्वेति** समिधः १०८ **निष्व-सीद** प्रधानं । **ऐन्द्राग्नं** ॥ **सन्ते पयांसि** इति दूर्वाहोमः १०८ अन्यदूर्वाहोमोनास्ति । ततोऽन्नहोमः । **याते धामानीति** १०८ **निष्वसीद** । प्रधानं । **ऐन्द्राग्नं** ॥ एवमन्नहोमः । **सोमो राजामृत** १०८ **निष्वसीद** । प्रधानं **ऐन्द्राग्नं** । तर्पणम् ॥ आज्येन **विष्णु-पञ्चकं** तर्पणं । **कूष्माण्डं** चतुर्गृहीतेनाज्येन । **आग्नयेस्वाहा** ६ ॥ ततो यवतिलहोमः । **गायत्रीब्राह्मणं** । **अध्वर्योयं** । प्रधानं **ऋतुपतिं** हुत्वा । **प्रायश्चित्तस्थानकं** । **वेदे** (पृ० ८७) **सहस्रशीर्षा** १६ । **विष्णुबुधसूक्तं** तर्पणं । **विष्णुपञ्चायतनदेवताभ्यः** । **इन्द्रापर्वता** । सूक्तानि **ऐन्द्राग्नं** । तर्पणम् । **रुद्रपञ्चकदेवीपञ्चक रक्षोघ्नमन्त्राः** । तर्पणं । **ऋतुतिथिः** । **नैवेद्यं** । **इळाभागं** । **अग्ने त्वं पारयानव्यो** इतिच । **वैश्वानरायेत्युपस्थानं** । **यद्देवा** इत्यञ्जलिः । **वैश्वानरायेतितर्पणं** । **हुतमेक्षणं पूर्णा** । तावत् । प्रातः स्नानं कृत्वा मण्डलमभ्यर्च्य । **गोप्रदानं ब्राह्मणपूजनं** । **दक्षिणायै** । **चन्द्रकलशेषु** पृच्छां सम्पाद्य । **ॐभूः पुरुषंविसर्जयामिनमः ३ नमोस्त्वनन्ताय ३ निशाकराय वि** ३ अद्यतावत् । **महिमासहितस्य दामोदरस्य वासुदेवस्य** । **चन्द्रमसः** । **रोहिणीसहितस्य चन्द्रमसः** । **पूर्णः** ।

कार्तिकव्रतोद्यापननिमित्तं विष्णुपू-चन्द्रकलशपूजनमच्छिद्रं सम्पूर्णं । यथोदकं । आपन्नोसि । ध्येयः सदा । भगवन्देवदेवेश सुप्रसन्ने विभो त्वयि । पारितं पूर्णमत्यन्तमिदमऽस्तु विधो व्रतम्[1] ॥ आयुरारोग्यमैश्वर्यं पुत्रपौत्रादिकां प्रजाम् । देहि मे रोहिणीश त्वं नित्याह्लादसुखावहे[2] ॥ महेशानशिरोरत्न रत्नाकरसुत प्रभो । लक्ष्मीकल्पद्रुमोद्धार धान्वन्तरिसहोदर[3] ॥ अमृतेश मनोदेवपितृणामपि तारक । सन्तताप्यायकानन्दमिहलोके परत्र च[4] ॥ नमस्तुभ्यं शशाङ्काय विश्वाप्यायनहेतवे । चन्द्राय रात्रिपतये शङ्कराभरणाय च[5] ॥ इन्दवे पूर्णदेहादिरूपसन्दारिणे नमः । ग्रहाधीशाय कमलप्रतिशोभनहेतवे[6] ॥ विधो समुद्रजाताय श्रीसहायायवै नमः । पूजितोसि मया भक्त्या पूर्णे पूर्णं च मण्डले[7] ॥ पूरयस्व च मां सर्वैः कामैः पूर्णकृपापर । सोमलोकं नय त्वं मां पूर्णामृत क्षमानिधे[8] ॥ नमस्ते हव्यवाहाय वरुणाय नमोनमः । खड्गायुध नमस्तुभ्यं विष्णो तेऽस्तु नमोनमः[9] ॥ कृत्तिकाभ्यो नमो वोऽस्तु कुमाराय नमोनमः । रुद्राय च नमस्तुभ्यं नमश्चन्द्रमसे[10] विभो ॥ एते यूयं समेतास्तु पूजितास्तोषिता नुताः । कार्तिक्यां पौर्णमास्यां च बहुशक्त्या विधानतः[11] ॥ तृप्त्या प्रीत्या मोदमानो यजमाने सुखं प्रद । पुत्रपौत्रैर्धनैः कामैः सर्वसौख्यमनोरमैः[12] ॥ भुक्तिमुक्तिफलैर्दिव्यैः कुण्वध्वं मां समाहिताः । महिमासहितं देवं भक्त्या दामोदरं विभुम् ॥ भुक्तिमुक्तिप्रदं वन्दे प्रयच्छ त्वं शुभां गतिम्[13] ॥ मा मे

स्त्रीत्वं । आह्वानं ॥ नमो ब्रह्मणे । ततो ब्राह्मणेभ्यो कलशान्प्रतिपादयेत् ॥ सावित्राणि अद्यतावत् । आत्मनो० रोहिणीसहितचन्द्रमःकलशं सहिरण्यं सवाससं सान्नं सलवणं दक्षिणायुतं चन्द्ररूपाय ब्राह्मणाय ददानि ३ प्रतिगृह्णामि ३ ॥ एवं । रेवतीसउडुपतिकलशं[2], क्षणदास-रजनीपतिकं[3], तारास-निशाकामुकं, चन्द्रिकास० ज्योत्स्नापतिकं, रमणीस-ओषधीशकं[6], रामासजैवात्रिककं, अमृतासहितसुधांशुकलशं, यशोवतीस-अमृतकरकलशं[9], शुभास-अब्जकं[10], महाश्वेतास-शशाङ्ककं[11], कृत्तिकास-कलानिधिकं[12], परमामृतास-वृषाङ्कभूषणकं[13], आह्लादास-अमृतबान्धवकं[14], कलाभूषणास-शुक्रदेवकं[15], अमृताख्यास-नित्यामृतमयकलशं[16] ददानि ॥ एवं षोडशकलशान्दत्वा । होत्रे प्रतिमां प्रतिपादयेत् ॥ सावित्राणि । अद्यतावत् । आत्मनो कार्तिकव्रतोद्यापननिमित्त इमां विष्णुप्रतिमां ददानि ३ ॥ दध्यक्षततिलैर्विप्रहस्ते तर्पणं । येचरन्ति सदा मेरौ ब्रह्मणाधिष्ठिताः सुराः । तृप्तिमायान्तु ते सर्वे कार्तिकोद्यापनाद्धरे इत्यादि ( पृ० १५ ) । एतादेवताः ॥ ब्राह्मणपृच्छां विसर्ज्य । पूर्णां दत्त्वा । अग्निं विमुच्य । वैश्वदेवादि कृत्वा । कलशपृच्छां सम्पादयेत् । यवोदकंनमः । आपन्नोसि । उदकलशं । मन्त्रार्थः ॥ तृणपादकादि दद्यात् ॥ इति कार्तिकव्रतोद्यापनविधिः ॥

## अथ कुमारषष्ठ्युद्यापनम् ॥ ४ ॥

पञ्चगव्यशुद्धभूमौ, अश्मचूर्णेन ग्रहमण्डलं तद्दक्षे त्रयोदशकलशानां

'मध्ये' प्रतिमाकलशं । तद्दक्षे वेदचतुष्टयीं क्षेत्रेशद्वयं च संस्थाप्य॥प्रधानं। अग्नयेनमः[६] । तं युवन्देवा[१] । कुमारं माता, । पूर्वादितः । कुमारायनमः[१], कार्तिकेयाय[२], षडाननाय[३], महासेनाय[४], शरजन्मने,[५] षाण्मातुराय[६], स्कन्दाय, अग्निभुवे,[८] पार्वतीनन्दनाय,[९] गुहाय[१०], सेनान्ये,[११] बहुलेयाय[१२], तारकजिते,[१३] मध्येप्रतिमायां विशिखाय[१४], शिखिवाहनाय[१५], क्रौञ्चभेदिने,[१६] घण्टाधारिणे,[१७] शक्तिभृते[१८] ॥ चतुर्वेदेश्वरेभ्यः । पञ्चायतनदेवताभ्यः । ऐन्द्राग्नं ॥ यजमानमानीय । शासनशोधनादि । जीवादानं ॐभूःपुरुषं ३ कार्तिकेयायवि-सेनाधिपतयेधी-तन्नःकुमारःप्र ३। षाण्मातुरायवि-षण्मुखायधी-तन्नःकुमारः ३ । अद्यतावत् । महागणपतेः । अग्नेः[६] । कुमारस्य । कुमारषष्ठीव्रतोद्यापननिमित्तमर्चामऽहं करिष्ये ॥ दक्षिणान्तं॥ अथाऽग्निकर्म । पात्रं तिला । आज्यभागान्ते । ब्रह्माऋषिः, विराट्छन्दः, कुमारोदेवता, समिद्धोमे विनियोगः-कुमारंमाता १०८ निष्वसीद । प्रधानं । इन्द्रापर्वता ॥ एवमन्नाज्यहोमौ ॥ तर्पणम् ॥ विष्णुपञ्चकं, तर्पणं । कूष्माण्डहोमः । आज्येन । अग्नयेस्वाहा[६] । यवतिलहोमः । ॐकारोयस्य मूलं । ऋतुपतिंहुत्वा प्रायश्चित्तस्थानकं । तर्पणं । विष्णुपञ्चायतनदेवताभ्यः, । इन्द्रा पर्वता । यथाविस्तरं सूक्तानि ॥ तर्पणं रुद्रपञ्चकदेवीपञ्चकौ रक्षोघ्नमन्त्राः ॥ ऋतुतिथिः । नैवेद्यम् । इळाभागं । वैश्वानरायेत्युपस्थानम् । यद्देवा इत्यञ्जलिः । वैश्वानरायेतितर्पणं । हुतमेक्षणं, पूर्णातावत् । प्रातः स्नात्वा, संक्षेपेण मण्डलमऽभ्यर्च्य । गोप्रदानं । ब्राह्मणपू, दक्षि-

णान्तं । क्षेत्रेशबलिः । प्रतिमाविसर्जनं ॥ ॐभूःपुरुषं विसर्जयामिनमः ३। आपन्नोसि। (पूर्वादितः) अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा। व्रतं सम्पूर्णतां यातु त्वत्प्रसादाज्जगत्प्रभो ॥ देवदेवं नमस्यामि कुमारं वरमच्युतम्। कार्तिकेयं दुराधर्षं[१] वह्नितेजःसमुद्भवम्[२] ॥ उमाशंकरजं बीजं गङ्गया जठरे धृतम्। शक्तिहस्तं विशालाक्षं षण्मुखं दीप्ततेजसम्[३] ॥ भक्तानां कल्पितं शान्तं ब्रह्मण्यं वरदं प्रभुम्। काकपक्षधरं देवं शिखण्डकविभूषितम्[४] ॥ घण्टाप्रियं गणाध्यक्षं महाबलपराक्रमम्। देवसेनापतिं स्कन्दं सर्वलोकनमस्कृतम्[५] ॥ त्वं माता सर्वभूतानां त्वमेव जगतांपिता। त्वं भ्राता त्वं सुहृन्मित्रं त्वं प्रियस्त्वं हुताशनः[६] ॥ त्वं शिवस्त्वं वसुर्धाता विधाता त्वं महेश्वरः। त्वं यमस्त्वं रविर्वायुस्त्वं जनस्त्वं धनेश्वरः[७] ॥ त्वं मनस्त्वमहोरात्रं त्वं धनस्त्वं निशाकरः। त्वमेव गोप्ता सर्वस्य जगत्त्वं च चराचरम्[८] ॥ या वाऽथ नारी कुरुतेऽतिभक्त्या भर्तारमापृच्छ्य सुतादियुक्ता। साऽपि प्रसादात्तु षडाननस्य चारोग्यमिष्टं लभते च नित्यम्[९] ॥ शुक्लाम्बरधरं देवं द्विभुजं शशिसन्निभम्। त्रिनेत्रं चातकारूढं कुमारं प्रणमाम्यहम्[१०] ॥ स्वप्ने वा जाग्रति व्रतमऽपूर्णं यत्कृतं मया। तत्सर्वं पूर्णतां यातु त्वत्प्रसादात्षडानन[११] ॥ विपरीतं कृतं यच्च ह्यन्तःकरणचापलात्। तत्सर्वं क्षम्यतां देव षडानन नमोऽस्तुते[१२] ॥ कायिकं वाचिकं चैव मानसं स्पर्शदोषजम्। यन्मयोपार्जितं पापं तत्सर्वं हर मे

[१३]प्रभो ॥ मध्येप्रतिमायां । जयं देहि श्रियं देहि सुखं देहि सुतांस्तथा । देहि भोगं च मोक्षं च देह्यऽभीष्टं षडानन[१४] ॥ यत्किञ्चिद्विधिना हीनं कृतं मूढधिया मया । क्षन्तव्यो भो त्वया नाथ षडानन नमोऽस्तुते[१५] ॥ अहं भीतोस्मि देवेश संसारेऽस्मिन्भयावहे । पाहि मां देवदेवेश शरणागतवत्सल[१६] ॥ आह्वानं । नमोब्रह्मणे ॥ (कलशान्प्रतिपादयेत्) सावित्राणि । होत्रे प्रतिमां ॥ सावित्राणि । अद्यतावत् । आत्मनो० कुमारषष्ठीव्रतोद्यापननिमित्ते सुतानामायुरारोग्यकामनासिद्ध्यर्थं इमां कुमारप्रतिमां सान्नवस्त्रादि ददानि ३ ॥ ततोदध्यक्षततिलैस्तर्पणम् । ये चरन्ति सदा मेरौ—षष्ठ्या उद्यापनाद्धरे ॥ (पृ० १५) एता देवताः ॥ ब्राह्मणपृच्छां विसर्ज्य । पूर्णां विमुच्य ॥ वैश्वदेवादि नित्यकर्म ॥ कलशपृच्छां विसर्ज्य । उदकलशं । मन्त्रार्थाः ॥ तदनुब्राह्मणभोजनम् ॥ चन्द्रोदये चन्द्रपूजा । अर्घ्यंदद्यात् । शशाङ्काय नमस्तुभ्यं विश्वव्यापनहेतवे । चन्द्राय रात्रिपतये शशाङ्काभरणाय च । इन्दवे ह्यर्धदेहाय शम्भोर्मुकुटवासिने । ताराधीशाय देवाय ह्यत्रिनेत्रोद्भवाय च । क्षीरोदार्णवजाताय जगदाप्यायिने नमः ॥ ततो नैवेद्यम् । तदनु स्वयं भोजनम् ॥ इति कुमारषष्ठीव्रतोद्यापनम् ॥

## अथ चन्दनषष्ठीव्रतोद्यापनम् ॥ ५ ॥

ॐअश्मचूर्णेन ग्रहमण्डलं तद्दक्षे त्रयोदशकलशेषु मध्येचन्द्र प्रतिमाकलशं, वेदचतुष्टयीं क्षेत्रेशद्वयं च संस्थाप्य (अन्यमते त्रयोदशकलशेषु मध्ये चन्द्रस्य सूर्यस्य व प्रतिमाद्वयं संस्थाप्य । वषट् ते विष्णुस्तावत् । प्रधानं ।

अग्नयेनमः, वायवे[६] ॥ आप्यायस्व समेतुते[१] । सन्ते पयांसि समयन्तु वाजाः संवृष्ण्यान्यभिमातिषाहः । आप्यायमानो अमृताय सोमो दिवि श्रवांस्युत्तमानि धिष्वनमः[२] । यातेधामानि दिवि या[३] । वरुणायनमः[१], रोहिणीसहिताय चन्द्रमसेनमः[२] । सोमाय[३], विनायकाय[४], पितामहाय[५], गायत्र्यै[६], गङ्गायै[७], वसिष्ठाय[८], नन्दिरुद्राय[९], अनिरुद्धाय[१०], प्रह्लादाय[११], कुबेराय[१२], शेषाय[१३], कश्यपाय[१४], नारदाय[१५], भृङ्गिने[१६] चन्दनषष्ठीव्रतोद्यापनदेवताभ्योनमः ॥ प्रतिमाकलशे । स्वादोरभक्ष इतिचन्द्रसूक्तेन "पूर्वादितः" त्रयोदशकलशेषु "एकैका ऋक्"[१३] शेषाः[३] चन्द्रप्रतिमाकलशे । पुनश्च । पूर्वभाद्रपदासहिताय द्विजराजाय, अश्विनीस-विधवे[२], कृत्तिकास-कलाधराय[३] मृगशिरःस-मृगाङ्काय[४], पुष्यास-सुधांशवे[५], मघास-इन्दवे,[६] पूर्वफाल्गुनीस-कुमुदबान्धवाय[७], चित्रास-चन्द्रमसे, विशाखास-ओषधीपतये[९], ज्येष्ठास-निशाकराय[१०], पूर्वाषाढास-सुमनसे[११], श्रवणास-हिमांशवे[१२], शततारास-अब्जाय[१३], ( मध्ये ) ह्रींश्रींभ्रूंहंहंहूंहूंक्षपापतये सर्वविश्वाप्यायनहेतवे सर्वतेजोऽग्निज्वालारक्षकह्रींसःआरोग्यमैश्वर्यंवर्धयनमः[१४] ॥ अन्यमतेन । पुनः कलशेषु[१२] । उदुत्य ञ्जातवेदसमिति सूर्यसूक्तेनैकैका ऋक्[१२] शेषाः[३] सूर्यप्रतिमाकलशे । पुनः । वरुणधामास-सूर्याय, पद्मगर्भास-त्वाष्ट्रे[२], छायास-स्वपतये[३], प्रभास-आदित्याय[४], दीप्तिस-रवये[५], प्रकाशास-गभस्तिने[६], मरीचिस-भानवे[७], तपनीस-सवित्रे[८], पाचिनीस-दिवाकराय[९], हव्यवाहास-धर्माय[१०], तेजोवतीस-तपनाय[११], शतधामास-

भास्करार्यं[१२], सत्यभामास-नरकारये महामार्तण्डार्यं[१३], (मध्ये)अश्वा-
रूढाय सूर्यायनमः[१४] ॥ चातुर्वेदेश्वरेभ्यः । विष्णुपञ्चायतनदेवता-
भ्योनमः । इन्द्रापर्वता । ऐन्द्राग्नं ॥ ॥यजमानमानीय ॥ ॥
स्वादोरभक्षीति चन्द्रसूक्तेनन्यासः (वेद पृ० २२) तीर्थेस्नेयं । यत्रा-
स्तिमाता । अद्यतावत् महागणपतये । अग्नये[६] दीपधूपौनमः ॥
अपसव्येन समस्तमातापितृभ्योदीपः स्वधा । सव्येन । जीवाधानं ।
देवस्यन्यासं । ॐभूः पुरुषमावाहयामिनमः ३ ॥ अन्तश्च प्रागा,
ध्रुवाद्यौः इत्यासनं । स्वादोरभक्षि, युञ्जतेमन । महागणपतिं
आवाहयिष्यामि । आवाहनं । अपामसोमं, हिरण्यवर्णा इतिपाद्यम् ।
शन्नो भव, आपोहिष्ठा, इदं वोऽर्घ्यंनमः । इमेमापीता, शन्नआपो
इत्याचमनीयंनमः । अग्निर्नमा, इदमापः इतिमन्त्रस्नानीयंनमः । एक-
विंशतिस्नानं । स्वादोरभक्ष इतिचन्द्रसूक्तेन षोडशस्नानं । श्लोकतर्पणं ।
यातेधामानि इतिमन्त्रगुडकं । प्रत्यग्ने हर इत्यारात्रिका । तावांवास्तून्य
इतिनेत्रस्पर्शनं । इषिरेणते, युवा सुवासाः इतिवस्त्रं । सोमो
राजन्,यज्ञोपवीतं परम्, इतियज्ञोपवीतं । त्वं हिनस्तन्वः;गन्धद्वारां
इतिगन्धोनमः । ऋदूदरेण, पुष्पवती इतिपुष्पार्घौ । चन्द्रसूर्य-
सूक्ताभ्यां च । अनर्वाय, वामनाय, शौरये, वैकुण्ठाय, पुरुषोत्त-
माय, वसुदेवाय, हृषीकेशाय, माधवाय, मधुसूदनाय, दामो-
दराय, पद्मनाभाय, केशवाय, गरुडध्वजाय, गोविन्दाय,
अच्युताय, कृष्णाय, अनन्ताय, अपराजिताय, अधोक्षजाय,

जगद्बीजाय, सर्गस्थित्यन्तकारकाय, अनादिनिधनाय, देवाय,
त्रैलोक्येशाय, त्रिविक्रमाय, नारायणाय, चतुर्बाहवे, शङ्खचक्र-
गदाधराय, पीताम्बराय, वनमालाविभूषिताय, श्रीवत्साङ्काय,
जगत्सेतवे, श्रीधराय, श्रीपतये, हरये, योगीश्वराय, योगस-
म्भवाय, योगाधिपतयेनमः । वरुणायनमः[१६] । पूर्वभाद्रपदास-
द्विजराजायनमः[१८] । वरुणधामास-सूर्यायनमः[१९] । चन्दनषष्ठीव्रतो-
द्यापनदेवताभ्यः अर्घोनमः पुष्पंनमः ॥ अपत्याअस्तु, धूरसि
इतिधूपं । योनइन्दुः, तेजोसि इतिरत्नदीपकर्पूरौ । चामरच्छत्रादि ।
दीपधूपौनमः । वासोनमः । अर्घ्यदानाद्य० । त्वं सामपितृभिः ।
हिरण्यगर्भः इतिचरुः । त्रातारो देवा इति कुसुमाञ्जलिः । त्वं नः सोम
इति प्रदक्षिणा । शंखप्रभं । प्रत्यक्षदेवमिति पुष्पं । उभाभ्यां । अन्नं-
नमः २ दक्षिणा । याते धामानि । आकृष्णेन इति च प्रतिमयोः
पुष्पं । तद्विष्णोरिति कलशे पुष्पं ॥ ॥ अथाग्निकर्म ॥ ॥ पात्रं-
तिला । अग्निकुण्डपूजा । आज्यभागान्ते ॥ आदौ समिद्धोमः । आ-
प्यायस्व १०८ । आकृष्णेन १०८ निष्वसीद । प्रधानं । ऐन्द्राग्नं ॥
दूर्वाहोमः । सन्तेपयांसि १०८ चित्रन्देवानां १०८ । निष्वसीदे-
तिदूर्वाया होमो नास्ति । अन्नहोमः यातेधामानि १०८ उदुत्यञ्जात
१०८ निष्वसीदगणपते प्रदानं ऐन्द्राग्नं । आज्यहोमः । नवो नवो
भवति जाय मानोऽह्नां १०८ उद्वयन्तमस १०८ । निष्वसीद । प्रधानं ।
ऐन्द्राग्नं । तर्पणम् ॥ विष्णुपञ्चकं । कूष्माण्डहोमः । आज्येन । अग्नये

स्वाहा।।ततो यवतिलेन। ॐकारोयस्य मूलं। गायत्रीब्राह्मणं। तर्पणं। अध्वर्योऽयं। प्रधानं। ऋतुपतिं हुत्वा। प्रायश्चित्तस्थानकं ( वेदे पृ० ८८ ) विष्णुबुधसूक्तं च हुत्वा। तर्पणं। विष्णुपञ्चायतनदेवताभ्योनमः। इन्द्रापर्वता। सूक्तानि। ऐन्द्राग्नं। तर्पणं। रुद्रपञ्चकदेवीपञ्चके। रक्षोघ्नमन्त्राः। तर्पणं। ऋतुतिथिः। नैवेद्यं। इळामग्ने। अग्ने त्वं पारयानव्यो इति च। वैश्वानरायेत्युपस्थानं। यद्देवादेवेत्यञ्जलिः। वैश्वानरायेति तर्पणम्॥ हुतसेक्षणं। पूर्णा तावत्। षष्ठ्यांस्नात्वा, सूक्ष्मरीत्या पूजनं कृत्वा, ततो गोप्रदानं। ब्राह्मणपूजनं दक्षिणान्तं। क्षेत्रेशबलिः। प्रतिमयोर्विसर्जनम्। ॐभूः-पुरुषंविसर्जयामिनमः ३ निशाकरायविद्महे ३ भास्करायविद्महे ३ अद्यतावत् आत्मनो-चन्दनषष्ठीव्रतोद्यापननिमित्तं त्रयोदशकलशयुक्तचन्द्रसूर्ययोः प्रतिमापूजनमच्छिद्रं। यवोदकंनमः। आपन्नोऽसि। भगवन्देवदेवेश सुप्रसन्नोभव प्रभो। पूरितं च मया षष्ठ्याव्रतं च त्वदनुग्रहात्॥ अज्ञानान्धेन यत्किञ्चिन्मया खण्डं कृतं व्रतम्। भगवंस्त्वत्प्रसादेन पूर्णमस्तु निशाकर[२]॥ कायिकं वाचिकं वापि मानसं स्पर्शदोषजम्। यन्मयोपार्जितं पापं तत्सर्वं हर मे प्रभो[३]॥ आयुरारोग्यमैश्वर्यं पुत्रपौत्रादिसन्ततिम्। देहि मे रोहिणीश त्वं नित्याह्लादसुखावह[४]॥ नमस्तुभ्यं शशाङ्काय विश्वव्यापनहेतवे। चन्द्राय रात्रिपतये शशाङ्काभरणाय च॥ इन्दवे पूर्णदेहाय रूपसन्दारिणे नमः। ग्रहा-

धीशाय कमलप्रतिशोभनमूर्तये[६] ॥ समुद्रजाय विधवे श्रीसहायाय ते नमः । पूजितोऽसि मया भक्त्या पूर्णे पूर्णे च मण्डले ॥ पूरयस्व च मां सर्वैः कामैः पूर्णकृपापर । सोमलोकं नय त्वं मां पूर्णामृतकृपानिधे ॥ अनामयपदे यत्र नित्यानन्दमयोऽस्म्यहम् । त्वत्प्रसादान्महेशानजटामुकुटभूषण ॥ महेश्वरशिरोरत्न रत्नाकरसुत प्रभो । लक्ष्मीकल्पद्रुमोद्धार धान्वन्तरिसहोदर[१०] ॥ वर्धयस्व ममाऽऽनन्दमिहलोके परत्र च । अमृतांशो महादेव पितॄणाममृताकर[११] ॥ सन्तप्ताप्यायनानन्ददाता त्वं परमागतिः । नमस्ते हव्यवाहाय वरुणाय नमोनमः[१२] । खड्गाय च नमस्तुभ्यं कुमाराय नमोनमः । कृत्तिकाभ्यो नमस्तुभ्यं नमश्चन्द्रमसेऽस्तु ते[१३] ॥ एते यूयं समेता ये पूजिताः संस्तुतास्तु ते । भुक्तिमुक्तिफलं साक्षात्प्रयच्छन्तु शुभं मम[१३] ॥ आह्वानं । नमो ब्रह्मणे ॥ आदौ जलकुम्भं । ततः कलशान् । प्रतिमाप्रतिपादनं । सावित्राणि-अद्यतावत्० आत्मनो० चन्दनषष्ठीव्रतोद्यापननिमित्तमिमां चन्द्रप्रतिमा(वा)सूर्यप्रतिमां सहिरण्यादिं ददानि ३ ॥ तर्पणं । ये चरन्ति सदा मेरौ ब्रह्मणाधिष्ठिताः सुराः । तृप्तिमायान्तु ते चन्द्रषष्ठ्युद्यापनतो हरे[१]। (पृ० १५) एतादेवताः । ब्रह्मणाच्छिद्रं । पूर्णा । विमुच्य । वैश्वदेवादि । गोग्रासादि । कलशपृच्छां । यवोदकं । आपन्नोऽसि । उदकलशं । तृणासनतृण-

पादिकादि दत्त्वा । अनन्तशाख । मन्त्रार्थः । इति चन्दनषष्ठीव्रतोद्यापनम् ॥ ५ ॥

## अथ जन्माष्टमीव्रतोद्यापनम् ॥ ६ ॥

अश्मचूर्णेन ग्रहमण्डलं तद्दक्षे प्रतिमाकलशं वेदचतुष्टयीं क्षेत्रेशद्वयं च संस्थाप्य । अग्निर्देवी । वषट् ते विष्ण तावत् । प्रदानं । अग्नयेनमः । प्रतिमायां । वासुदेवाय ८ देवक्यैनमः, देव्यै, श्रीकृष्णाय, वसुदेवाय, नन्दगोपाय, यशोदायै, बलभद्राय, रोहिणीसहिताय चन्द्रमसेनमः ॥ कलशे । सहस्रशीर्षा १६ चातुर्वेदेश्वरेभ्यः विष्णुपञ्चायतनदेवताभ्यः । ऐन्द्राग्नं ॥ ॥ यजमानः ॥ अनाभौ । पुरुषसूक्तन्यासः । देवक्यैदेव्यै 'हृदयायनमः' कृष्णाय 'शिरसे' वासुदेवाय 'शिखायै' नन्दगोपाय 'कवचाय' यशोदायै 'नेत्राभ्यां' बलभद्राय 'अस्त्रायफट्' ॥ तीर्थेस्नेयं । दीपधूपौ । जीवादानं । ॐभूःपुरुषमावाहयामिनमः ३ जन्माष्टमीव्रतोद्यापननिमित्तं कलशविष्णुवेदचतुष्टयीक्षेत्रेशानां पूजनमर्चामहंकरिष्ये । पूर्वे नारायणायनमः इत्यादि । अनर्घ्यायनमः, वामनाय, शौरये, वैकुण्ठाय, पुरुषोत्तमाय, वासुदेवाय, हृषीकेशाय, माधवाय, मधुसूदनाय, पुण्डरीकाक्षाय, नरसिंहाय, दैत्यसूदनाय, दामोदराय, पद्मनाभाय, केशवाय, गरुडध्वजाय, गोविन्दाय, अच्युताय, कृष्णाय, अनन्ताय, अपराजिताय, अधोक्षजाय, जगद्बीजाय, सर्गस्थित्यन्तकारकाय, अनादिनिधनाय, देवाय, त्रिलोकेशाय, त्रिवि-

क्रमाय, नारायणाय, चतुर्बाहवे, शङ्खचक्रगदाधराय, पीता-म्बराय, वनमालाविभूषिताय, श्रीवत्साङ्काय, जगत्सेतवे, श्रीधराय, श्रीपतये, हरयेअर्घोनमः पुष्पंनमः। दक्षिणान्तं ॥ ॥ अथाग्निकर्म ॥ ॥ पात्रंतिला। आज्यभागान्तं। आदौ समि-द्धोमः। ॐतद्विष्णोः १०८ निष्वसीद। प्रदानं। ऐन्द्राग्नं। एवं अन्नाज्यहोमौ ॥ तर्पणं। विष्णुपञ्चकं। तर्पणं। कूष्माण्डं आज्येन अग्नयेस्वाहा। ततो यवतिलेन गायत्रीब्राह्मणं। ऋतु-पतिं च हुत्वा। प्रायश्चित्तस्थानकं, विष्णुबुधसूक्तं च हुत्वा। तर्पणं। ॐतद्विष्णोः। विष्णुपञ्चायतनदेवताश्च सूक्तानि च हुत्वा। तर्प-णम् ॥ रुद्रपञ्चकदेवीपञ्चकरक्षोघ्नमन्त्राः। तर्पणं। ऋतुतिथ्यादि पूर्णान्तं। अर्धरात्रे चन्द्रोदयेसति। क्षीरोदार्णवसम्भूत ह्यत्रिनेत्र-समुद्भव। गृहाणार्घ्यं शशाङ्केदं रोहिण्यासहितो मम ॥ कृष्णाय वासुदेवाय देवकीनन्दनाय च। नन्दगोपकुमाराय श्रीकृ-ष्णायनमोनमः ॥ ज्योत्स्नापते नमस्तुभ्यं नमस्ते ज्योतिषां पते। नमस्ते रोहिणीकान्त ह्यर्घोयं प्रतिगृह्यताम् ॥ रोहिणी-युताय चन्द्रमसे गन्धादिभिश्च पूजा कार्या ॥ ततः प्रभाते स्नात्वा सूक्ष्मतया मण्डलपूजां विधाय। आज्यदर्शनं ॥ गोप्रदानं। ब्राह्म-णपूजनं दक्षिणान्तं। क्षेत्रशबलिः। ॐभूःपुरुषं ३ प्रतिमां विसृज्य। होत्रे दद्यात्। विप्रहस्ते तर्पणम्। ये चरन्ति सदा मेरौ ब्रह्मणाधि-ष्ठिताः सुराः। तृप्तिमायान्तु ते जन्माष्टम्युद्यापनतो हरे ॥ (पृष्टे) एता

देवताः ॥ ब्राह्मणपृच्छां विसृज्य । पूर्णां दत्वा । विमुच्य । वैश्वदेवादि । कलशपृच्छां विसर्जयेत् । उदकलशं तृणासनादि मन्त्रार्थाः । ब्राह्मणान्भोजयेत् ॥ इति जन्माष्टमीव्रतोद्यापनम् ॥६॥

## अथ बुधाष्टमीव्रतोद्यापनम् ॥ ७ ॥

अश्मचूर्णेन ग्रहमंडलं तद्दक्षे कलशाष्टकमध्ये प्रतिमाकलशं वेद-चतुष्टयीं क्षेत्रेशद्वयं च संस्थाप्य । स्वस्त्ययनादि-वषट्कृते विष्ण तावत् । प्रधानं । अग्नयेनमः । विष्णुर्नुकं वीर्याणि । इदं विष्णुर्वि । विष्णो पृष्टमसि । ॐवासुदेवायनमः ८ । कलशाष्टकेषु पूर्वतः । उद्बुध्यध्वं सुमनसः सखायः, समग्निमिन्धुं बहवः सनीळाः । दधिक्रामऽग्निमुषसं च देवीमिन्द्रावतो वसूनि ह्वयेवः नमः ॥ मन्द्रा कृणुध्वं धिय आतन्वध्वं, तावमऽरित्रमऽरणीं कृणुध्वम् । इङ्कृणुध्वमायुधारं कृणुध्वं प्राञ्चयज्ञं प्रणयता सखायः नमः ॥ युनक्तु सीरा वियुगा तनुध्वं कृते योनौ वपतीह बीजम् । गिरा च श्रुष्टिः सभरा आसन्नो नोदीया इच्छृणपक्कमेयात् नमः ॥ सीरा युञ्जन्ति कवयो, युगा वितन्वते पृथक् । धीरा देवेषु सुम्णया निराहावाङ्कृणोतुन नमः ॥ संवरत्रादधात न सिञ्चामह अवततम् । मुद्रिणं च वयं कृतौ सुषेकमऽनुपक्षित नमः ॥ इष्कृता हावमवतं, सुवरत्रं सुषेचनम् । उच्छिन्नं सिञ्चे अक्षितं नमः ॥ प्रणीताध्वान्हिताञ्जयाय, स्वस्तिवाहं रथमित्कृणुध्वंनमः ॥ द्रोणहावमवतमश्मचक्रुः संसत्रकोशं सिञ्च-

ता नृपाणां नमः ( मध्ये ) व्रजङ्कृणुध्वं सहिवो नृपाणो, वर्मसे
व्यध्वं बहुला पृथूनि । पुनः कृणुध्वं मायसीरदृष्ट, सावस्ति-
स्नोचं हसो दृहतातं नमः ॥ पुनः "पूर्वतः" । अच्युताय, बुधा-
य, चन्द्रमसे, इळाराजाय, ऊर्मिलायै, मिथुलायै, श्याम-
लायै, धर्मराजाय(मध्ये)विष्णुबुधरूपाय ब्रह्मणे ॥ चातुर्वे-
देश्वराय । विष्णुपञ्चायतनदेवताभ्यः । इन्द्रापर्वताः । ऐन्द्रा-
ग्नं ॥ ॥ यजमानः ॥ ॥ अनाभौ । पुरुषसूक्तन्यासः । तीर्थे
स्नेयं । दीपधूपौ ॥ सौवर्णबुधप्रतिमाजीवाधानं ॥ ॐभूःपुरुषमावा-
हयामिनमः ३ नमोस्त्वऽनन्ताय २ ( सर्वाः ) बुधरूपायवि-
ज्ञानात्मकायधी० तन्नोबुधः प्र० ३ अद्यतावत् महागणपतेः ।
अग्नेः । वासुदेवस्य । अच्युतस्य, बुधस्य, चन्द्रमसः, इळा-
राजस्य, ऊर्मिलायाः, मिथुलायाः, श्यामलायाः, धर्मराजस्य,
विष्णुबुधरूपस्य ब्रह्मणः । चातुर्वेदेश्वराणां । विष्णुपञ्चायतन-
देवतानां । इन्द्रस्य वज्रहस्तस्य । आत्मनो० बुधाष्टमीव्रतोद्या-
पननिमित्तं कलशविष्णुबुधपूजनमर्चामहं करिष्ये ॥ दक्षि-
णान्तं ॥ ॥ अथाग्निकर्म ॥ ॥ पात्रं तिला ॥ आज्यभा-
गान्ते । आदौ समिद्धोमः । ॐतद्विष्णोः १०८ त्र्यम्बकं १०८
निष्वसीद । प्रदानं । बुधसूक्तं । इन्द्रापर्वता । दूर्वाहोमः । विष्णो-
र्नुकं १०८ । विष्णोरराटमसि १०८ । ततोन्नहोमः । प्रतद्विष्णुः
१०८ योरुद्रो अग्नौ १०८ निष्वसीद । प्रदानं । आज्यहोमः ।

वषट्तेविष्ण १०८ ईशानन्त्वा १०८ निष्वसीद । प्रदानं । ऐन्द्राग्नं । तर्पणं ॥ विष्णुपञ्चकं । तर्पणं । कूष्माण्डं । आज्येन अग्नये स्वाहा ॥ यवतिलैः । गायत्रीब्राह्मणं । ऋतुपतिंहुत्वा । प्रायश्चित्तस्थानकं । विष्णुपञ्चायतनदेवताभ्यः । सूक्तानि । तर्पणं । रुद्रपञ्चकदेवीपञ्चकरक्षोघ्नमन्त्राः । तर्पणं । ऋतुतिथिः । नैवेद्यं । इळाभागं । अग्ने त्वं पारयेतिच । वैश्वानरायेत्युपस्थानं । यद्देवादेवेत्यञ्जलिः । वैश्वानरायेति तर्पणं ॥ हुतमेक्षणं । पूर्णा तावत् । अष्टम्यां प्रभाते स्नात्वासूक्ष्मार्चनं कृत्वा । गोप्रदानं । ब्राह्मणपृच्छां । दक्षिणान्तं । क्षेत्रेशबलिः प्रतिमाकलशपृच्छां विसृज्य । क्षमापुष्पाणि । आपन्नोस्मि । मध्यमकलशमारभ्य पूर्वादितः । पद्माष्टकस्य प्रथमं मध्ये तु पुरुषोत्तमः । योर्चितस्तु मया भक्त्या सुप्रीतोस्तु भवापहः ॥ पद्मानां कर्णिकायां च भक्त्या सम्पूजितो मया । सर्वपापहरो देवो सुप्रीतोस्तु भवापहः ॥ पद्मेतु पूर्वदिक्संस्थे योऽच्युतो मोक्षदोऽर्चितः । भक्त्या निष्कामयाऽत्यर्थं सुप्रीतोस्तु भवापहः ॥ पद्मेचाग्नेयदिक्संस्थे सोमपुत्रोबुधाख्यया । अर्चितस्तु मया भक्त्या सुप्रीतोऽस्तु भवापहः ॥ पद्मे दक्षिणदिक्संस्थे पूजितश्चन्द्रमाः प्रभुः । निष्कामया मया भक्त्या सुप्रीतोऽस्तु भवापहः ॥ पद्मेनैर्ऋतिदिक्संस्थे इळाराजो जगत्प्रभुः । पूजितस्तु मया भक्त्या सुप्रीतोऽस्तु भवापहः ॥ पद्मे पश्चिमदिक्संस्थे योऽर्चितः ऊर्मिलान्वितः । मया भक्त्या तु सोऽत्यर्थं सुप्रीतोऽस्तु

भवापर्हः ॥ पद्मे मारुतदिक्संस्थे योऽर्चितो मिथुलायुतः । भक्त्या मया तु सोऽत्यर्थं सुप्रीतोऽस्तु भवापहः ॥ पद्मे चोत्तरदिक्संस्थे योऽर्चितः श्यामलावृतः । मया भक्त्या तु सोऽत्यर्थं सुप्रीतोऽस्तु भवापर्हः ॥ पद्मे चैशानदिक्संस्थे धर्मराजोऽर्चितस्तु सः । भक्त्या मया तु सोऽत्यर्थं सुप्रीतोऽस्तु भवापर्हः ॥ ( प्रतिमायां ) बुद्धिदाता बुधस्त्वं हि धर्मकीर्तियशःस्थितिम् । आयुरारोग्यमैश्वर्यं देहि सम्पूजितो मया ॥ चन्द्रात्मज नमस्तुभ्यं विष्णुरूप नमोऽस्तुते । इन्दुकान्त नमस्तेऽस्तु सर्वकामप्रदो भव ॥ नाल्पायुषं न दारिद्र्यं शोकदोषविवर्जितम् । पुत्रपौत्रादियुक्तं च धनधान्ययुतं कुरु ॥ ध्येयः सदा सवितृ० । आह्वानं नैव । तर्पणं । ( ततः कलशान्प्रतिपादयेत् ) सावित्राणि-अद्यतावत्-आत्मनो यथोक्तफलप्राप्त्यर्थं बुधाष्टमीव्रतोद्यापननिमित्तं अच्युतकलशं सहिरण्यं सवाससं सान्नंददानि ३ ( एवं क्रमेण सर्वान्दत्त्वा । होत्रे प्रतिमां प्रतिपादयेत् ) सावित्राणि-विष्णुबुधप्रतिमां सहिरण्यंददानि ३ ॥ ततो दध्यक्षततिलैस्तर्पणं । ये चरन्ति सदा मेरौ ब्रह्मणाधिष्ठिताः सुराः । बुधाष्टम्युद्यापनेन तृप्तिमायान्तु ते सदा (पृष्ठ) ॥ एतादेवताः । ब्राह्मणपृच्छांविसर्जयेत् ॥ पूर्णां दत्वा । वैश्वदेवादि कलशपृच्छां । आपन्नोऽसि । नमोब्रह्मणे । उदकलशं । तृणासनादि । अनन्तशाख । मन्त्रार्थाः । इति बुधाष्टमीव्रतोद्यापनम् ॥ ७ ॥

## अथ दुर्गाष्टमीव्रतोद्यापनम् ॥ ८ ॥

अश्मचूर्णेन ग्रहमण्डलं तद्दक्षे त्रयोदशकलशान्मध्ये दुर्गाप्रतिमा-कलशं वेदचतुष्टयीं क्षेत्रेशद्वयं च संस्थाप्य। भद्रपाठादिवषट्कृते तावत्। अग्नयेनमः[६]। जातवेदसे[१]। गौरीर्मिमाय[२]। दिव्यं सुपर्णं[१२]। ताम-ऽग्निवर्णां[१४]। अमायैनमः ८ कलशेषु। अहं रुद्रेभिः (वेदपृष्ठ[५]) इन्द्रं मित्रं[७] (पृष्ठ[५]) शेषाः[३] (मध्ये) इन्द्रं कुत्सो, देवैर्नो देव्यदितिर्न[२]। ॐह्रीं-सःमहावागीश्वर्यैनमः सर्वसिद्धिं कुरुकुरु)इत्यपि। चतुर्वेदेश्वरेभ्योनमः विष्णुपञ्चायतनदेवताभ्यः। इन्द्रः पर्वता। अर्चन्तस्त्वा॥ ॥ यजमानः॥ ॥ अनाभौ। अहं रुद्रेभिः। इति देवीसूक्तन्यासः। जातशिखायां० । ॐह्रीं-हृद । ॐह्रींचण्डिवागीश्वरि-शिरसे। ॐह्रींभवभवानि-शिखायै । ॐह्रींसर्वकामप्रदायिनि-कवचाय। ॐह्रींसर्वानन्ददायिनि-नेत्राभ्यां। ॐह्रींपरमानन्ददायिनि-अस्त्रा-यफट्॥ तीर्थस्नेयं। दीपधूपौ । ॐभूःपुरुषमावा ३। तन्म-हेशायविद्महे महादेवा ३ सुभगायैवि ३ चण्डिकायैवि-योगी-श्वर्यैधी-तन्नोदुर्गाप्र ३। अद्यतावत् । महागणपतेः। अग्ने[६]ः। अमायाः[१६]। ॐह्रींसःमहावागीश्वर्याः दुर्गाभगवत्याः॥ उमा-सहितस्यशङ्करस्य[१], कात्यायनीस-शम्भोः[२], दुर्गास-महेश्वरस्य[३], गौरीस-महादेवस्य[४], हैमवतीस-रुद्रस्य[५], शिवास-शिवस्य[६], मृडा-नीस-पशुपतेः[७], अम्बिकास-उग्रस्य[८] शर्वाणीस-महाशर्वस्य[९], पार्व-तीस-हरस्य[१०], भवानीस-ईश्वरस्य[११], रुद्रपत्नीस-ईशानस्य[१२], सत्यभा-

मास-नरकारेः । चतुर्वेदेश्वराणां । विष्णुपञ्चायतनदेवतानां । इन्द्रस्यवज्रहस्तस्य । आत्मनो दम्पत्योर्यथोक्तफलप्राप्त्यर्थं दुर्गाष्टमीव्रतोद्यापननिमित्ते कलशदुर्गादिपूजनमऽर्चामहं करिष्ये । अहं सोममऽ। ध्रुवाद्यौः, इत्यासनं । महागणपतये । अहं रुद्रेभिः, युञ्जातेमान । महागणपतिं आवाहयिष्यामि ॥ आवाहयाम्यऽहं देवीं नित्यां त्रैलोक्यवासिनीम् । सर्वविघ्नहरीं देवीं शत्रूणां च क्षयङ्करीम् ॥ सर्वपापप्रशमनीं भुक्तिमुक्तिफलप्रदाम् । भक्ताभीष्टप्रदां सत्यां धर्मकामार्थसिद्धये ॥ श्रीशारदे ॥ शन्नोदेवी ॥ अहं राष्ट्री । हिरण्यवर्णा इतिपाद्यम् । मायासो अन्नमति । आपोहिष्ठा इत्यर्घ्यम् । अहमेव स्वयमिदं । शन्नआपो इत्याचमनीयं । अहं रुद्राय । इदमाप इतिमन्त्रस्नानीयं ॥ एकविंशतिस्नानं । अष्टौस्नानं ॥ दिव्यं सुपर्णमितिमन्त्रगुडकं । रक्षोहणमित्यारात्रिका । तस्याः समुद्रा अधिविक्षरन्ति इतिनेत्रस्पर्शनं । दिव्यं सुपर्ण, रथे अक्षेषु इत्यनुलेपनं । अहं सुवे, युवासुवास इतिवस्त्रं । अहमेव वात इतियज्ञोपवीतं । इन्द्रंमित्रं वरुणं । गन्धद्वारं इतिसमालभनं । त आदित्या, पुष्पवती इतिपुष्पं । पूर्वे गौर्यैनमः, आग्नेये शिवायै, दक्षिणे कात्यायन्यै, नैर्ऋते अम्बिकायै, पश्चिमे दुर्गायै, वायवे देवशर्वाण्यै, उत्तरे उमायै, ईशाने योगीश्वर्यै, मध्ये पार्वत्यै, रुद्रपत्न्यै, भवान्यै ॐह्रींसःमहावागीश्वर्यै, अमायै० सहस्रनाम्न्यैदेव्यै भवान्यै अर्घोनमः पुष्पंनमः ॥ अवन्तु नः पितरः।

धूरसि इतिधूपं । नराशंसं वाजिनं । तेजोसि इति रत्नदीपकर्पूरौ । देवस्यत्वेति चामरच्छत्रादि । अर्घ्यदानाद्य । बृहस्पते सदमिन्न । हिरण्यगर्भा इतिचरुः । इन्द्रं कुत्सो इतिकुसुमाञ्जलिः । देवैर्नो देव्यदिति इत्येकप्रदक्षिणं । अरिशंखकृपाण-, शंखत्रिशूलेतिपुष्पं क्षिपेत् ॥ उभाभ्यां । दक्षिणान्तं ॥ ॥ अथाग्निकर्म ॥ ॥ पात्रं तिला । आज्यभागान्ते । समिद्धोमः । ॐह्रींसःमहावागीश्वर्यैदुर्गाभगवत्यैनमः १०८ । जातवेदसे १०८ । निष्वसीद । प्रधानं । इन्द्रापर्वता । ऐन्द्राग्नं ॥ ततोऽन्नहोमे । ॐह्रींसःमहावागीश्वरि सर्वसिद्धिं कुरु कुरु स्वाहा १०८ गौरीर्मिमाय १०८ निष्वसीद । प्रधानं । ऐन्द्राग्नं ॥ एवमाज्यहोमः । दिव्यं सुपर्णं १०८ निष्वसीद । प्रधानं । ऐन्द्राग्नं ॥ तर्पणं । आज्येन । विष्णुपञ्चकं । कूष्माण्डं प्रधानाहुतिराज्येन अग्नयेस्वाहा ॥ यवतिलैः, गायत्रीब्राह्मणं । ऋतुपतिं हुत्वा । प्रायश्चित्तस्थानकं तर्पणं । विष्णुपञ्चायतनदेवताभ्यः सूक्तानि तर्पणं । रुद्रपञ्चकदेवीपञ्चकरक्षोघ्नमन्त्राः तर्पणं ॥ ऋतुतिथिः, नैवेद्यं, इळाभागं । अग्ने त्वं पारयेतिच । वैश्वानरायेत्युपस्थानं । यद्देवा देवेत्यञ्जलिः । वैश्वानरायेति तर्पणं । हुतमेक्षणं । पूर्णा तावत् । अष्टम्यां स्नात्वासूक्ष्मतया मण्डलार्चनं कृत्वा । गोप्रदानं । ब्राह्मणपृच्छां दक्षिणान्तं । क्षेत्रेशबलिः प्रतिमाकलशपृच्छां विसृज्य । आपन्नोसि । यदऽनिष्टं कृतं बाल्ये यौवने वार्धके मया । तत्सर्वं नाशय देवि-

देहि मोक्षफलं मम ॥ कायिकं वाचिकं वापि मानसं स्पर्शदोषजम् । यन्मयोपार्जितं पापं तत्सर्वं हर मे हरे[2] ॥ मार्गशीर्षे महामासि यो भक्त्या पूजितो मया । उमया सहितः सोयं प्रीयतां मम शङ्करः[1] ॥ पौषेमासि च यो देवः कात्यायनीपतिस्तथा । भक्त्या सम्पूजितः शम्भुः प्रीयतां वरदः सदा[2] ॥ माघेमासि च यो देवो दुर्गया सहितस्तथा । पूजितोऽस्ति मया भक्त्या प्रीयतां स महेश्वरः[3] ॥ फाल्गुनेमासि यो देवो भक्त्या सम्पूजितो मया । प्रीयतां मे महादेवो गौर्या च सहितः प्रभुः[4] ॥ चैत्रेमासि च यो देवो रुद्रो मोक्षप्रदस्त्वऽयम् । सहितो हैमवत्या तु प्रीयतां मम-कामदः[5] ॥ वैशाखे तु महामासि यो भक्त्या पूजितो मया । शिवया सहितश्चायं प्रीयतां मे शिवः प्रभुः[6] ॥ ज्येष्ठमासि मया भक्त्या मृडानीसहितोऽर्चितः । सोयं पशुपतिः शीघ्रं प्रीतो मेऽस्तु वरप्रदः[7] ॥ आषाढेमासि यो देवो भक्त्या सम्पूजितो मया । अम्बिकासहितश्चोग्रः प्रीतस्तु वरदोस्तु मे[8] ॥ श्रावणेमासि यो देवः शर्वाणीसहितोविभुः । पूजितोस्ति महाशर्वः प्रीयतां मम कामदः[9] ॥ देवो भाद्रपदेमासि पार्वतीसहितो हरः । पूजितोऽयं मया भक्त्या प्रीयतां वरदो मम[10] ॥ आश्वयुजे महामासि भवानीसहितो मया । भक्त्या सम्पूजितो देवः प्रीयतां मे महेश्वरः[11] ॥ कार्तिकेमासि यो देवो भक्त्या सम्पूजितो मया । सहितो रुद्र-

पत्या च हीशानः प्रीयतां मम[१२] ॥ क्षमस्व मन्त्रनाथ त्वं नित्यानन्दमयाय च । धर्मार्थकाममोक्षाय पुनरागमनाय च[१३] ॥ (प्रतिमायां ) शंखत्रिशूलशर-। दुर्गे स्मृता ॥ तर्पणं ॥ ब्राह्मणेभ्यः कलशान्प्रतिपादयेत् ॥ सावित्राणि-अद्यतावत्-आत्मनो दुर्गाष्टमीव्रतोद्यापननिमित्तं उमासहितशङ्कररूपायब्राह्मणाय उमास-शङ्करकलशं सवाससादि ददानि ३ । एवं क्रमेणदत्त्वा । होत्रे प्रतिमां दद्यात् ॥ देवर्षितर्पणं । ये चरन्तिसदा मेरौ-। तृप्तिमायान्तु ते सर्वे अष्टम्युद्यापनाद्धरे ( पृष्ठे ) एतादेवताः । ब्राह्मणपृच्छां विसर्ज्य । पूर्णां । विमुच्य ॥ वैश्वदेवादि कृत्वा । कलशपृच्छां विसृज्य । नमोब्रह्मणे । उदकलशं । तृणासनादि दत्वा । मन्त्रार्थाः ॥ इतिदुर्गाष्टमीव्रतोद्यापनम् ॥

## अथ द्वादशीव्रतोद्यापनविधिः ॥ ९ ॥

अश्मचूर्णेन ग्रहमण्डलं तद्दक्षेत्रयोदशकलशेषु मध्येप्रतिमाकलशं वेदचतुष्टयीं क्षेत्रेशद्वयं संस्थाप्य । भद्रपाठादि-वषट्कृते तावत् । प्रधानं । अग्नयेनमः । अतोदेवा । ॐतद्विष्णोः । प्रतद्विष्णुः । वषट्कृतेविष्णं । वासुदेवायनमः ८ । ततः सहस्रशीर्षा, इति त्रयोदशकलशेष्वेकैकाऋक् शेषाःप्रतिमाकलशे क्षिपेत् ॥ पुनः 'मार्गशीर्षे' रुक्मिणीस-कृष्णाय, श्रीस-केशवाय । पौषे, प्रियास-अनन्ताय, वागीश्वरीस-नारायणाय । माघे । प्रीतिस-अच्युताय, कान्तास-माधवाय । फाल्गुने शक्तिस-चक्रिणे, क्रियास-गोवि-

न्दार्यं । चैत्रे सिद्धिस-वैकुण्ठाय, मतिस-विष्णवे । वैशाखे शोभास-जनार्दनाय, विभूतिस-मधुसूदनार्यं । ज्यैष्ठे महिमास-उपेन्द्राय, इच्छास-त्रिविक्रमार्यं । आषाढे लक्ष्मीस-यज्ञपुरुषाय, धृतिस-वामनार्यं । श्रावणे कान्तिस-वासुदेवाय, रतिस-श्रीधरार्यं । भाद्रपदे प्राप्तिस-हरये, मायास-हृषीकेशार्यं । आश्वयुजे प्राकाम्यास-योगीश्वराय, धीस-पद्मनाभार्यं[११] । कार्तिके लघिमास-पुण्डरीकाक्षाय, गरिमास-दामोदरार्यं[१२] । मलिम्लुचे सत्यभामास-नरकारये, निष्फलास-मार्तण्डार्यं[१३] । चातुर्वेदेश्वरेभ्यः । विष्णुपञ्चायतनदेवताभ्योनमः । इन्द्रायवज्रहस्तायनमः । ऐन्द्राग्नं ॥ ॥ यजमानः ॥ ॥ अनाभौ ॥ तीर्थेस्नेयं । दीपधूपौ । जीवादानं । ॐभूःपुरुषमावा ३ अद्यतावत् महागणपतेः । अग्नेः[६] । मार्गशीर्षे रुक्मिणीस-कृष्णस्य । चातुर्वेदेश्वराणां । विष्णुपञ्चायतनदेवतानां । इन्द्रस्य वज्रहस्तस्य आत्मनो-द्वादशीव्रतोद्यापननिमित्तं दशविधपापनिष्कृत्यर्थं कलशपू-ऋतुनारायणादिपूजनमर्चामहं करिष्ये ॥ आवाहयाम्यमरवृन्द ॥ कलशेषु । आवाहयामि वरदमऽमरेशपूज्यं श्रीरुक्मिणीयुतमऽमोघदृशं च कृष्णम् । श्रीसंयुतं च मुनिवन्दितपादपीठं श्रीकेशवं कमलपत्रविशालनेत्रम् ॥ प्रियान्वितं प्रियकरं प्रणताङ्घ्रियुग्मं निःशेषदेवगणरूपधरमऽनन्तम् । नारायणमपि ह्वयामि सुरेन्द्रपूज्यं योगीश्वरीयुतममोघदृशं सुरेशम् ॥ प्रीत्यायुतं कमलकोशनि-

भास्वरं तमऽव्यन्तमध्यरहितं परमच्युतं च । कान्तयान्वितं विविधरूपधरमनन्तमावाहयामि हृदि माधवमीड्यपादम् ॥ शक्त्यायुतं शमनभङ्गहरं सुरेशं श्रीचक्रिणं च सुरसेवितपादपद्मम् । क्रियान्वितमऽपि सतां मनसोप्यऽधीशं गोविन्दनामपरमं मनसा ह्वयामि ॥ सिद्ध्यान्वितं द्रुहिणलोकमहर्षिपूज्यं वैकुण्ठनाथमऽमरममरेश्वरं तम् । मत्यान्वितं विविधदुःखहरं च विष्णुमावाहयामि भुवनेश्वरवन्दिताङ्घ्रिम् ॥ शोभान्वितं जनमलौघहरं सुरेशं जनार्दनं सुजनसेवितपाठपीठम् । आवाहयामि मधुसूदननामधेयं विष्णुं विभूतिसहितं विबुधेशवन्द्यम् ॥ उपेन्द्रकं महिमयाऽन्वितवामभागमाऽवाहयामि बलिवञ्चनभिन्नवेशम् । इच्छान्वितं च मुनिदेवगणार्चिताङ्घ्रिं त्रैविक्रमं त्रिपदवेष्टितभूर्भुवःस्वः ॥ लक्ष्म्यार्चितं व्रजपदं मुनिवृन्दसेव्यं यज्ञेशं यज्ञपुरुषं भवसिन्धुपोतम् । धृत्यान्वितं च भवभञ्जनकं महेशं श्रीवामनं कपटरूपधरं ह्वयामि ॥ कान्त्यायुतं कमलपत्रविशालनेत्रं श्रीवासुदेवमऽसुरेशसुरेशपूज्यम् । रत्यान्वितमपि सदा मनुजेशकाम्यं चन्द्राभवक्त्रमनुश्रीधरनामधेयम् ॥ प्राप्त्याऽन्वितं मलहरं भवसिन्धुपारं संसारदुःखभवभीतिहरं हरिं तम् । मायाङ्कितमपि ह्वयामि हृषीकमीशमागच्छ मे कुरु दयां जलधौ निमग्नम् ॥ प्राकामयायुतमऽमोघदृशं सुरेशं योगीश्वरं सकलयोगिजनप्रियं तम् । धीसंयुतमपि विरिञ्चिनिरूपितार्द्धं श्रीपद्मनाभ-

मऽमरौघनुतं परेशम्[११] ॥ श्रीपुण्डरीकनयनं भवपुण्डरीकमावाहयामि लघिमाङ्कितवामभागम् । सर्वार्थसिद्धिफलदं मनसोपि दूरं दामोदरमपि मुदा गरिमाङ्किताङ्गम्[१२] ॥ श्रीसत्ययाङ्कितमभीष्टकरं परेशमावाहयामि नरकारिमतिप्रसन्नम् । श्रीनिष्कलार्चितपदं विबुधैः सुमृग्यं मार्तण्डनाथमिनकोटिप्रभुं हयामि[१३] ॥ प्रतिमायां । भगवन्देवदेवेश सर्वज्ञ पुरुषोत्तम । आगच्छागच्छ देवेश श्रिया सह दयां कुरु ॥ दक्षिणान्तं ॥ ॥ अथाग्निकर्म ॥ ॥ पात्रं तिलाः । आज्यभागान्ते । आदौ समिद्धोमः ॥ मेधातिथिर्ऋषिः, गायत्रं छन्दः, विष्णुर्देवता, समिद्धोमेविनियोगः ॥ अतोदेवा १०८ निष्वसीद । प्रधानं । पञ्चायतनदेवताभ्यः । ऐन्द्राग्नं । दूर्वाहोमः ॥ प्रजापतिर्ऋषिः, गायत्रं छन्दः, विष्णुर्देवता दूर्वाहोमेविनियोगः ॥ ॐतद्विष्णोः १०८ ॥ (पूर्वं विनायकेनाऽसिनिषिद्धा यज्ञकर्मणि । शरण्यं देवदेवेशं विष्णुं दूर्वाऽब्रवीदिमम्) इत्युक्तेः । निष्वसीदेति दूर्वाहोमोनास्ति ॥ ततोऽन्नहोमः ॥ वत्सकाण्वायनऋषिः, त्रिष्टुप्छन्दः, विष्णुर्देवता, अन्नहोमे विनियोगः ॥ प्रतद्विष्णुः १०८ निष्वसीद । प्रधानादि । ऐन्द्राग्नं ॥ अथाज्यहोमः ॥ वषट्तेविष्ण १०८ निष्वसीद । प्रदानादि । तर्पणं ॥ अथाज्येन विष्णुपञ्चकं । तर्पणं । कूष्माण्डं । आज्येन प्रधानाहुतयः । अग्नये स्वाहा । ततोयवतिलैः । गायत्रीब्राह्मणं । ऋतुपतिंहुत्वा । प्रायश्चित्तस्थानकं । विष्णुबुधसूक्तं तर्पणं । प्रधानं । विष्णुपञ्चायतनदेव-

ताभ्यः । सूक्तानि । तर्पणं । रुद्रपञ्चकदेवीपञ्चकरक्षोघ्नमन्त्राः । तर्पणं । ऋतुतिथिः । नैवेद्यं । इळाभागं । अग्नेत्वं पारयेति च ॥ वैश्वानरायेत्युपस्थानं । यद्देवा देवहेळनमित्यञ्जलिः । वैश्वानरायेतितर्पणं । हुतमेक्षणं । पूर्णान्तं ॥ (प्रभाते स्नात्वा सूक्ष्मतया मण्डलपूजनं कृत्वा ॥) गोप्रदानं । ब्राह्मणपृच्छां । दक्षिणान्तं । क्षेत्रेशबलिः । सकलशप्रतिमाच्छिद्रं । ॐभूःपुरुषं विसर्जयामि यवोदकं नमः । आपन्नोऽस्मि । ध्येयः सदा । इयत्कालं व्रतं चीर्णं भगवन्यन्मया हरे । तदद्य पूर्णं मे भूयात्त्वत्प्रसादाज्जनार्दन[1] ॥ अज्ञानाज्ज्ञानतो वापि व्रतमूनाधिकं च यत् । दासस्य मम दीनस्य क्षन्तव्यं पुरुषोत्तम[2] ॥ अज्ञानज्ज्ञानदौर्बल्याद्देशकालादिविप्लवात् । असम्पूर्णं गतं यत्तद्भूयात्सम्पूर्णमद्य मे[3] ॥ अज्ञानान्धेन यत्किञ्चिन्मया खण्डं कृतं व्रतम् । तदद्य पूर्णितं भूयात्त्वत्प्रसादाज्जनार्दन[4] ॥ मार्गशीर्षादिमासेषु शुक्ले कृष्णदले हरे । व्रतं चीर्णं सपत्नीकः प्रीयतां तेन मे भवान्[5] ॥ ( पूर्वादितः ) मार्गशीर्षे मया देव यद्व्रतं कृतमच्युत । प्रीतौ स्यातां तेन मे तौ सजायौ कृष्णकेशवौ[1] ॥ कृष्णेपि रुक्मिणीकृष्णौ शुक्ले श्रीकेशवावुभौ । सुप्रीतौ पूजितौ पक्षे तौ स्यातां मार्गशीर्षके[2] ॥ १ ॥ पौषमासस्य देवेश यद्व्रतं कृतमच्युत । तेनाऽनन्तः सपत्नीकः प्रीतोनारायणोऽस्तु मे[1] ॥ प्रियानन्तौ च वागीशयुतो नारायणश्च तौ । एतौ मे पूर्णफलदौ स्यातां पौषे शुभावहौ[2] ॥ २ ॥

माघेऽर्चितौ सपत्नीकौ ह्यच्युतो माधवस्तथा । अनेन तोषितावद्य प्रीतौ स्यातां जनार्दनौ[1] ॥ प्रीत्या युतोऽच्युतस्तद्वत्कान्तायुक्तस्तु माधवः । सुप्रीतावर्चितौ माघे भवेतां व्रतपूरकौ[2] ॥ ३ ॥ फाल्गुने यत्कृतं देव व्रतं तेनापि यद्धरी । विश्वेशौ चक्रिगोविन्दौ प्रीयतां मम शान्तिदौ[1] ॥ एवं शक्तियुतश्चक्री गोविन्दश्च क्रियान्वितः । प्रीतौ मे फाल्गुने चैतौ स्यातां पूर्णफलप्रदौ[2] ॥ ४ ॥ चैत्रे वैकुण्ठविष्णू च सजायौ तोषितौ मया । येन व्रतेन तेनाद्य कुटुम्बे शर्म यच्छताम्[1] ॥ वैकुण्ठः सिद्धिसहितो विष्णुर्मत्यान्वितः प्रभुः । एतौ चैत्रोक्तफलदौ स्यातां मे भक्तिसेवितौ[2] ॥ ५ ॥ जनार्दनश्च वैशाखे तथैव मधुसूदनः । अर्चितौ यौ मया पूर्वं प्रीतौ स्यातां ममाद्य तौ[1] ॥ जनार्दनः शोभयाक्तो विभूत्या मधुसूदनः । वैशाखे पूर्णफलदौ चैतौ स्यातां कृपापरौ[2] ॥ ६ ॥ ज्यैष्ठेऽर्चितौ मया पूर्वमुपेन्द्रोऽथ त्रिविक्रमः । प्रीयेतां मे व्रतेनाद्य कृतेन सपरिच्छदौ[1] ॥ उपेन्द्रो महिमायुक्त इच्छया च त्रिविक्रमः । एतौ ज्यैष्ठेऽर्चितौ भक्त्या स्यातां मे फलदौ सदा[2] ॥ ७ ॥ आषाढे पूजितौ यौ च यज्ञपुरुषवामनौ । अद्य मे तौ सपत्नीकौ सुप्रीतौ शर्म यच्छताम्[1] ॥ लक्ष्म्या च यज्ञपुरुषो धृत्या युक्तोऽथ वामनः । आषाढे पूर्णफलदौ ह्येतौ स्यातां श्रियास्पदौ[2] ॥ ८ ॥ वासुदेवः श्रीधरश्च श्रावणे सपरिच्छदौ । व्रतेन देवदेवेशौ

प्रीयेतां मेऽद्य केशवौ[1] ॥ कान्त्या युक्तो वासुदेवः श्रीधरो रतिसंयुतः । श्रावणे पूजितौ ह्येतौ भवेतां शुभदायकौ[2] ॥९॥ व्रतेन तोषितौ पूर्वं नभस्ये मासि यौ मया । तौ मे हरिहृषीकेशौ मायाप्राप्तियुतौ हितौ[1] ॥ हरिः प्राप्त्या हृषीकेशो मायया संयुतश्चतौ । स्यातां भाद्रपदे मासि संपूर्णफलदायकौ[2] ॥ १० ॥ योगीश्वरः सपत्नीकः पद्मनाभश्च तोषितः । यौ मयाऽश्वियुजे मासि प्रीतौ स्यातां मयाद्य तौ[1] ॥ प्राकाम्यया च योगीशः पद्मनाभो धियान्वितः । एतौ चाश्वियुजे मासि प्रीतौ स्यातां सुखप्रदौ[2] ॥ ११ ॥ कार्तिके पुण्डरीकाक्षस्तथा दामोदरो विभुः । तोषितौ यौ सपत्नीकौ प्रीयतामद्य तौ मम[1] ॥ लघिमापुण्डरीकाक्षस्तथा गरिमयान्वितः । दामोदरः कार्तिके यौ तौ स्यातां व्रतपूरकौ[2] ॥ १२ ॥ एवं देवो जगद्योनिश्चतुर्विंशतिरूपधृक् । चतुर्विंशशक्तियुक्तः प्रीतोऽस्तु जगतां प्रभुः[1] ॥ सत्यभामान्वितो देवो नरकारिर्मलिम्लुचे । निष्कलासहितो महामार्तण्डश्च त्रयोदशे[2] ॥ १३ ॥ ( पुनः प्रतिमायां ) यथाऽखण्डं जगत्सर्वं त्वमेव पुरुषोत्तम । तथाऽखिलानि कर्माणि सम्पूर्णानि भवन्तु मे[1] ॥ गर्भवासेऽथवा बाल्ये यौवने वार्धकेऽपिवा । पापं नाशय मे देव भोगमोक्षौ ददस्व मे[2] ॥ पूर्वजन्मनि यत्किञ्चिन्मया खण्डं कृतं व्रतम् । भगवंस्त्वत्प्रसादेन तदखण्डमिहास्तु मे[3] ॥ एकादशीमुपवसन्ति निरम्बुभक्षणाः संवत्सरस्य कुसुमै-

हरिमर्चयन्ति । ते धौतनिर्मलपटा इव राजहंसाः संसारसागर-जलस्य तरन्ति पारम्[२] ॥ आह्वानं । नमोब्रह्मणे । आदौजल-कुम्भदानं । कलशं शुभदं दिव्यं जलेन परिपूरितम् । दाने-नास्य सदासौख्यं शान्तिरस्तु गृहे मम ॥ जलं ब्रह्ममयं साक्षा-ज्जीवितं सर्वदेहिनाम् । जलदानं तु तस्माद्वै वाञ्छितार्थप्र-दायकम्[३] ॥ वारिणा पूरितं पात्रं तापत्रयहरं शुभम् । पितॄणां तृप्तिदं सौख्यं गृहाण त्वं सुखाय मे[३] ॥ सावित्राणि-द्वादशी-व्रतोद्यापननिमित्तं जलकुम्भं सहिरण्यं सवाससं सान्नलवणं ब्राह्मणाय ददानि ३ ॥ ततस्त्रयोदशकलशान्प्रतिपादयेत् । सावित्राणि-अद्य-तावत्-दशविधपापनिष्कृत्यर्थं विष्णुप्रीत्यर्थं द्वादशीव्रतोद्यापननिमित्तं रुक्मिणीसहितकृष्ण—श्रीसहितकेशवात्मकाय ब्राह्मणाय इमं रुक्मिणीसहितकृष्णश्रीसहितकेशवकलशं सहिरण्यादि ददानि ३ ॥ एवंप्रतिपाद्य । होत्रे विष्णुप्रतिमां प्रतिपाद्य । ( ततोदध्यक्षततिलै-रित्थं मध्वाज्यमिश्रितैः । तर्पयेदुदकैर्देवानृषिपूर्वान्पितॄंस्तथा । प्रागाननो देवतर्षीन्दक्षिणाभिमुखः पितॄन् ॥ ) ये चरन्ति सदा मेरौ ब्रह्मणाधिष्ठिताः सुराः । तृप्तिमायान्तु ते सर्वे द्वादश्युद्या-पनाद्धरे । ( पृ. १५ ) एता देवताः ॥ ब्राह्मणपृच्छां विसर्ज्य । पूर्णां दत्त्वा । विसृच्य ॥ वैश्वदेवादि । कलशपृच्छां विसृज्य ॥ उदकलशं । तृणासनादि दत्त्वा ॥ मन्त्रार्थः ॥ इति द्वादश्यु-द्यापनविधिः ॥ ९ ॥

## अथ भीमसेनद्वादश्युद्यापनविधिः ॥ १० ॥

अश्मचूर्णेन ग्रहमण्डलं तद्दक्षे त्रयोदशकलशानां मध्ये विष्णुप्रतिमां तद्दक्षे वेदचतुष्टयीं क्षेत्रेशद्वयं । प्रदानं अग्नयेनमः । प्रतद्विष्णु । तद्विष्णोः । अतोदेवाः । वासुदेवायनमः ८ देव्यैनमः[१], शान्त्यै[२], लक्ष्म्यै[३], श्रियै[४], पुष्ट्यै[५], तुष्ट्यै[६], वृष्ट्यै[७], हृष्ट्यै[८], विहङ्गनाथाय[९], वायुवेगाय[१०], पक्षिराजाय[११], विघ्नप्रमर्थिन्यै[१२], गरुडाय[१३], नारायणाय[१४], सकलनिष्कलकालरूपाय[१५], वहिरन्तःस्थिताय[१६], सर्वेशाय[१७], मनोभिलषितसिद्धिदायनमः[१८] ॥ कलशप्रतिमासु । सहस्रशीर्षा[१६] । (पुनः) रुक्मिणीसहितायकृष्णाय[१] । प्रियास-अनन्ताय[२] । प्रीतिस-अच्युताय[३] । शक्तिस-चक्रिणे[४] । सिद्धिस-वैकुण्ठाय[५] । शोभास-जनार्दनाय[६] । महिमास-उपेन्द्राय[७] । लक्ष्मीस-यज्ञपुरुषार्थ । कान्तिस-वासुदेवाय[९] । प्राप्तिस-हरये[१०] । प्राकाम्यसयोगीश्वराय[११] । लघिमास-पुण्डरीकाक्षाय[१२] । सत्यभामास-नरकारये[१३] । मध्ये । तद्विष्णोः । वासुदेवाय । ८ । वेदचतुष्टये यो रुद्रो अग्नौ विष्णुपञ्चायतनदेवताभ्यः । ऐन्द्राग्नं ॥ ॥ यजमानः ॥ ॥ अनाभौ । पुरुषसूक्तन्यासः । नारायणयनमः मूर्ध्नि । कृष्णायनमः ललाटे । वैकुण्ठायनमः कण्ठे । शिवायनमः नेत्रयोः । सर्वात्मनेनमः कर्णयोः । श्रीवत्सधारिणेनमः उरसि । शार्ङ्गिणेचक्रिणेनमः वामबाहौ । गदिनेवरदायनमः दक्षिणबाहौ । दामोदरायनमः उदरे । पञ्चशरायनमः मेढ्रे । सौभाग्यनाथायनमः ऊर्वोः । भूतधारिणेनमः

जान्वोः । नीलायनमः जंघयोः । विश्वसृजेनमः पादयोः ॥ ॥ तीर्थस्नेयं । दक्षिणान्तं पूजा ॥ ॥ अथाग्निकर्म ॥ ॥ पात्रं-तिला । आज्यभागान्ते । समिद्धोमे । अतो देवाः १०८ । दूर्वाहोमे तद्विष्णोः १०८ निष्वसीदेतिदूर्वाहोमो नास्ति । अन्नहोमे प्रतद्विष्णु १०८ । आज्यहोमे वषट्तेविष्ण १०८ । निष्वसीद । प्रदानं । ऐन्द्राग्नं । तर्पणं । विष्णुपञ्चकं तर्पणं । कूष्माण्डं । आज्येन अग्नयेस्वाहा । यवतिलैः । गायत्रीब्राह्मणं । अध्वर्योयं । ऋतुपतिं हुत्वा । प्रायश्चित्तस्थानकं । विष्णुबुधसूक्तं । प्रदानं । विष्णुपञ्चायतनदेवताभ्यः । सूक्तानि । तर्पणं । रुद्रपञ्चकं देवीपञ्चकं रक्षोघ्नमंत्राः । तर्पणं । ऋतुतिथिः । इळाभागं । अग्ने त्वं पारयेतिच । वैश्वानरायेत्युपस्थानं । यद्देवा इत्यञ्जलिः । वैश्वानरायेतितर्पणं । हुतमेक्षणं । पूर्णान्तं । द्वादश्यां प्रातः स्नात्वा मण्डलपूजां कृत्वा । गोप्रदानं । ॐभूः पुरुषंवि ३ । ब्राह्मणपृच्छां । दक्षिणान्तं । क्षेत्रेशबलिः सकलशप्रतिमाविसर्जनं । आपन्नोस्मि । अहं भीतोस्मि देवेश संसारेऽस्मिन्भयावहे । पाहि मां पुण्डरीकाक्ष भवाऽद्य शरणं मम ॥ कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाप्युत । शरीरं हीयतेऽत्यर्थं वर्धते च महद्भयम् ॥ त्वत्पादकमलादन्यन्न मे जन्मान्तरेष्वपि । निमित्तं कुशलस्यास्ति तस्मान्मां नय सद्गतिम् ॥ द्वादश्युद्यापनवत् कलशानां प्रतिपादनं ॥ सावित्राणि-भीमसेनद्वादशीव्रतोद्यापननिमित्तं रुक्मिणीसहितकृष्णकलशं सहिरण्यं सवाससं सान्नं

विष्णुरूपाय ब्राह्मणाय ददानि॥ एवं सर्वान्दत्वा। प्रतिमां होत्रे। सावित्राणि-इमां विष्णुप्रतिमां ददानि ३ ॥ दध्यक्षतैस्तर्पणं। येचरन्ति सदा मेरौ। तृप्तिमायान्तु ते भीमद्वादश्युद्यापनाद्धरे (पृ. १५) अक्षय्यं। ब्राह्मणपृच्छां विसृज्य। पूर्णां। वैश्वदेवादि। कलशपृच्छां। आपन्नोसि। विज्ञानं यदिदं प्राप्तमऽज्ञानेन विवर्जितम्। जन्मान्तरेऽपि मे देव माभूदऽस्य परिक्षयः॥ दुर्गतावपि जातायां त्वं गतिस्त्वं पतिर्मम। अकामकलुषं चित्तं मम ते पादयोः स्थितम्॥ कामये वैष्णवत्वं च सर्वजन्मसु केशव॥ आह्वानं। उदकलशं। मन्त्रार्थः। इति भीमसेनद्वादशीव्रतोद्यापनम्॥ १०॥

## अथाऽनन्तचतुर्दशीव्रतोद्यापनम्॥ ११॥

अश्मचूर्णेन ग्रहमण्डलं तद्दक्षे चतुर्दशकलशान्मध्ये कुम्भोपरि सौवर्णानन्तप्रतिमां वेदचतुष्टयींक्षेत्रेशद्वयं च संस्थाप्य। अभिनो देवी-वषट्ते तावत्। प्रदानं। अग्नयेनमः[६]। प्रतद्विष्णुः[१]॥ तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृण्वते द्योरुपस्थे। अनन्तमऽन्यद्रुशदस्यपाजः कृष्णमन्यद्धरितः सम्भरन्ति[२]॥ यस्या अनन्तो अहुतस्त्वेषश्चरिष्णुरर्णवः। अमश्चरति रोरुवत्[३]॥ भगवते वासुदेवायनमः ८ अनन्तनाम्नेनारायणायनमः। प्रतिमाकलशेषु। सहस्रशीर्षा १६ (प्रत्येकस्यैकैकर्क् शेषा मध्ये) पुनः विराजे[१]-नमः। ब्रह्मणे[२]। शम्भवे[३]। कुमाराय[४]। नारदाय[५]। मनवे[६]। आत्रे-

याय[७] । कपिलाय[८] । व्यासाय[९] । यज्ञाय[१०] । धान्वन्तरये[११] पृथवे[१२] । नारायणाय[१३] । वृषस्कन्दाय[१४] । मध्ये । सङ्कर्षणात्मने नारायणायनमः ॥ पुनः । मोहिणीसहितायानन्ताय[१] । श्रीस-अनर्घ्याय[२] । पद्मिनीस-रुक्मिणीकान्ताय[३] । महाधनास-गरुडध्वजाय[४] । अञ्जनास-झष-कूर्माय[५] । मङ्गलास-पृथ्वीधराय[६] । वरदास-नरसिंहाय[७] । शुभास-उपेन्द्राय[८] । शिवदूतीस-जामदग्न्याय[९] । दुर्गास-रघुनन्दनाय[१०] । ब्राह्मीस-कृष्णाय[११] । चित्रमङ्गलास-बुधरूपाय[१२] । रेवतीस-कल्किने[१३] । हरिसिद्धास-मधुसूदनाय[१४] । मध्ये । वारुणीस-अनन्ताय-नमः ॥ चतुर्वेदेश्वरेभ्यः । विष्णुपञ्चायतनदेवताभ्यः । इन्द्राय वज्रहस्ताय । ऐन्द्राग्नं ॥ ॥ यजमानः ॥ ॥ अनाभौ । पुरुष-सूक्तन्यासः ॥ वामेकरे सहस्रशीर्षाः पुरुषं दक्षिणेकरे । एतावानस्य पादेतु त्रिपादूर्ध्वस्तु दक्षिणे ॥ तस्माद्विराड्वामजानौ यत्पुरुषेण दक्षिणे । तं यज्ञं तु तथा कट्यां तस्माद्यज्ञात्तु गुह्यके ॥ तस्मादच स्तथानाभौ तस्मादश्वा हृदि न्यसेत् । यत्पुरुषं तु ग्रीवायां ब्राह्मणो वामबाहवे ॥ चन्द्रमादक्षिणे बाहौ नाभ्यां आसीत्तथा मुखे । सप्तास्यासंस्तथैवाक्ष्णोर्मूर्ध्नि यज्ञेन विन्यसेत् ॥ ब्रह्मणेनमः पादयोः । भास्करायनमः जंघयोः । शेषायनमः जान्वोः । व्योमव्यापिनेनमः ऊर्वोः । ईशानायनमः कट्यां । विश्व-रूपायनमः नाभौ । महाकालायनमः उदरे । सृष्टिसंहार-कायनमः वक्षसि । अनन्तायनमः स्कन्दयोः । वामनायनमः

वक्त्रे। विष्णवेनमः नासिकायां। केशवायनमः नेत्रयोः। नरसिं-
हायनमः ललाटे। पद्मनाभायनमः मूर्ध्नि॥ ॥अ, हृदयाय।
नं, शिरसेस्वाह। ता शिखायै। य, नेत्राभ्यांवौषट्। न कवचायहूं।
मः अस्त्रायफट्॥ तीर्थस्नेयं। ॐभूःपुरुषमा ३ वाह। अन-
न्तचतुर्दशीव्रतोद्यापननिमित्तं अनन्तपूजनं कलशादिपूजनमर्चामहं
करिष्ये। दक्षिणान्तं॥ ॥अथाग्निकर्म॥ ॥पात्रं तिला।
आज्यभागान्ते समिद्धोमः। प्रतद्विष्णुः १०८। निष्वसीद।
प्रदानं। ऐन्द्राग्नं। एवमन्नाज्यहोमौ॥ तर्पणं। आज्येन विष्णु-
पञ्चकं। कूष्माण्डं। यवतिलैः गायत्रीब्राह्मणं। ऋतुपतिंहुत्वा
प्रायश्चित्तस्थानकं। अध्वर्योयं। प्रदानं। विष्णुपञ्चायतनदेव-
ताभ्यः। सूक्तानि। तर्पणं। रुद्रपञ्चकदेवीपञ्चकरक्षोघ्नमन्त्राः।
तर्पणं। ऋतुतिथिः। नैवेद्यं। इळामग्नेः। अग्नेत्वं पारयेति-
च। वैश्वानरायेत्युपस्थानं। यद्देवा देव इत्यञ्जलिः। वैश्वानरा-
येतितर्पणम्॥ हुतशेषणं। पूर्णान्तं। प्रभाते स्नानं कृत्वा मण्डलपू-
जनं कृत्वा च। गोप्रदानं। ब्राह्मणपूजनं। दक्षिणान्तं। क्षेत्र-
शबलिः। प्रतिमाकलशच्छिद्रं। आपन्नोसि। ध्येयः सदा॥
अनन्तब्रह्माण्डधर्त्रे विश्वरूपधराय च। नमो माहात्मदेवाय
ह्यनन्तायनमोनमः॥ सर्गस्थितिप्रलयकारक विश्वरूप विश्वा-
त्मकाऽद्य नितरां भगवन्नऽनन्त। ध्यानार्चनस्तुतिजपादिविशि-
ष्टसारां पूजां गृहाण विधिना रचितां मयैताम्॥ वाचापि

यन्निगदितं वरदाऽतिघोरं यच्चेतसाऽपि परिचिन्तितमेव सर्वम्। यत्कर्मणापि रचितं मम किल्विषं तदागच्छ नाशय विभो पुरुषोत्तमाशु[३] ॥ अज्ञानदोषवशतोपि च यद्विहीनं यच्चित्तचञ्चलतयाऽनवधानतो वा । ज्ञप्तिभ्रमाद्विषयचापलतस्तदेतद्देव क्षमस्व सफलं व्रतमस्तु मेऽर्घ्यं[४] ॥ अनन्तरूपाय नरोत्तमाय ह्यनन्तभक्त्याश्रितमुक्तिदाय। अनन्तदेहाय नमोऽस्तु तुभ्यमऽनन्तदेहाधिशयालवेऽब्धौ[५] ॥ संसारपाथोनिधितारणाय निःशेषभूतोदयकारणाय । नमोऽन्तकत्रासनिवारणाय विपद्द्रुमोन्मूलनकारणाय[६] ॥ परावबोधप्रविचारकाय भृशातिघोरासुरनाशकाय । नितान्तभक्ताभिरताशयाय नमोस्त्वनन्ताय सदाश्रयाय[७] ॥ नमो जगन्मङ्गलकर्मकारिणे कल्पक्षयाम्भोधिजलविहारिणे । सशार्ङ्गशङ्खाय रथाङ्गपाणयेऽच्युताय हृत्पङ्कजमध्यचारिणे ॥ अनन्तसंसारमहासमुद्रे मग्नं हि मामुद्धर लोकनाथ। अनन्तदेहे विनियोजयस्व ह्यनन्तरूपाय नमोनमस्ते[९] ॥ अनन्तगुणरत्नाय विश्वरूपधराय। महात्मने सुरेशाय नमोऽनन्ताय साक्षिणे[१०] ॥ पूर्वादितः । मोहिनीसहिताऽनन्त नभस्ये मासि सर्वदा। भक्त्याऽर्चितो मया देव भवाभीष्टफलप्रदः[१] ॥ श्रिया सह महानर्घ्य पूजितोऽसि विशेषतः। संसारार्णवमग्नं मां भक्तियुक्तं समुद्धर[२] ॥ पद्मिन्या सह सुप्रीतो रुक्मिणीकान्त साम्प्रतम्। दशं सानुग्रहां देहि मम मोहहरां पराम्[३] ॥ महाधनान्वि-

तस्त्वं भो भगवन् गरुडध्वज। आधत्स्व विधिनोपेतां पूजामेतां कृतां मया[४] ॥ वरदानाहितरत झषकूर्माऽञ्जनायुतः । पाहि मां करुणासिन्धो द्रुतमन्तकजाद्भयात्[५] ॥ मङ्गलान्वित गोविन्द सततं भक्तवत्सल । गृहाण मत्कृतां पूजां पृथ्वीधर वरप्रद[६] ॥ वरदोपेत मे नित्यं नरसिंहवपुर्धर । आसुरान्तकरोदार गृहाणार्चां मया कृताम्[७] ॥ शुभायुक्त दयाधार शङ्खचक्रगदाधर । पाह्युपेन्द्र जगन्नाथ मां मृत्युजनिताद्भयात्[८] ॥ शिवदूत्याऽन्वितः क्षत्रकुलान्तक वरप्रद । जामदग्न्य भृशोद्विग्नं रक्ष मां शरणागतम्[९] ॥ दुर्गायुक्त जगद्भारध्वंसनैककृतेक्षण । रघुनन्दन मां पाहि राक्षसाधिपमर्दन[१०] ॥ ब्राह्म्या च सहितार्तिहन् कृष्णाऽपारयशोनिधे । भवपाशावृतं मां त्वं मोचयाऽऽकुलमानसम्[११] ॥ अहिंसानिरताऽभीक्ष्णं घृणानिर्भरिताशय । चित्रमण्डलयाऽभ्यर्चां बुधरूप गृहाण मे[१२] ॥ रेवतीयुक्त भोः कल्किरूप म्लेच्छविनाशन । देहि मे भक्तियुक्तस्य सद्गतिं परमां प्रभो[१३] ॥ भवद्भक्तिमतोऽसङ्ख्यरूपाऽलं मधुसूदन । सुप्रीतो भव कृपया देहि पूजाफलं मम[१४] ॥ आरोग्यं तरणिः ॥ आह्वानं ॥ ततः कलशान् प्रतिपादयेत् ॥ प्रतिमां होत्रे । सावित्राणि । अद्यतावत् । अनन्तचतुर्दशीव्रतोद्यापननिमित्ते मोहिनीयुतानन्तकलशं सहिरण्यादि अनन्तरूपाय ब्राह्मणाय ददानि ३ ॥ एवं दत्त्वा । दध्यऽक्षतादिभिस्तर्पणं ॥ ये चरन्ति सदा मेरौ ब्रह्माधिष्ठिताः सुराः । तृप्तिमायान्तु तेऽनन्तव्रतस्योद्यापनाद्धरे ।

(पृ. १५) एतादेवताः। ब्राह्मणपृच्छां विसृज्य। पूर्णां दत्वा। वैश्वदेवादि। उदकलशं। स्वरास्त्वाम्ऽभिषिञ्चन्तु॥ तृणासनादि दत्वा। अनन्तशाखकल्पाय॥ इत्यऽनन्तचतुर्दशीव्रतोद्यापनम्॥ ११॥

## अथ कृष्णशिवचतुर्दशीव्रतोद्यापनम्॥ १२॥

अश्मचूर्णेन ग्रहमण्डलं तद्दक्षे त्रयोदशकलशेषु मध्ये प्रतिमाकलशं वेदचतुष्टयीं क्षेत्रेशद्वयं च संस्थाप्य ) वषट्ते विष्ण। तावत्। प्रधानं। अग्नयेनमः। यो रुद्रो अग्नौ। भवायदेवायनमः पूर्वादितः कलशेषु। इमा रुद्रायेति चतुर्दशर्चः, पुनर्मध्ये पञ्चदशीं॥ अथवा। आतेपितर्मरुतां सुम्नमेतु मानः सूर्यस्य सन्दृशे युयोथाः। अभिनो अवति क्षमेत प्रजायेमहि रुद्र प्रजाभिः॥ त्वादत्तेभी रुद्र शन्तेभिः शतं हिमा अशीय भेषजीभिः। व्यस्मद्द्वेषो वितर व्यंहो व्यमीवाश्चान्तयस्वा विषूचीः॥ श्रेष्ठो जातस्य रुद्रश्रिया सितवस्तमस्तव मां वज्रबाहो। पर्षिणः पारमंहसः स्वस्तिविश्वा अभीतीरपसो युयोधि॥ माता रुद्र चुक्रुधा मा नमोभिर्मा दुष्कृती वृषभमासहूती। तन्नो वीरां अर्पय भेषजीभिर्भिषिक्तमन्त्वा भिषिजां शृणोमि॥ हवीमभिर्हवतेयो हविर्भिरवस्तोमेभि रुद्रन्दिषीय। ऋदूदरः सुहवो मानो अस्यै बभ्रुः सुशिप्रोरीरधर्मनायै॥ उन्मामन्द वृषभो मरुत्वान्त्वक्षीयसा वयसा नाधमानम्। घृणीवच्छायामरपा अशीया विवासेयं रुद्रस्य सुम्नम्॥ क्वस्यते रुद्र मृळयाकुर्हस्तो यो अस्ति भेषजो

जलाषः । अपभर्तारपसो दैव्यस्याभीन्नमा वृषभचक्षमीथाः ॥ प्रबभ्रवे वृषभाय द्वितीचेमहो महीं सुष्टुता सीरयामि । नमस्या कल्मली किन्ननमोभिर्गृणीमसि त्वेषं रुद्रस्य नाम ॥ स्थिरेभिरङ्गैः पुरुरूप उग्रो बभ्रुः शुक्रेभिः पिपिशे हिरण्यैः । ईशानादस्य भुवनस्य भूरेर्नवातयोषद्रुद्राद्ऽसूर्यम् ॥ अर्हन्बिभर्षि सायकानिधन्वार्हन्निष्कं यजनं विश्वरूपम् । अर्हन्निदन्दयसे विश्वमत्वन्नवा अजीयो रुद्र त्वदस्ति ॥ स्तुहि श्रुतं गर्भदं य्युवानं मृगन्नभीममुपहत्नमुग्रम् ॥ मृढ जरित्रेरुद्रस्तवानोन्यन्ते अस्मिन्निर्वपन्तु सेनाः[११] ॥ कुमारश्चित्पितरं वन्दमानं प्रतिनानामरुद्रोपयन्तम् । भूरेर्दातारं सत्पतिं गृणीषे स्तुतस्त्वं भेषजरास्यस्मे[१२] ॥ यो वा भेषजा मरुतः शुचीनि या शन्तमा वृषणो या मयोभूः । यानि मवरं वृणीता पितानस्ता शंच य्योश्च रुद्रस्य वश्मि[१३] ॥ मध्ये प्रतिमायां परिणो हेतीरुद्रस्य वृज्याः परित्वेषस्य दुर्मतिर्महीगान् । अवस्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृढ[१४] ॥ एवा बभ्रो वृषभ चेकितान यथादेवना ह्यणीषेण हंसि । हवन्नश्रुत्रोबोधि वृषाकये बृहद्वदेम विदथे सुवीराः[१५] ॥ ( पुनः ) उमासहितायशिवाय[१] । कात्यायनीस-रुद्राय[२] । गौरीस-वृषाकपये[३] । कालीस-हराय[४] । हैमवतीस-त्र्यम्बकाय[५] । ईश्वरीस-श्रीकण्ठाय[६] । शिवास-भवाय[७] । भवानीस-ईश्वराय[८] । रुद्राणीस-शर्वाय[९] । शर्वाणीस-महादेवाय[१०] । सर्वमङ्गलास-पशुपतये[११] । अपर्णास-महेश्वराय[१२] ।

सृष्टिस-ब्रह्मणे[१३] । मध्येप्रतिमायां । शक्तिस-अमृतेश्वराय[१४] । चतुर्वेदेश्वरेभ्योनमः । ऐन्द्राग्नं ॥ ॥ यजमानः ॥ ॥ अनाभौ । वामकरे । इमा रुद्राय ॥ योरुद्रो अग्नौ हृ० । ॐ त्र्यम्बकं शिरसि । यजामहे ललाटे । सुगन्धि मुखे । पुष्टिवर्धनं हृदये । उर्वारुकमिव नाभौ । बन्धनात् कट्यां । मृत्योः ऊर्वोः । मुक्षीय जानुनोः । मा गुल्फयोः । अमृतात् पादयोः ॥ तीर्थस्नेयं । जीवादानं । देहवन्न्यासः । ॐभूःपुरुषमा २ । तत्पुरुषायविमहादेवाय २ । सर्वेश्वरायवि-शूलहस्तायधी-तन्नोरुद्रः प्र २ । कृष्णचतुर्दशीव्रतोद्यापननिमित्तं । अर्चामहं करिष्ये । मृळानो रुद्रो, ध्रुवा द्यौरित्यासनं । महागणपतये । अग्नये । भवायदेवाय[६] । उमास-शिवाय १४ चतुर्वेदेश्वरेभ्यः । विष्णुपञ्चायतनदेवताभ्यः । इन्द्रायवज्रहस्ताय । युष्मान्वः पूजयामि । इमारुद्राय । युञ्जाते सान । महागणपतिं आवाहयिष्यामि ॐमावाय ॥ शुद्धस्फुटिकसंकाशं । लिङ्गेऽत्र भक्तदयया ॥ अश्यामते । हिरण्यवर्णा इतिपाद्यं । त्वेषां वयं । आपो हिष्ठा इत्यर्घ्यम् । देवो वराहं । शन्न आप इत्याचमनीयं । इदं पित्रे । इदमाप इति मन्त्रस्नानीयं ॥ पयोदधि । एकविंशतिस्नानं । पञ्चदशस्नानं । श्लोकतर्पणं । त्र्यम्बकमिति मन्त्रगुडकं । रक्षोहणमित्यारात्रिका । रथे अक्षेष्वित्यनुलेपनं । मृळत्वमसभ्यं । युवा सुवासः इतिवस्त्रं । मानो महन्तं । यज्ञोपवीतमितियज्ञोपवीतं । मानस्तोके । गन्धद्वारामितिगन्धः ।

उप ते स्तोमन् । पुष्पवतीति पुष्पं । प्रतिमायां पूर्वादितः भवायदेवायक्षितिमूर्तयेनमः । शर्वायदे-जलमू-। रुद्रायदे-तेजोमू-। पशुपत-वायुमू-। उग्रायदे-आकाशमू-। महादे-सोममूर्तये-। भीमायदे-सूर्यमू-। ईशानायदे-यजमानमू-। ऊर्ध्वे । ईश्वरायनमः । अधः शिवायसपरिवाराय अर्घोनमः पुष्पंनमः । आरे ते गोघ्नं । धूरसि इति धूपं । अवोचमा । तेजोसि इति रत्नदीपं । त्वमग्ने रुद्रो इति चरुः । ईशानान्त्वेति कुसुमाञ्जलिः । दुहान्तेद्यौरित्युर्ध्वप्रदक्षिणं । दक्षिणान्तं ॥ ॥ अथाग्निकर्म ॥ ॥ पात्रं तिला । आज्यभागान्ते । समिद्धोमः । यो रुद्रो अग्नौ १०८ निष्वसीद । प्रधानं ऐन्द्राग्नं । एवमन्नाज्यहोमौ ॥ विष्णुपञ्चकं कूष्माण्डं । यवतिलैः गायत्रीब्राह्मणं । अध्वर्योयं । ऋतुपतिं हुत्वा । प्रायश्चित्तस्थानकं तर्पणं । प्रधानं । पञ्चायतनदेवताभ्यः । सूक्तानि तर्पणं । रुद्रपञ्चकदेवीपञ्चकरक्षोघ्नमन्त्राः । ऋतुतिथिः । नैवेद्यं । इळामग्ने । अग्ने त्वं पारयेति च ॥ वैश्वानरायेत्युपस्थानं । यद्देवादेवेत्यञ्जलिः । वैश्वानरायेति तर्पणं । हुतमेक्षणं । पूर्णान्तं । ( प्रातःस्नात्वा संक्षेपेण मण्डलपूजांविधाय ) गोप्रदानं । ब्राह्मणपूजा ॥ ॐभूःपुरुषमावा ३ । दक्षिणान्तं ॥ क्षेत्रेशबलिः । प्रतिमाकलशप्रच्छा ॥ आपन्नोसि ॥ फाल्गुने मासि यो देवो भक्त्या सम्पूजितः शिवः । उमया सहितः सोद्य प्रीयतां मम शङ्करः ॥ चैत्रे मासि तु यो देवो भक्त्या रुद्रश्च पूजितः । कात्यायन्या युतः

सोद्य [२]प्री-।। वैशाखे कृष्णपक्षस्य चतुर्दश्यां वृषाकपिः । गौरी-
युतोऽर्चितः सोद्य [३]प्री ॥ ज्येष्ठे कृष्णचतुर्दश्यां यः कालीसहितो-
हरः । आराधितो मया सोद्य [४]प्री ॥ आषाढे त्र्यम्बको भक्त्या
हैमवत्याऽन्वितोऽर्चितः । कृष्णे भूततिथौ सोद्य [५]प्री ॥ श्रीकण्ठः
श्रावणे कृष्णचतुर्दश्यां मयाऽर्चितः । ईश्वरीसहितः सोद्य [६]प्री ॥
चतुर्दश्यां कृष्णपक्षे भवो भाद्रपदे विभुः । शिवान्वितोऽर्चितः
सोद्य [७]प्री ॥ ईशानश्चाश्वयुक्कृष्णचतुर्दश्यां मयाऽर्चितः । भवानी-
सहितः सोद्य [८]प्री ॥ रुद्राणीसहितः शर्वः कार्तिके पूजितो मया ।
चतुर्दशीतिथौ सोद्य [९]प्री ॥ मार्गशीर्षे महादेवः शर्वाण्या सहि-
तोऽर्चितः । चतुर्दश्यां प्रभुः सोद्य [१०]प्री ॥ पौषे कृष्णचतुर्दश्यां
सर्वमङ्गलया युतः । देवः पशुपतिः सोद्य [११]प्री ॥ माघे कृष्ण-
चतुर्दश्यां पार्वत्या सहितः शिवः । भक्त्या सम्पूजितः सोद्य[१२]प्री ॥
( मध्ये ) मलिम्लुचे चतुर्दश्यां ब्रह्मा सृष्ट्या युतो विभुः ।
भक्त्या संपूजितः सोद्य प्रीयतां मम शङ्करः[१३] । ( ऊर्ध्वे प्रतिमायां )
एते सम्पूजिता रुद्राः प्रतिमासं मया प्रभो । उपवासेन दानेन
यमैः सनियमैस्तथा ॥ त्वद्भक्त्या परमेशान प्रीतास्ते चाद्य
सन्तु मे । भवार्णवे निमज्जन्तमुद्धरन्तु तवाज्ञया ॥ प्राग्ज-
न्मार्जितपापेन यां कांचिद्दुष्टभावनाम् । प्राक्पुनः कृतवा-
नस्मि तां मे नाशय शङ्कर ॥ अज्ञानाज्ज्ञानदौर्बल्याद्देशका-
लादिविप्लवात् । असम्पूर्णं गतं यच्च भूयात्सम्पूर्णमद्य मे ॥

अज्ञानान्धेन यत्किञ्चिन्मया खण्डं कृतं व्रतम् । तदद्य पूर्णितं भूयात्त्वत्प्रसादान्महेश्वर ॥ अज्ञानाज्ज्ञानतो वापि व्रतमूनाधिकं च यत् । दासस्य मम दीनस्य क्षन्तव्यं परमेश्वर ॥ पारितं त्वत्प्रसादेन शिवाराधनमीश्वर । जहि मोहमयांल्लोभान्पूर्णकामं च मां कुरु ॥ भक्त्या विज्ञापयामीश नाथेयं मे चतुर्दशी । पारिता त्वत्प्रसादेन देहि मेऽभिमतं फलम् ॥ जपो होमो जपयिता पूज्यः पूजनपूजकः । ध्यानं ध्येयं तथा ध्याता त्वमेव परमेश्वर ॥ इयत्कालं व्रतं चीर्णं भगवन्यन्मया प्रभो । तदद्य पूर्णं मे भूयात्त्वत्प्रसादाच्च शङ्कर ॥ किं नाम ते व्रतं किंचिद्दानं किंचैव पूजनम् । वराका मानुषाः कुर्युस्तत्र देवालये गताः ॥ भक्तिमात्रमिदं सर्वं देवा ब्रह्मादयोपि ते । पितुः पुत्रास्तदङ्कस्थाः कुर्वीरन्भोगलिप्सया ॥ वन्द्यः शिवः स्मर शिवं विदितं शिवेन वन्दे शिवाय न शिवात्परमस्ति किञ्चित् । विश्वं शिवस्य वशगं मम धीः शिवेऽस्तु त्रायस्व मां शिवशिवेति जपन्तु वाचः ॥ आह्वानं ॥ नमो ब्रह्मणे । कलशान्प्रतिपादयेत् । सावित्राणि । अद्यतावत् आत्मनो-कृष्ण(शिव) चतुर्दशीव्रतोद्यापननिमित्तं उमास-शिवकलशं सहिरण्यं सवाससं सतण्डुलादि अमुकब्राह्मणाय ददानि २ । एवं । त्रयोदशकलशानूदत्त्वा । होत्रे प्रतिमां दद्यात् ॥ ततो दध्यक्षततिलैस्तर्पणम् । ये चरन्ति सदा मेरौ ब्रह्मणाधिष्ठिताः सुराः । उद्यापना-

चतुर्दश्यास्तृप्तिमायान्तु ते सदा ॥ (पृष्ठ) ॥ एता देवताः ॥ ब्राह्मणपृच्छां विसृज्य । पूर्णा ॥ वैश्वदेवादि । उदकलशं ॥ सुरास्त्वामऽभिषिञ्चन्तु ॥ तृणासनादि दत्वा । अनन्तशाखकल्पायेतिब्राह्मणान्नमेत् । इति कृष्ण (शिव) चतुर्दशीव्रतोद्यापनम् ॥ १२ ॥

## अथ पूर्णिमोद्यापनं ( कार्तिकमासवत् ) ॥ १३ ॥

अश्मचूर्णेन ग्रहमण्डलं तद्दक्षे द्वादशकलशानां मध्ये त्रयोदशं प्रतिमाकलशं तद्दक्षे चतुर्वेदेश्वरं क्षेत्रेशद्वयं च संस्थाप्य । अग्निनो देवीवषट्ते विष्ण तावत् । प्रधानं । अग्नयेनमः । तद्विष्णोः पर । श्रीश्चते लक्ष्मीश्च । उदुत्तमं वरुण । इमं मे वरुणश्रुधी । देवानां पत्नी । सोमो राजामृतं सुत । या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् । गयस्फानः प्रतरणः सुवीरो वीरहा प्रचरा सोम दुर्यान् नमः ( आदौ मासपतिं देवं विष्णुं महिमया युतम् । ततस्तारापतिं चन्द्रं तन्नामानि ततोऽर्चयेदित्युक्तेः ) "कल्पितेन" ज्यैष्ठे महिमास-उपेन्द्रायनमः, वासुदेवायनमः । प्रतिमायांमध्ये । चन्द्रमसे, अमृतकलाधारिणे, नित्यानन्दमयाय, परमेश्वरजटामुकुटवासिने, जगदाप्यायनकर्त्रे, रोहिणीसहितायचन्द्रमसेनमः ॥ पूर्वादितः कलशेषु । स्वादोरभक्षि इति प्रत्येकयर्चा पुष्पं शेषा मध्ये । पुनः । मृगशिरःसहिताय मृगाङ्काय, पुष्यास-सुधांशवे, मघास-इन्दवे, पूर्वफाल्गुनीस-कुमुदबन्धवे, चित्रास-चन्द्रमसे, विशाखास-ओषधी-

पर्तये, ज्येष्ठास-निशाकरायँ, पूर्वाषाढास-सुमर्नसे, श्रवणास-
हिमांशवे, पूर्वभाद्रपदास-द्विजराजायँ, अश्विनीस-विधँवे, कृत्ति-
कास- कलानिधयेनर्मः । चातुर्वेदेश्वरेभ्यः । विष्णुपञ्चायतन-
देवताभ्यः । इन्द्रायवज्रहस्ताय । ऐन्द्राग्नं ॥ ॥ यज-
मानः ॥ ॥ अन्नाभौ ॥ पुरुषसूक्तेन विष्णुन्यासं कृत्वा । वाम-
करे, स्वादोरभक्षि । दक्षकरे, अन्तश्च प्रागाँ । वामपादे अपाम
सोममऽमृताँ । दक्षपादे, शन्नो भवहृँ । वामजानौ, इमे मा पीता
यँ । दक्षजानौ, अग्निर्नमा मथिँतं । कट्यां, इषिरेण ते मनसाँ ।
गुह्ये, सोम राजन्प्रार्ण । नाभौ, त्वं हि नस्तन्वः सोमँ । उदरे,
ऋदूदरेण सख्याँ । ग्रीवायां, अपत्या अस्तु । वामस्कन्धे, यो न
इन्दुः पितँरो । दक्षिणस्कन्धे, त्वं सोम पितृभिः संविदाँनो ।
मुखे, त्रातारो देवा अँधि । नेत्रयोः, त्वं नः सोम विश्वतो वयोधाँ ॥
दक्षपादे, त्वंसोमासि सत्पँतिः । वामपादे, त्रातारो देवा अधि-
वोचताँनो । जङ्घयोः, अग्निर्नमा मथितं सन्दिदीपः प्रचँ ।
दक्षजानौ, अयक्ष्मतुरगृभीतो विश्वजिदुद्भिदित्सोमः । ऋषिर्विप्रः
काव्येनँः ॥ वामजानौ, त्वं सोम तनूकृद्भ्योऽदोषेभ्योऽन्यकृद्भ्यः।
उरु यन्तासि वरूथमँ ॥ ऊर्वोः । त्वं चित्ती तव दक्षैर्दिव आपृ-
थिव्या ऋजीषिन् । या वीराघस्य चिद्भिर्षः । वामकुक्षौ, आप्या-
यस्व समेतु तेँ । दक्षिणकुक्षौ, सन्ते पयांसि समयन्तु वार्जाः ।
लिङ्गे, त्वं सोम प्रचिकेतो मनीषा त्वं रजिष्ठा मनुनेषि पन्थाम् ।

तव प्रणीते पितरो न इन्दुर्देवेषु रत्नमभजन्त धीराः । गुह्ये,
सोमाय पशुमते त्वं सोम महो भगं त्वं यून ऋतायते । दक्ष-
न्ददामि जीवसे[१०] ॥ नाभौ, या ते धामानि दिवि याः पृथिव्यां[११] ॥
उदरे, या ते धामानि हविषा यजन्ति ता ते विश्वा परिभू-
रस्तु यज्ञम् । गायस्फानः प्रतरणासुवीरो वीरहा प्रचरा सोम
दुर्यान्[१२] ॥ स्तनयोः, देवेनन्नो मनसा देवसोम रायोभागं सहसा-
वन्नभियुद्ध्य । मात्वातनदीशिषे वीर्यस्योभयेभ्यः प्रचिकित्सा
गविष्टौ[१३] ॥ कण्ठे, त्वमिमा ओषधीः सोमविश्वास्त्वमापो अज-
नयस्त्वं गाः । त्वमाततन्थोर्वन्तरिक्षं त्वं ज्योतिषा विततमो
चवर्थ[१४] ॥ दक्षस्कन्दे, सोमोधेनुं सोमो अर्व[१५] । वामस्कन्दे,
आषाढं यत्स्वपृतनासु पप्रिं स्वर्षामप्सां वृजिनस्य गोपाः । भरे-
षुजां सुक्षितिं सुश्रवसं जायन्तन्त्वामनुमदेम सोम[१६] ॥ दक्षबाहौ,
सोमानं स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य्य औशिजः[१७] ।
वामबाहौ, सोम यास्ते मयोभुवाऊतयः सन्ति दाशुषे । ताभि-
र्नोऽविता भव[१८] ॥ ओष्ठयोः, स्वादिष्ठया मादिष्ठया पवस्व सोम
धारया । इन्द्राय पातवे स्वतः[१९] ॥ आस्ये, सोम गीर्भिष्ट्वा वयं
वर्धयामो वचोविदः । सुमृळीको न आविश[२०] ॥ दन्तेषु, यत्ते
राजञ्छतं हविस्तेन सोमाऽभि रक्षनः । अरातीवामानस्तारी-
र्मोचनः किश्चनाममदिन्द्रायेन्दो परिस्रव[२१] ॥ दक्षकपोले । चन्द्र-
मा मनसो जातः[२२] । वामकपोले, सचित्रचित्रं चितयन्तमस्मे चित्र-

क्षत्र चित्रतमं वयोधाम् । चन्द्रं रयिं पुरुवीरं बृहन्तं चन्द्र चन्द्राभिर्गृणते युवस्व[२३] ॥ नासाग्रे, चन्द्रमऽग्निं चन्द्ररथं[२४] । दक्ष-नेत्रे, अपामसोमममृता अभूमाऽगन्म ज्योतिरऽविदाम देवान् । किंनूनमस्मान्कृणवद्ऽरातिः किमु धूर्तिरऽमृतमर्त्यस्य[२५] ॥ वाम-नेत्रे । इमे मा पीता यशसा उरुष्यवो रथं न गावः सुमना ह पर्वसु । ते मा रक्षन्तु विस्रसश्चरित्रादुत मास्रामाद्या वय-न्त्विन्दवः[२६] ॥ भ्रूमध्ये, यत्र ब्रह्मा पवमानच्छन्दस्यां वाचं वदन् । ग्राव्णा सोमे महीयते सोमेरनानन्दं जनयदिन्द्रायेन्दो परि-स्रव[२७] ॥ उभयोर्भ्रुवोः, देवीः षडुर्वीरुरुणस्कृणुत विश्वेदेवास इह वीरयध्वम् । महाम्महि प्रजयासस्तनूभिर्मारधामाद्विषंते सोम-राजन्[२८] ॥ ललाटे । मर्माणि ते वर्मणाच्छादयामि सोमस्त्वंरा-जाऽमृतेनानुवस्ताम् । उरुर्वरीयो वरुणस्ते कृणोतु यजन्तस्त्वा नु देवा मदन्तु[२९] ॥ ब्रह्मरन्ध्रे । शन्नोभव हृद आपीत इन्दो पीतेव सोम सूनवे सुशेवः । सख्येव सख्ये उरुशंस धीरः प्राण आय-र्जीवसे सोम तारीः[३०] ॥ तीर्थस्नेयं । अद्यतावत् । महागणपतये अग्नये[६] । ज्यैष्ठे महिमास-उपेन्द्राय । वासुदेवार्घ्यं । चन्द्रमसे अमृतकलाधारिणे, नित्यानन्दमयाय, परमेश्वरजटामुकुटवा-सिने, जगदाप्यायनकर्त्रे, रोहिणीस-चन्द्रमसे । मृगशिरःस-मृगाङ्काय[१], पुष्यास-सुधांशवे[२], मघास-इन्दवे[३], पूर्वफाल्गुनीस-कुमुदबन्धवे[४], चित्रास-चन्द्रमसे[५], विशाखास-ओषधीपतये[६],

ज्येष्ठास-निशाकरायँ, पूर्वाषाढास-सुमनसे, श्रवणास-हिमांशवे, पूर्वभाद्रपदास-द्विजराजायँ[१०], अश्विनीस-विधँवे[११], कृत्तिकास-कलानिधँये[१२] । चातुर्वेदेश्वरेभ्यः । विष्णुपञ्चायतनदेवताभ्यः । अभयङ्करीदेव्यै । इन्द्रायवज्रहस्ताय । दीपोनमः । जीवादानं । देहवन्यासः । ॐभूःपुरुषमावा २ नमोऽस्त्वनन्ताय ३ निशाकरायवि-शीतरश्मयेधी-तन्नः सोमः प्र ३ । अद्यतावत् महागणपतेः । अग्नेः । ज्येष्ठे महिमास-उपेन्द्रस्य । वासुदेवस्य । चन्द्रमसः, अमृतकलाधारिणः, नित्यानन्दमयस्य, परमेश्वरजटामुकुटवासिनः, जगदाप्यायनकर्तुः, रोहिणीस-चन्द्रमसः ॥ मृगशिरःस-मृगाङ्कस्यँ, पुष्यास-सुधांशोः[२], मघास-इन्दोः[३], पूर्वफाल्गुनीस-कुमुदबन्धोः[४], चित्रास-चन्द्रमसः[५], विशाखास-ओषधीपतेः[६], ज्येष्ठास-निशाकरस्यँ, पूर्वाषाढास-सुमनसः, श्रवणास-हिमांशोः,पूर्वभाद्रपदास-द्विजराजस्यँ[१०] अश्विनीस-विधोः[११], कृत्तिकास-कलानिधेः[१२] । चातुर्वेदेश्वराणां । विष्णुपञ्चायतनदेवतानां । आत्मनो० पूर्णिमोद्यापननिमित्तं मासपतिविष्णुयुतचन्द्र पूजनमर्चामहं करिष्ये । सोम गीर्भिष्ट्वा वयं वर्धयामो वचोविदः । समृळीको न आविशः । ध्रुवा द्यौरित्यासनं । महागणपतये युष्मान्वः पूजयामि । स्वदोरभक्षि-युञ्जत मान उत । आवातवा हि भेषजं विवातवा हि यद्रपः । त्वं हि विश्वभेषजो देवानां दूत ईयसे । महागणपतिं-आवाहयिष्यामि ॥ आवाहयाम्यमरवृन्द ।

आवाहयाम्यहं देवं चन्द्रं नक्षत्रनायकम् । शम्भोः शिरसलङ्कारं प्रत्यक्षं लोकनायकम् । शुक्लवर्णो० इत्यादि । कलशेषु । एहि मृगशिरोयुक्तो मृगाङ्क सन्निधिं कुरु । मार्गशीर्षे हि भक्तस्य देहि पूजाफलं मम ॥ एहि पुष्यान्वितस्त्वं हि सुधांशो सन्निधिं कुरु । पौषे भवार्तितप्तस्य देहि[2] पू ॥ एहि मघान्वितः सम्यगिन्दो कृत्वा तु सन्निधिम् । माघे स्वभक्तौ रक्तस्य देहि[3] ॥ एहि त्वं फाल्गुनीयुक्तः कुमुदबन्धो कृतस्थितिः । फाल्गुने भक्तियुक्तस्य देहि[4] ॥ एहि चित्रान्वितस्त्वं हि चन्द्रमः सन्निधिं कुरु । चैत्रे नियमयुक्तस्य देहि[5] ॥ एहि विशाखासंयुक्त ओषधीशपते प्रभो । वैशाखे भक्तियुक्तस्य देहि[6] ॥ एहि ज्येष्ठान्वितः स्वामिन्निशाकर कृतस्थितिः । ज्यैष्ठे व्रतेन युक्तस्य देहि[7] ॥ एह्याषाढान्वितः सम्यक् सुमनः सन्निधिं कुरु । आषाढे भक्तिरक्तस्य देहि[8] पूजा ॥ एहि श्रवणयायुक्तो हिमांशो सन्निधिं कुरु । श्रावणे मासि भक्तस्य देहि[9] ॥ एहि भाद्रपदायुक्तो द्विजराज कृतस्थितिः । भाद्रपदे स्वभक्तस्य देहि[10] ॥ एहि त्वमश्विनीयुक्तो विधो स्वभक्तवत्सल । आश्विने व्रतयुक्तस्य देहि ॥ एहि त्वं कृत्तिकायुक्तो दयया भोः कलानिधे । कार्तिके व्रतयुक्तस्य देहि[12]॥ भगवन्पुण्ड ॥ ऋजुनीती वरुणो मित्रो नयतु विद्वान् । अर्यमा देवैः सजोषः ॥ हिरण्यवर्णा इतिपाद्यम् ॥ त्वं सोमासि सत्पते । आपो हि ष्ठा इत्यर्घ्यम् ॥ सन्ते पयांसि । शन्न आपो इत्याचम-

नीयं ॥ मक्षूधाता मातरिश्वा । इदमाप इति मन्त्रस्नानीयं ॥ एकविंशतिस्नानानि । स्वादोरभक्षि इति सूक्तेन षोडशस्नानं । श्लोकतर्पणं । याते धामानीतिमन्त्रगुडुकं । प्रत्यग्ने हर इत्यारात्रिका । रथे अक्षेषु ॥ त्वंनः सोम विश्वतो रक्षा राजन्नघायतः । नरेष्व त्वावतः सखा । युवासु इतिवस्त्रं ॥ त्वं न इन्दो ऊतिभिः । यज्ञोपवीतमिति यज्ञोपवीतं ॥ त्वं नः सोम मनोर्वशे जीवातुर्न मरामहे । प्रियः स्तोत्रो वनस्पतिः । गन्धद्वारामिति गन्धः ॥ उदुत्तमं । पुष्पवतीतिपुष्पार्घौ ॥ अग्नयेनमः, कृत्तिकाभ्यः, यमाय, खड्गाय, निर्ऋतये, विष्णवे, वरुणाय, मृगाय, वायवे, ताराभ्यः, वैश्रवणाय, सोमाय, महेशाय, चन्द्राय, ब्रह्मणे, अत्रिसुताय, अनन्ताय, समुद्राय, अद्भ्यः, आकाशाय, अस्ताचलाय, उदयाद्रये, अनित्याय, नित्याय, पूषायै, यशायै, सुमनसायै, प्रीतये, तुष्टिकर्यै, धृत्यै, बुद्धिकर्यै, सौम्यायै, मरीचये, अंशुमालिन्यै, शशिन्यै, मोहिन्यै, लक्ष्म्यै, छायायै, सम्पूर्णमण्डलायै, अमृतायै, अमृतकलाधारिण्यै, रोहिणीस-चन्द्रमसे अर्घोनमः पुष्पंनमः ॥ अपत्या अस्थुरनिरा । धूरसि इतिधूपं । येनइन्दुःपितरो- । तेजोसीति दीपः । सोम यास्ते मयोभुव ऊतयः सन्ति दाशुषे । ताभिर्नोविता भव । हिरण्यगर्भा इति मधुपर्कः । त्रातारो देवा । नाभ्या आसीदिति कुसुमाञ्जलिः । त्वं नः सोम विश्वतो वयोधा इति चत्वारिप्रदक्षिणानि ॥ अन्नंनमः ॥ दक्षिणायै ॥ ॥ अथा-

ग्निकर्म ॥ ॥ पात्रं तिला । आज्यभागान्तं । समिद्धोमः । आप्यायस्व १०८। निष्वसीद । प्रधानं। ऐन्द्राग्नं ॥ दूर्वाहोमः । सन्ते पयांसि समुसन्तु १०८ । अन्यदूर्वाहोमोनास्ति । अन्नहोमः । या ते धामानि १०८। निष्वसीद । प्रधानं। ऐन्द्राग्नं। एवमाज्यहोमः । सोमो राजामृतं १०८ । निष्वसीद गणपते । प्रधानं। ऐन्द्राग्नं। तर्पणं। आज्येन विष्णुपञ्चकं तर्पणं। कूष्माण्डं। आज्येन अग्नयेस्वाहा । यवतिलहोमः । गायत्रीब्राह्मणं । तर्पणं। अध्वर्योऽयं । प्रधानं । ऋतुपतिं च हुत्वा । प्रायश्चित्तस्थानकं। विष्णुबुधसूक्तं। तर्पणं। विष्णुपञ्चायतनदेवताभ्यः । इन्द्रापर्वता । सूक्तानि । ऐन्द्राग्नं । तर्पणं ॥ रुद्रपञ्चकदेवीपञ्चकरक्षोघ्नमन्त्राः । तर्पणं ॥ ऋतुतिथिः । नैवेद्यं। इळामग्ने । अग्ने त्वं पारयानव्यो इति च। वैश्वानरायेत्युपस्थानं । यद्देवा देवेत्यञ्जलिः । वैश्वानरायेति तर्पणं। हुतमेक्षणं। पूर्णा तावत् । प्रातः स्नात्वा संक्षेपतो मण्डलार्चनं कृत्वा। गोप्रदानं। ब्राह्मणपूजनं दक्षिणान्तं। क्षेत्रेशबलिः। चन्द्रकलशपृच्छां सम्पाद्य। ॐभूः पुरुषं विसर्जयामि नमः ३ नमोस्त्वनन्ताय ३ निशाकरायवि ३ ज्यैष्ठे महिमासउपेन्द्रस्य । वासुदेवर्स्य। चन्द्रमसः। पूर्णिमोद्यापननिमित्तं प्रतिमायुतकलशपूजनमच्छिद्रं ॥ यवोदकंनमः ॥ मध्ये । आपन्नोसि। ध्येयः सदा। आनन्दाह्लादकरणं तारकाकामुकं परम्। नमामि सोमं विश्वेशं चन्द्रं सम्पूर्णमण्डलम्॥ पूरयस्व च मां सर्वैः कामैः

पूर्णकूपापर । सोमलोकं नय त्वं मां पूर्णामृतकलानिधे ॥ पूर्वादितः । क्रियाद्रव्यभक्तिहीनं यच्च मोहाद्व्रतं गतम् । मृगाङ्क समृगशिरस्तत्संपूर्णं कुरुष्व मे[1] ॥ यत्किञ्चिद्दुर्मनस्कत्वान्मात्राहीनं गतं व्रतम् । पुष्यायुत सुधांशो त्वं तत्सम्पू[2] ॥ अन्तःकरणचापल्याद्यच्च दुष्टेन्द्रियैर्गतम् । संयुक्तो मघयेन्दो त्वं तत्सम्पू[3] ॥ यल्लुप्तं कुमुदबन्धो वैपरीत्याद्विधेर्व्रतम् । सफल्गुनीकः कृपया तत्सं[4] । कन्दर्पव्यसनात्किंचिद्यद्गतं चाप्यऽसाम्प्रतम् । चन्द्रमश्चित्रया सार्धं तत्सं[5] ॥ यज्ज्ञस्यऽनवधानाच्च व्रतं च गर्हितं गतम् । सविशाखौषधीनाथ तत्सम्पू[6] ॥ क्रियापचाराद्यत्किञ्चिद्गतं चाप्यऽसमञ्जसम् । निशाकर सज्येष्ठस्त्वं तत्सं[7] ॥ अज्ञानाद्व्यतिरेकाद्वा सुमनो यद्गतं व्रतम् । पूर्वाषाढान्वितस्त्वं भोस्तत्सं[8] ॥ अवलेपात्प्रमादाद्वा यन्न्यूनं विहितं गतम् । हिमांशो श्रवणायुक्तस्तत्सं[9] ॥ दुष्टभावाद्यच्च गतं पूर्वभाद्रपदान्वितः । द्विजराज प्रसन्नात्मा तत्संपू[10] ॥ असाधुजनसम्पर्काद्विधो यद्विहतं व्रतम् । अश्विन्या त्वं समाश्लिष्टस्तत्सम्पू[11] ॥ स्मरणाज्जपपाठाद्वा यल्लुप्तं च कलानिधे । कृत्तिकासंयुतस्त्वं च तत्सम्पूर्णं कुरुष्व मे[12] ॥ एते यूयं समेतास्तु पूजिता बहुभक्तितः । कार्तिक्यां पूर्णिमास्यां च भुक्तिमुक्ति प्रदायकाः ॥ कलशान्प्रतिपादयेत् । सावित्राणि अद्यतावत् आत्मनो-पूर्णिमोद्यापननिमित्ते इदं मृगशिरःसहितं मृगाङ्ककलशं सहिरण्यं सवाससादि मृगाङ्करूपाय ब्राह्मणाय

ददानि ३ एवं सर्वान्दत्वा । होत्रे प्रतिमां । सावित्राणि-रोहिणीयुतां चन्द्रप्रतिमां ददानि ३ ॥ दध्यक्षततिलैर्विप्रहस्ते तर्पणं । ये चरन्ति सदा मेरौ ब्रह्मणाधिष्ठिताः सुराः । तृप्तिमायान्तु ते सर्वे पूर्णिमोद्यापनाद्विधो ।(पृष्टे)एता देवताः । ब्राह्मणपृच्छां विसृज्य ॥ पूर्णां । वैश्वदेवादि । उदकलशं । स्वरास्त्वामभिषिञ्चन्तु ॥ मन्त्रार्थाः । तृणासनादि दद्यात् । इति पूर्णिमोद्यापनम् ॥ १३ ॥

## अथ संक्रान्तिव्रतोद्यापनम् १४ ॥

अश्मचूर्णेन गृहमण्डलं तद्दक्षे त्रयोदशकलशान्मध्ये प्रतिमाकलशं वेदचतुष्टयीं चोल्लिख्य ॥ घृतेन तिलतैलैर्वादीपान्दद्यात्त्रयोदश । अभिनोदेवीवषट्ते तावत् । प्रधानं । अग्नयेनमः । गायत्र्यैनमः ॐभूर्भुवः स्वः ३ । उद्वयन्तमसस्परि । उदुत्यञ्जातवे । चित्रन्देवानां । तच्चक्षुर्देवहितं । हंसः शुचिषद्व । मित्रो जनान्यात । घृणिः सूर्यमादित्यमऽर्चयन्ति तपः सत्यं मधुक्षिरन्ति । तद्ब्रह्म तदपः आपोज्योतीरसोमृतं ब्रह्म भूर्भुवः स्वरोंनमः । ॐह्रांह्रींसःसूर्यायनमः ॥ त्रयोदशकलशेषु । उदुत्यञ्जातवेदसमिति १३ प्रत्यृचं शेषाः प्रतिमाकलशे । पुनः प्रभास-आदित्याय । दीप्तिस-रवये । प्रकाशास-गभस्तये । मरीचिस-भानवे । तपनीस-सवित्रे । पाचनीस-दिवाकराय । हव्यवाहास-धर्माय । तेजोवतीस-तपनाय । शतधामास-भास्कराय । वरुणधामास-सूर्याय । पद्मगर्भास-त्वष्ट्रे । छायास-स्वर्पतये । सत्यभामास-नरकारयेनमः ।

चातुर्वेदेश्वरेषु । योरुद्रो अग्नौ । विष्णुपञ्चायतनदेवताभ्यः । इन्द्रा पर्वता । ऐन्द्राग्नं ॥ ॥ यजमानः ॥ ॥ अनाभौ । शिरसि, उदुत्यञ्जातसं[1] । ललाटे, अपत्ये तायवो यथा[2] । नेत्रयोः । अदृश्यम्नस्य केतवो[3] । श्रोत्रयोः, तरणिर्विश्वदर्शतो[4] । नासिकायां, प्रत्यङ्देवानां विशः[5] । मुखे, येना पावक चक्षसा[6] । कण्ठे, विद्यामेषि रजस्पृथ्वहा[7] । दक्षबाहौ, सप्त त्वा हरितो रथे[8] । वामबाहौ, अयुक्तसप्त शुन्ध्युवः[9] । हृदये, उद्वयं तमसस्परि[10] । नाभौ, उद्यन्नद्य मित्रमहः[11] । गुह्ये, शुकेषु मे हरिमाणं[12] । उपस्थे, उदगादयमादित्यो[13] । ऊर्वोः, समैक्षिषोर्ध्वमहसा[14] । जानुनोः, उद्यन्नद्यविनोभज[15] । जङ्घयोः, उद्यन्तं त्वा मित्रमहः[16] ॥ ॥ शिरसि, चित्रन्देवानां[1] ॥ ललाटे, सूर्यो देवीमुषसं रोचमानांमार्यो नो योषामऽभ्येति पश्चात् । यत्रा नरो देवयन्तो युगानि वितन्वते प्रतिभद्राय भद्रम्[2] । नेत्रयोः, तच्चक्षुर्देवहितं[3] । नासिकायां, भद्रा अश्वा हरितः सूर्यस्य चित्रा एतद्वा अनुमद्यासः । नमस्यन्तो देव आपृष्ठमस्थुः परिद्यावा पृथिवीयन्ति सद्यः[4] ॥ मुखे, तत्सूर्यस्य देवत्वं तं महित्वमऽध्याकर्तु विततं सञ्जभार । यद्यदयुक्तहरितामधस्थादात्राती वासस्तनुते सिमस्मै[5] । कण्ठे, तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्यौरुपस्थे । अनन्तमन्यद्रुषदस्यपाजः कृष्णमन्यद्धरितः सम्भरन्ति[6] । बाह्वोः, अद्या देवा उदिताः सूर्यस्य निरंहसः पिपृता निरवद्यात् । तन्नो मित्रो

वरुणोमामहन्तामऽदितिः सिन्धुः पृथिवीउत द्यौः ॥ हृदि, इदं ह नूनमेषां स्वप्नं भिक्षेत मर्त्यः । आदित्यानामपूर्वां, यादस्यांति सळीमर्नि । नाभौ, बृहद्वरूथं मरुतां देवं त्रातारमश्विना मित्रमीमहे वरुणं स्वस्तये[९] । गुह्ये, उदुत्यञ्जातवेदसं[१०] । उपस्थे, उद्वयन्तमसस्परि[११] । जानुनोः, मानो हेतिर्विवस्वत आदित्या कृत्रिमा शरुः । पुरा तु जरसोऽवधीत्[१२] । जंघयोः, मानस्तोके तनये[१३] । पादयोः, त्वमिमा ओषधीः सोमविश्वास्त्वमाप अजयस्त्वं गाः । त्वमाततमुतोर्वन्तरिक्षं त्वं ज्योतिषा वितमो विवर्त्त[११] । सर्वाङ्गेषु, अङ्गादङ्गाल्लोम्नो[१४] ॥ चित्रं पादयोः, देवानां जङ्घयोः ॥ तीर्थेस्वेयं ॥ दीपो नमः । जीवादानं । ॐ भूःपुरुषमावाहयामिनमः ३ । भास्करायवि ३ । योगीशायवि-निष्कलायधी-तन्नःसूर्यःप्र ३ । नमो धर्मनिधानाय ३ । अद्यतावत् महागणपतेः । अग्नेः । ॐह्रांह्रींसः सूर्यस्य । प्रभास-आदित्यस्य । दीप्तिस-रवेः[२] । प्रकाशास-गभस्तेः[३] । मरीचिस-भानोः[४] । तपनीस-सवितुः[५] । पाचनीस-दिवाकरस्य[६] । हव्यवाहास-धर्मस्य । तेजोवतीस-तपनस्य । शतधामास-भास्करस्य[९] । वरुणधामास-सूर्यस्य[१०] । पद्मगर्भास-त्वष्टुः[११] । च्छायास-स्वर्पतेः[१२] । सत्यभामास-नरकारेः । चातुर्वेदेश्वराणां । विष्णुपञ्चायतनदेवतानां । इन्द्रस्य वज्रहस्तस्य । आत्मनो० सूर्यात्मपरमात्माप्रीत्यर्थं सङ्क्रान्तिव्रतोद्यापननिमित्ते कलशपूजनं प्रतिमादिपूजनमर्चामहंकरिष्ये । अपत्ये तायवो यथा । ध्रुवा द्यौरि-

त्यासनं । महागणपतये । युष्मान्वः पूजयामि । उदुत्यं जातवेदसं । ह्वयाम्यग्निं प्रथमं स्वस्तये ह्वयामि मित्रावरुणाविहायसे । ह्वयामि रात्रिं जगतो निवेशिनीं ह्वयामि देवं सवितारमूतये । महागणपतिं । अग्निं । ॐ ह्रांह्रींसः सूर्यं । प्रभास-आदित्यं । चातुर्वेदेश्वरं । विष्णुपञ्चायतनदेवताः आवाहयिष्यामि ॥ प्रतिमायां । एहि सूर्य सहस्रांशो तेजोराशे जगत्पते । अनुकम्पय मां भक्त्या पीडां हर दिवाकर ॥ त्रैलोक्यं भूषितं येन भुवनानि चतुर्दश । अव्यक्तं व्यक्तिमारूढं रविमावाहयाम्यहम् ॥ ब्रह्माण्डगेहपरिदीपक ॥ धवलाम्भोरुहासीनं दाडिमीकुसुमप्रभम् । स्फुरद्रत्नमहातेजोवृत्तमण्डलमध्यगम् ॥ अंसासक्तस्फुरच्छ्वेतसनालाब्जकरद्वयम् । एकास्यं चिन्तयेद्भानुं द्विभुजं रक्तवाससम् ॥ पूर्वादितः, आगच्छादित्य भगवन्सन्निधानं भजस्व मे । मार्गशीर्षे प्रभायुक्तो देहि मे पूजनात्फलम्[१] ॥ दीप्त्या युक्तो रवे पौषे आहूतो भज सन्निधिम् । भक्तायार्ताय हे नाथ देहि मे पूजे[२] ॥ गभस्ते माघमासे त्वमाहूतो भज सन्निधिम् । प्रकाशया युतो सम्यग्देहि मे पूज[३] ॥ मरीच्या सहितो भानो फाल्गुने भक्तितोऽर्चितः । आहूतः शुद्धभावेन देहि मे[४] ॥ तपन्या सवितः साकं चैत्रे भक्त्याऽर्चितः प्रभो । आहूतः सन्निधिं कृत्वा देहि मे[५] ॥ पाचिन्या सहितस्त्वं हि दिवाकर नमोस्तु ते । वैशाखेत्र समाहूतो देहि[६] ॥ ज्यैष्ठे धर्म समं हव्यवाहया सन्निधिं भजन् । गृहाणार्चां भक्तिकृतां

देहि॰ ॥ तेजोवत्या सहाषाढे तपन भावितो मया । सम्यक् सन्निधिमात्रेण देहि॰ ॥ शतधामासमेतस्त्वं श्रावणे भास्कर प्रभो । आहूतः सन्निधिपरो देहि॰ ॥ सूर्यो भाद्रपदे भक्त्याऽऽहूतो वरुणधामया । समं त्वं विष्टरासीनो देहि॰ ॥ त्वष्टराश्वियुजे मासे सहितः पद्मगर्भया । आसने सन्निधानेन देहि मे[११] ॥ स्वर्पते कार्तिके मासि च्छायया सहितः सदा ॥ आगत्य सन्निधिं प्राप्य देहि[१२] ॥ नरकारे समं सत्यभामया विष्टरस्थितः । पाद्यार्घ्याचमनं गृह्णन्देहि मे पूजनात्फलम्[१३] ॥ प्राणायामः ॥ ( लाजागन्धवचाकुष्टं वालुकं पद्मकेसरम् । नागकेसरसंयुक्तं पाद्यमेतत्प्रकल्पयेत् ) अदृश्रमस्य । सूर्यो नो दिवस्पातु । इति पाद्यम् ॥ ( कुंकुमागुरुकर्पूरचन्दनैश्च सुगन्धिभिः । मृगजातिफलैर्युक्तमेतदर्घ्यं प्रकल्पयेत् ) तरणिर्विश्वदर्शित । मानो हेतिर्विवस्वत इत्यर्घ्यम् ॥ प्रत्यङ्देवानां विशः० । विश्वद्वेषो व्यहतिमादित्यासा विसंहितम् । विश्वग्भिर्बृहतारप इत्याचमनीयं । येना पावक० । शन्नो भव चक्षुषा शन्नो अह्ना शं भानुना शं महिम्ना शं घृतेन । यथाश्वमध्वंऽच्छमऽसद्दुरोणे तत्सूर्य द्रविणं धेहि चित्रमिति मन्त्रस्नानीयं ॥ एकविंशतिस्नानानि ॥ ( पयः क्षीरंदधि सर्पिरिक्षुस्तिलायवामधु ॥ लाजामृतं पञ्चगव्यं गन्धपुष्पौषधीस्तथा । त्रयोदशस्नानेऽमूनिसूर्यस्योक्तानि सूरिभिः ) उदुत्यञ्जातवेदमिति सूर्यसूक्तेन त्रयोदशस्नानानिनमः ॥ श्लोकतर्पणम् ॥ सूर्यो नो दिवस्पातु वातो नो अन्तरिक्षात् । अग्निर्नः

पार्थिवेभ्यः ॥ रक्षोहणमितिमन्त्रगुड्डकं । प्रत्यग्ने हर इत्यारात्रिका । तावांवास्तून्य इतिनेत्रस्पर्शनं । विद्या मे शिरज० । तेषां हि चित्र-मुत्त्यं वरूथमस्तिदाशुषे । आदित्यानामरं कृमि ॥ इतिवासः । सप्त त्वा हरितो रथे० । अनेहो न उरुव्रज ऊरुची विप्रसतवे । कृधिस्तोकाय जीवसे ॥ इतियज्ञोपवितं । अयुक्तसप्तसिन्धवः० । यो मूर्धानः क्षितीनामदब्धासः सुयशसः । व्रता रक्षन्ति अद्रुहः । इतिगन्धः । उदुत्यज्ञातवेदसं० । तेन अस्तुवृकानामादित्यासो मुमोचः । स्तेन बद्धमिवादिते इति पुष्पं । ह्रांह्रींसःसूर्यायनमः । पूर्वे, सूर्याय । आग्नेये, दिवाकराय । दक्षिणे, विवस्वते । नैर्ऋते, गभस्तये । पश्चिमे वरुणाय । वायवे महेन्द्राय । उत्तरे आदित्याय । ईशाने शान्ताय । मध्ये प्रत्यक्षदेवाय ॥ सप्ततुरगेभ्यः । अशोकाय, वि-शोकाय, नन्दीशाय, पुष्टिवर्धनाय, सुवर्णचूडाय, शङ्खाय, मणि-भद्राय, यमराजाय, मार्तण्डाय, भास्कराय, त्रयोदशादित्येभ्यः सपत्नीकेभ्यः । सूर्याय सपरिवाराय अर्घोनमः पुष्पं नमः ॥ उद्य-न्नद्य मित्रमह० ॥ अपोषुण इयं शरुरादित्या आप दुर्मतिः । अ-स्मदेस्वऽजघ्नषी ॥ धूरसि धूर्व इतिधूपः । शुकेषु मे हरिमाणं० । तत्सूर्यो बृहदऽर्चींष्यश्रेत्पुरो विश्वा जनिमा मनुष्याणाम् । सोमो देवा ददृशे रोचमानः कृत्वः सुकृतः कर्तृभिर्भूत् । तेजोसीति रत्नदीपं । देवस्य त्वा इति चामरं । काण्डात्काण्डादिति च्छत्रं । तच्चक्षुरित्यादर्शं । एताभ्यो देवताभ्यः ॥ उदगादयमा । यद्वा

शान्ताय स्वन्वते वरूथमस्ति यच्छन्दिः। तेन नो अध्यवोचत॥ मधुवाता इति मधुपर्कः ॥ समेक्षिषोर्द्व ॥ नाभिरसि चक्षुरसि श्रोत्रमसि सूर्य मे देहि। प्राणं चक्षुर्मे व्यानमिति कुसुमाञ्जलिः। उद्यन्नद्य विनोभज० ॥ सूर्यमसि सविता दृंह विष्णुरसि देवानां दृंह। सूर्यः सूर्ये विभज्यते सूर्यरश्मिप्रतिष्ठः। ह्रांह्रींसःसूर्याय-नमः। भगवन्प्रसीद इति सप्त प्रदक्षिणानि ॥ चूडारत्नमरीचिरञ्जि-तभुवा देवेन जम्भद्विषा यस्त्रैलोक्यमणिस्त्रिसन्ध्यमऽमरैः साकं समभ्यर्च्यते। यच्चैरावणकुम्भपीठविलुठत्सिन्दूरपूरच्छविःस श्रे-यांसि रविर्ददातु नलिनीनिर्निद्रताकोविदः ॥ अन्नंनमः २ दक्षि-णान्तं ॥ ॥ अथाग्निकर्म ॥ ॥ पात्रं तिलाः। अग्निकुण्डपूजा। आज्यभागान्ते । समिद्धोमः ॥ ॐभूर्भुवःस्वस्सवितुः १०८ निष्वसीद गणपते । प्रधानं । चातुर्वेदेश्वरेभ्यः । विष्णु-पञ्चायतनदेवताभ्यः । इन्द्रादिभ्यः । ऐन्द्राग्नं ॥ एव-मन्नाज्यहोमौकृत्वाऽज्येनोपहोमः । आदित्यानामवसा नूतनेन सक्षीमहि शर्मणा शन्तमेन । अनागस्त्वे अदिते त्वन्तरा म इमं यज्ञं दयतु श्रोषमाणा ॥ आदित्यासो अदितिर्मादयन्तां मित्रो अर्यमा वरुणो रजिष्ठः। अस्माकं सन्तु भुवनस्य गोपाः पिवन्तु सोममऽवसेनो अद्य ॥ आदित्या विश्वेमरुतश्च विश्वे देवाश्च विश्व ऋभवश्च विश्वे। इन्द्रो अग्निरश्विना तुष्टुवाना यूयं पात स्वस्तिभिः सदा नः ॥ इति स्रुवेण तिसृऋचोहुत्वा ।

ऐन्द्राग्नं । तर्पणं । विष्णुपञ्चकं । कूष्माण्डं । आज्येन । अग्न-
येस्वाहा ॥ यवतिलैः । ॐकारो यस्य मूलं । गायत्रीब्राह्मणं ।
तर्पणं । अध्वर्योयं । प्रदानानि ऋतुपतिं हुत्वा । प्रायश्चित्त-
स्थानकं । तर्पणं । चातुर्वेदेश्वरेभ्यः । विष्णुपञ्चायतनदेव-
ताभ्यः । इन्द्रापर्वताः । सूक्तानि । तर्पणं । रुद्रपञ्चकदेवीप-
ञ्चकरक्षोघ्नमन्त्राः । तर्पणं । ऋतुतिथिः । नैवेद्यं । इळामग्ने ।
अग्ने त्वं पारयानव्यो, इति च ॥ वैश्वानरायेत्युपस्थानं । य-
द्देवा देवेत्यञ्जलिः । वैश्वानरायेति तर्पणं । हुतप्रेक्षणं । पूर्णा-
न्तं ॥ प्रातः स्नात्वा सूक्ष्मतया मण्डलपूजां कृत्वा । गोप्रदानं । ब्राह्म-
णपूजनं दक्षिणान्तं । क्षेत्रेशबलिः । प्रतिमाकलशानामच्छिद्रं । ॐभूः-
पुरुषं विसर्जयामिनमः २ अद्यतावत् आत्मनो-सङ्क्रान्तिव्रतोद्या-
पननिमित्तं सूर्यपूजनं कलशपूजनमच्छिद्रं । यवोदकंनमः । आप-
न्नोसि । प्रतिमायां । कालात्मन्सर्वभूतात्मन् विश्वात्मन्विश्व-
तोमुख । यस्मादग्नीन्दुरूपस्त्वमतः पाहि प्रभाकर ॥ नमोनमः
पापविनाशनाय विश्वात्मने सप्ततुरङ्गमाय । धाम्नामधीशाय
भवाऽभवाय पापौघदावानलशान्तिकर्त्रे ॥ हिरण्मयो रथोयस्य
केतवोऽमृतदायिनः । वहन्ति भुवनान्यत्र रश्मयः सुखदा-
स्तथा ॥ सर्वेश्वरत्वमऽनुपद्रवमेव सम्यक् स्वर्गेऽपि सौख्यमधि-
काधिककल्पितार्थम् । भुक्त्वाऽमरेन्द्रसममेति ततोप्यऽनन्तं
भित्त्वाऽर्कविम्बमनुपाधिपदं च विष्णोः ॥ कलशेषु पूर्वादितः ॥

व्रतं हीनाधिकं यत्तु प्रमादेन मया कृतम् । आदित्य प्रभया सार्धं तदऽखण्डमिहाचरं[1] ॥ दीप्त्या सह रवे यच्च लुप्तं वा खण्डितं व्रतम् । सर्वथा पूरयित्वा त्वं तदखण्डं[2] ॥ विपरीतं गतं यद्वा अन्तःकरणचापलात् । सप्रकाशो गभस्ते त्वं तद्[3] ॥ इन्द्रियाणां च वैकल्यात्पानं वा भोजनं कृतम् । मरीच्या सह मे भानो तदखं[4] ॥ स्वप्नेन मनसा वापि गता नियमखण्डना । तपन्या सवितः साकं तदऽखं[5] ॥ दिवा स्वप्नाद्व्रतं द्यूतात्कृतं दुष्टं दिवाकर । पाचिन्या सह मे सर्वं तदऽखण्डं[6] ॥ द्रव्याभावाद्द्रव्यदोषाद्यन्नष्टं हव्यवाहया । सह धर्म कृपादृष्ट्या तदखं[7] ॥ नष्टा तपन वेला मे ह्यालस्याद्वा प्रमादतः । तेजोवत्या सहाशु त्वं तदखं[8] ॥ विधानलोपाद्यद्दुष्टं व्रतं मे शतधामया । सार्धं भास्कर कारुण्यात्तदखण्डं[9] ॥ मन्त्रहीनं गतं यच्च सार्धं वरुणधामया । तेजःपुञ्जेन मे सूर्य तदखण्डं[10] ॥ अज्ञानाज्ज्ञानतो वापि नष्टं यत्पद्मगर्भया । मन्त्रतुष्टोऽद्य मे सूर्य तदखं[11] ॥ विहीनमधिकं वापि विपरीतं च यद्गतम् । स्वर्पते च्छायया साकं तदखण्डं[12] ॥ कुतश्चित्कारणाद्यन्मे नरकारेऽन्यथागतम् । सत्यभामान्वितस्त्वं मे तदऽखण्डमिहाचरं[13] ॥ आह्वानं नैव ॥ नमोब्रह्मणे । कलशानां प्रतिपादनं । सावित्राणि-अद्यतावत् आत्मनो-सङ्क्रान्तिव्रतोद्यापननिमित्तं सूर्यात्मनारायणप्रीत्यर्थं प्रभास-आदित्यकलशं सहिरण्यं सवाससं तद्रूपाय ब्राह्मणाय ददानि ३ ॥ एवं सर्वान्दत्त्वा । होत्रे प्रतिमां ।

सावित्राणि-अद्यतावत्-आत्मनो-सूर्यप्रतिमां ददानि ३ ॥ ( ततो दध्यक्षततिलैरित्थं मध्वाज्यमिश्रितैः । तर्पयेदुदकैर्देवानृषिपूर्वा-स्तथा पितॄन् ॥ प्रागाननो देवऋषीन्दक्षिणाभिमुखः पितॄन् )। ये चरन्ति सदा मेरौ ब्रह्मणाधिष्ठिताः सुराः । तृप्तिमायान्तु ते सर्वे सङ्क्रान्त्युद्यापनाद्धरे ( पृष्ठे १५ ) एतादेवताः ॥ ब्राह्मणपृच्छां विसृज्य । पूर्णां दत्वा । वैश्वदेवादि । कलशपृच्छां कृत्वा ॥ आरोग्यं तरणिः । क्षमध्वं । उदकलशं । सुरास्त्वामभिषिञ्चन्तु ॥ मन्त्रार्थः । तृणासनादि दद्यात् ॥ इतिसंक्रान्त्युद्यापनम् ॥ १४ ॥

## अथ रविवारोद्यापनम् १५ ॥

अत्रत्वऽयमेव संक्रान्तिविधिः ॥ परमऽयं तु विशेषः । शनिवासरे रात्रौहोमादिकं कृत्वा । रविवासरे प्रातर्ब्राह्मणपूजनादिकं कुर्यात् ॥ इति रविवारोद्यापनम् ॥ १५ ॥

## अथ श्लोकतर्पणम् १६ ॥

(गृत्समदस्य गायत्री) विश्वेदेवास आगत शृणुताऽम इमं हवम् । इदं बर्हि-र्निषीदत ॥ ब्रह्मा तृप्यतां, विष्णुस्तृ, रुद्रः, प्रजापतिस्तृ-प्यताम्, छन्दांसितृप्यन्तां, वेदाः, ऋषयः, आचार्याः, गन्धर्वाः, इतराचार्याः, तपोधनाः, संवत्सराःसावयवाः, देव्यः, अप्स-रसः, देवानुगाः, नागाः, सागराः, पर्वताः, सरितः, मनुष्याः, यक्षाः, रक्षांसि, पिशाचाः, सुपर्णाः, भूतानि, पशवः, वन-स्पतयः, भूतग्रामश्चतुर्विधः, असुराः, क्रूराः, सर्पाः, जम्बुकाः, खगाः, विद्याधराः, जलाधाराः, निराधाराः, पापधर्मरताः,

सर्वेदेवाः, सर्वेग्रहास्तृप्यन्तां, यमस्तृप्यतां, धर्मराजः, मृत्युः, अन्तकः, वैवस्वतः, कालः, सर्वप्राणहरः, औदुम्बरः, नीलः, ब्रध्नः, परमेष्ठीः वृकोदरः, भीमः, चित्रः, चित्रगुप्तस्तृप्यतां ॥ ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः । भैरवाश्च चतुष्षष्टिर्मातरो लोकपा गणाः ॥ सप्तसागरपर्यन्तं खेचर्यो मन्त्रनायकाः । नागा नद्यश्च द्वीपाश्च पर्वताश्च महाद्रुमाः ॥ ऋषयो देवताश्चैव दिवाचरनिशाचराः । सिद्धा विद्याधरा यक्षा दैत्यदानवराक्षसाः ॥ अण्डजाः स्वेदजाश्चैव उद्भिज्जा योनिजास्तथा । मुहूर्ता दिवसाः पक्षा मासाः संवत्सरा युगाः ॥ तृप्तिमेते प्रयान्त्वाशु मया दत्तोदकैः शुभैः ॥ ॐ नमो ब्रह्मणे चैव आचार्येभ्यो नमोनमः । ऋषिभ्यश्च समस्तेभ्यो देवेभ्यश्च नमोनमः ॥ देवताभ्यो वायुभ्यश्च मृत्यवे च नमोनमः । विष्णवे च नमस्तुभ्यं नमो वैश्रवणाय च ॥ नमोस्तु चोपजाताय नमो जलाधिराशये । अग्निः प्रजापतिश्चैव विश्वेदेवाश्च तृप्यंताम् । ओंकारं तर्पयामीति महाव्याहृतयस्तथा । गायत्री देवऋषयश्छन्दांसि तृप्यंतां तथा । यज्ञो द्यावापृथिव्यौ च अहोरात्रं च तृप्यताम् । अन्तरिक्षं समुद्राश्च नद्यस्तृप्यन्तु सर्वदा । क्षेत्रौषध्यो वनस्पत्यो नागा गावो वनानि च । तृप्यन्तां वसवो रुद्रा आदित्याः सिद्धदेवताः । महर्षयः कश्यपाद्याः प्रेता भूतगणास्तथा । साध्या भूतानि तृप्यन्तां पिशाचा यक्षराक्षसाः । एवमन्ये च

मुनयः स्वस्ति कुर्वन्तु तर्पिताः । ओंनमो ब्रह्मणे तुभ्यं कालाय च महात्मने[१२] । नमस्तेऽस्तु निमेषाय त्रुटये ऋतुरूपिणे । लवाय च नमो नित्यं नमस्तेऽस्तु क्षणाय च[१३] । नमो नमस्ते काष्ठायै कालाय च नमो नमः । नाडिकायै सुसूक्ष्मायै मुहूर्ताय नमो नमः[१४] । नमो निशाभ्यः पुण्येभ्यो दिवसेभ्यो नमो नमः । नमः पक्षाभ्यां मासेभ्य ऋतुभ्यः षड्भ्य एव च[१५] । अयनाभ्यां विषुवद्भ्यां वत्सरेभ्यो नमो नमः । नमः कृतयुगादिभ्यो ग्रहेभ्यश्च नमो नमः[१६] । अष्टाविंशतिसंख्येभ्यो नक्षत्रेभ्यो नमो नमः । राशिभ्यः करणेभ्यश्च व्यतीपातेभ्य एव च[१७] । प्रतिवर्षाधिपेभ्यश्च विज्ञानाय नमो नमः । नमोस्तु कुलनागेभ्यः सानुरागेभ्य एव च[१८] । नमश्चतुर्दशेभ्यश्च मन्वन्तरेभ्य एव च । नमः पुरन्दरेभ्यश्च तत्सङ्गेभ्यो नमो नमः[१९] । पञ्चाशद्भ्यो नमो नित्यं दक्षकन्याभ्य एवच । नमो देव्यै सुप्रभायै जयाय विजयायच[२०] । कृशाश्वाय कश्यपाय नमस्ते जनकाय च । नमोस्तु बहुपुत्राय पत्नीभिः सहिताय च[२१] । नमो बुद्ध्यै नम ऋद्ध्यै निद्रायै धनदाय च । नडकूबरयक्षाय गुह्यकस्वामिने नमः[२२] । नमोस्तु शङ्खपद्माभ्यां निधिभ्यामथ नित्यशः । भद्रकाल्यै नमस्तुभ्यं सप्तद्वीपेभ्य एवच[२३] । सप्तभ्यश्च समुद्रेभ्यः पर्वतेभ्यो नमो नमः । उत्तरेभ्यः कुरुभ्यश्च नमो हिरण्यबाहवे[२४] ॥ भद्राश्वकेतुमालाभ्यां नमः सर्वत्र सर्वदा । नम इलावृतायैव हरिवर्षाय वै नमः[२५] ॥

नमः किंपुरुषेभ्यश्च भारताय नमो नमः । नमो भारतभेदेभ्य
आर्यावर्तेभ्य एवच[२६] ॥ पातालेभ्यश्च सप्तभ्यो नरकेभ्यो नमो
नमः । कालाग्निरुद्रशेषाभ्यां हरये क्रोधरूपिणे[२७] ॥ नमः सप्तभ्यो
लोकेभ्यो महाभूतेभ्य एवच । नमस्ते बुद्धये चैव नमः प्रकृतये
तथा[२८] ॥ पुरुषायाभिमानाय नमस्तेऽव्यक्तमूर्त्तये । हिमवत्प्रमुखे-
भ्यश्च पर्वतेभ्यो नमो नमः[२९] ॥ पुराणेभ्यश्च गङ्गाभ्यः सप्तभ्यश्च
नमोनमः । नमोस्तु पुष्करादिभ्यस्तीर्थेभ्यश्च नमो नमः । निम्न-
गाभ्यो नमो नित्यं वितस्तायै नमो नमः[३०] ॥ चतुर्दशेभ्यो देवेभ्यो
दानवेभ्यो नमो नमः[३१] । नमस्त्वथोच्चैःश्रवसे ध्रुवाय च नमो
नमः ॥ नमोस्तु धन्वन्तरये शास्त्रार्थेभ्यो नमो नमः । विना-
यककुमाराभ्यां विघ्नेशाय नमो नमः[३२] ॥ सशाखाय विशाखाय
नैगमाय नमो नमः । नमः स्कन्दग्रहेभ्यश्च स्कन्दमातृभ्य एवच[३३] ॥
ज्वराय रोगपतये भस्मप्रहरणाय च । ऋषिभ्यो वालखिल्येभ्यः
कश्यपाय नमो नमः[३४] ॥ अगस्त्याय नारदाय व्यासादिभ्यो
नमो नमः ॥ अप्सरोभ्यः सोमपेभ्यो देवेभ्यश्च नमो नमः[३५] ।
त्रयस्त्रिंशत्सोमपेभ्यस्तुषितेभ्यो नमो नमः ॥ आदित्येभ्यो नमो
नित्यं द्वादशेभ्यो नमो नमः[३६] । एकादशेभ्यो रुद्रेभ्यः सगणेभ्यो
नमो नमः ॥ दशभ्यो विश्वेदेवेभ्यः पुण्येभ्योथ नमो नमः ।
नमो वसुभ्यस्तुष्टेभ्यो दिव्ययोगिभ्य एवच[३७] ॥ द्वादशेभ्यो भृगु-
भ्यश्च नमः सर्वत्र सर्वदा । दशभ्योऽङ्गिरसेभ्यश्च तपस्विभ्यो

नमो नमः ॥ नमो नासत्यदस्राभ्यामश्विभ्यां च नमो नमः । साध्येभ्यो द्वादशेभ्यश्च पुराणेभ्यो नमो नमः ॥ एकोनपञ्चाशद्भ्यश्च मरुद्भ्यश्च नमो नमः । शिल्पाचार्याय देवाय नमस्ते विश्वकर्मणे ॥ अष्टभ्यो लोकपालेभ्यः सायुधेभ्यो नमो नमः । आयुधेभ्यो वाहनेभ्यश्छत्रेभ्यश्च नमो नमः ॥ आसनेभ्यो दुर्मुखेभ्यो देवेभ्यश्च नमो नमः । दैत्यराक्षसगन्धर्वपिशाचेभ्यो नमो नमः ॥ पितृभ्यः सप्तभेदेभ्यः प्रेतेभ्यश्च नमो नमः । सुसूक्ष्मेभ्यश्च भूतेभ्यो भावगम्येभ्य एवच ॥ नमस्ते बहुरूपाय विष्णवे परमात्मने । अथ बहूनि नामानि वक्ष्यामि तु पृथक्पृथक् ॥ प्राङ्मुखोदङ्मुखश्चैव तर्पयेच्च यथाक्रमम् । अर्घैः पुष्पैस्तथा दर्भैः क्षीरेण मधुमिश्रितैः ॥ देवानृषींस्तथा पितॄन्मन्त्रेणानेन तर्पयेत् । अन्यैश्च विविधैर्दानैस्तृप्तिमाप्नोति शाश्वतीम् ॥ तथाष्टादश नामानि पुराणानां च येस्थिताः । तर्पयामि च तान्सर्वानिदमस्तु तिलोदकम् ॥ ब्राह्मं पद्मं वैष्णवं च शिवं भागवतं तथा । तथान्यं नारदीयं च मार्काण्डेयं च सप्तमम् ॥ आदित्यमष्टमं चैव भविष्यन्नवमं तथा । दशमं ब्रह्मवैवर्तं वायुमेकादशं तथा ॥ वाराहं द्वादशं चैव स्कन्दं चैव त्रयोदशम् । चतुर्दशं वामनं च कौर्मं पञ्चदशं स्मृतम् ॥ मात्स्यं च गारुडं चैव ब्रह्माण्डं च ततः परम् । इत्यष्टादश नामानि पुराणानां च ये स्थिताः । तानि संकीर्तयाम्यद्य सततं तर्पयामि च ॥ अथाष्टादश

नामानि विद्यास्थानानि ये स्थिताः । तेषां नामानि श्रेष्ठानि तर्पयामि स्मरामि च । अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तराः । पुराणं धर्मशास्त्रं च विद्या एताश्चतुर्दश । आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति तत्त्रयम् ॥ विद्याशास्त्रं चतुर्थं च विद्या ह्यष्टादश स्मृताः । तर्पयामि च ताः सर्वा इद० । तथैकविंशति वीरा नरकाश्चैव ये स्थिताः । तेषां नामानि श्रेष्ठानि तर्पयामि० । तामिस्रमन्धतामिस्रं महारौरवरौरवौ । नरकं कालसूत्रं च महानरकमेवच । सञ्जीवनं महावीचिं तपनं सुप्रतापनम् । सङ्घातकं सकलोलं कुद्दालं कुट्टनं तथा । लोहशङ्कं च भीष्मं च पन्थानं शल्मलिं नदीम् । असिपत्रवनं चैव लोहकण्टकमेव च । इत्येकविंशनामानि नरकाणां च ये स्थिताः । तर्पयामि० । अथ द्वादश सूर्याश्च तेजोमयाश्च ये स्थिताः । तेषां ना० । मित्रश्च वरुणः पूषा धाता चैवार्यमा भगः । इन्द्रो विवस्वान्दीप्तांशुः सूर्यो मार्तण्ड एव च । विष्णुश्च द्वादशस्तेषामजघन्यजघन्यकौ । तर्पयामि० । अथैकादश ये रुद्रा महाभैरवरूपिणः ॥ तेषां ना० । अजैकपादऽहिर्बुध्न्यः कृत्तिवासाः पिनाकभृत् ॥ वृषाकपिश्च सिन्धुश्च कपर्दी च ततः परम् । बहुरूपो हरश्चैव रुद्रस्त्र्यम्बक एवच ॥ तर्पयामि० । अथाष्टौ वसवो ये च पूज्याः पितृगणेष्वपि । तेषां० ॥ आपो ध्रुवश्च सोमश्च सावित्रोह्यनलानिलौ । प्रतीपश्च प्रभासश्च वसवोष्टाविमे

स्मृताः । तर्पयामि० ॥ अथात्र दश वै भिन्ना विश्वेदेवाश्च ये स्थिताः । तेषां० ॥ क्रतुर्दक्षश्च सत्यश्च वसुश्च कालकामुकौ । ध्वनिश्च रुचकश्चैव पुरूरवार्द्रवाससौ ॥ तर्पया० । अथ चतुर्दश ये वै मन्वन्तराश्च संस्थिताः ॥ तेषां । चाक्षुषो रुद्रसावर्णौ विवस्वान्दक्षरैवतौ ॥ सूर्यश्च तामसश्चैव स्वायम्भुवस्तथैवच । ब्रह्मा स्वारोचिषश्चैव हारीतो मनुरेवच ॥ धर्मश्चतुर्दश चेति मन्वन्तराः प्रकीर्तिताः । तर्पयामि० ॥ अथातः सप्त ये ख्याताः पाताला जीवसंश्रिताः । तेषां० ॥ तलं श्रीतालं भूतालं नितालं नभसस्तलम् । रसातलं सुतालं च पातालानां च सप्तकम् ॥ तर्पयामि० । भूर्लोकोथ भुवोलोकः स्वर्लोकश्च ततः परम् ॥ महो जनस्तपः सत्यं सप्त लोका इमे स्मृताः । तर्पयामि० ॥ गङ्गासिन्धुसरस्वतीवितस्तायमुनास्तथा । गोदावरीमधुमत्यौ नर्मदैरावती तथा ॥ तर्पयामि० । केदारं ब्रह्मतीर्थं च वाराणसी च मानसम् ॥ प्रयागं पुष्करं कौरं रामं कनखलं तथा । तर्पयामि० ॥ जम्बुद्वीपः कुमारश्च कुशद्वीपस्तथैवच । क्रौञ्चः सिंहलद्वीपश्च शाकलिः पुष्करस्तथा ॥ तर्पयामि० । मेरुर्मलयमन्दारौ विन्ध्याचलहिमाचलौ । चित्रकूटश्च कैलासो मैनाको गन्धमादनः ॥ तर्पयामि० । सोमसूर्याग्निधामश्च आप आकाश एवच ॥ अन्नं च विष्णुधामश्च धाम इत्यभिधीयते । तर्पयामि० ॥ तर्पयामि च तान्देवानादित्या वसवश्च ये । मरुतोथाश्विनौ रुद्राः सुपर्णाः

पन्नगा ग्रहाः ॥ असुरा यातुधानाश्च पिशाचाः किन्नरा गणाः । शाकिन्यो यक्षवेताला योगिन्यः पूतनादयः ॥ जृम्भकाः सिद्धगन्धर्वा नागा विद्याधरा नगाः । दिक्पाला लोकपालाश्च मातरश्च महोदयाः ॥ जगतां शान्तिकर्तारो ब्रह्माद्याश्च महर्षयः । तर्पयामि० ॥ कण्ठोपवीती । ( एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः । अर्हन्तिपितरस्त्रींस्त्रींस्त्रयोप्येकैकमञ्जलिम् ॥ ) अग्निर्ऋषिः पावमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् । सनकस्तृप्यतां २, सनन्दनः, सनातनः, सनत्कुमारः, कपिलः, आसुरिः, वोढा, पञ्चशिखः, मरीचिः, अत्रिः, अङ्गिराः, पुलहः, पुलस्त्यः, भृगुः, क्रतुः, प्रचेताः, वसिष्ठः, नारदस्तृप्यतां २, ॥ * मनुगौतमसंवर्तविष्णुच्यवनकश्यपाः । बृहस्पत्युशनःशङ्खशातातपपराशराः ॥ पितामहाङ्गिरोदक्षयमापस्तम्भदेवलाः । बुद्धबौधायनव्यासवसिष्ठजमदग्नयः ॥ सोमनारदहारीतयाज्ञवल्क्यप्रचेतसः । लिखितच्छागलेयात्रिविश्वामित्रमरीचयः ॥ कात्यायनोथ जाबालिपैठीनससुमन्तवः । धर्मशास्त्रप्रणेतारः षट्त्रिंशन्मुनयश्च ये ॥ ते सर्वे तृप्तिमायान्तु मया दत्तोदकैः शुभैः * ओंशतर्चिनो मध्यमश्च गृत्समदश्च तृप्यताम् । विश्वामित्रं तर्पयामि वामदेवश्च तृप्यताम् ॥ भारद्वाजः कश्यपात्रिवसिष्ठजमदग्नयः । तर्पयामि० ॥ प्रागाथः पावमानश्च क्षुद्रसूक्तश्च तृप्यताम् । महासूक्तऋषिश्चैव तृप्यतां सनको भृगुः ॥ सनातनः सनन्दश्च

कपिलो हावभावकः । वोढः पञ्चशिखो योगी जाबालिस्तृप्यतां सदा । अत्रिवसिष्ठपुलहाः कश्यपो गौतमस्तथा । च्यवनो व्याघ्रपाद्विष्णुर्देवलोलोमहर्षणिः ॥ सनको वै दीर्घतपाः पाराशर्यपराशरौ । वाल्मीकिश्चैव वत्सश्च भारद्वाजोथ शौनकः ॥ सनन्दः पिप्पलादश्च लौगाक्षिः कण्व एवच । आपस्तम्भः सुमन्तुश्च बौधायनबलायनौ ॥ याज्ञवल्क्यो मनुर्दक्षो भृगुशङ्खमरीचयः । ऋषिशृङ्गोथ कुशिको गर्गकौत्ससनातनाः ॥ अगस्त्यः शुनलाङ्गूलः शुनःशेपश्चपुच्छकौ । हारीतजमदग्निश्च गुरवश्च तपोधनाः ॥ तर्पयामि० । रैणादित्यः सत्यमुद्रो व्यासोथ भार्गवस्तथा ॥ गौर्गुण्डी गौर्गुली चैव उपमन्युस्तथा मुनिः । करटो मूषको गार्ग्यो वर्षकर्णादयो दश ॥ एते मे सामगाचार्याः स्वस्ति कुर्वन्तु तर्पिताः ॥ कुथूमिः शालिहोत्रश्च जैमिनिश्च मुनीश्वरः ॥ एते० । शाटिबालो विशालश्च ताड्योरश्च वृषाणकः । एते० ॥ रुरुकः सोमराहुश्च अगस्त्यो मनुरेवच । एते० ॥ वल्कशिरोथ गोबिलो गौतमः कण्वकस्तथा । एते० ॥ अग्निहोत्रश्च शालिश्च जैमिनिश्च महाशयः । एते० ॥ लौगाक्षिः कपिलः काण्वस्तथा भागुरिदेवलौ । एते० ॥ शुनःशिश्नश्चलाङ्गूलौ शुनःपुच्छोथ शौनकः । एते० ॥ शाण्डलिश्चैव शाकल्यः शुकःश्रोत्रस्तथैवच । एते० ॥ अपसव्येन । ( उशन्तस्त्वा हवामह उशन्तः समिधीमहि । उशन्नशन्त आवह पितॄन्हविषे अत्तवे ॥ कव्यवाडऽनलः स्वधानम-

स्तृप्यतां ३, सोमः, यमः, अर्यमा, अग्निष्वात्ताः स्वधानमस्तृप्यन्ताम्, बर्हिषदः, हविष्मन्तः, सुकालिनः, सोमपाः, आज्यपाः, वसवः, रुद्राः, आदित्याः, स्वधानमस्तृप्यन्तां ३ ॥ सुमन्तुर्जैमिनिश्चैव वैशम्पायन एवच । पैलसूक्तस्तथा भाष्यस्तृप्यतां भारतस्तथा ॥ महाभारतधर्मश्च गालवो गोभिलस्तथा । शाकल्यो गार्ग्यशाण्डिल्यौ शुकः श्रोत्रश्च भार्गवः ॥ कोकिलः कौशिकश्चैव बाभ्रव्यो मण्डूकः स्वधा । गार्गीयो जाह्नवीयश्च तृप्यतां प्रतिथीयकः ॥ सुलभा स्वधा मैत्री च तृप्यतामेतदम्बुना । कोहोत्रं तर्पयामीति कौशीतं पाठ्यमेव च ॥ तर्पयामि महायज्ञं स्वयज्ञं तर्पयामि च । सांख्यायनं तर्पयामि तर्पयाम्याश्वलायनम् ॥ महाश्वलायनं स्वधा तर्पयाम्यौदवाहिनीम् ॥ महौदवाहिनीं स्वधा शैशिनं तर्पयामि च ॥ महाशैशनकं चैव तर्पयाम्येतदम्बुना । शङ्खस्य त्रिष्टुप् पितरः । उदीरतामवर उत्परास उन्मध्यमाः पितरः सौम्यासः । असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु । यमस्य त्रिष्टुप् अङ्गिरसः । अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सौम्यासः । तेषां वयं सुमतौ यज्ञियानामपि भद्रे सुमनसे स्याम । आयन्तु नः पितरः सौम्यासः अग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन्यज्ञेस्वधया मदन्त्वऽधिब्रुवन्तुतेऽवन्त्वऽस्मान् ॥ देवताभ्यः पितृभ्यश्च महायोगिभ्य एवच । नमः स्वधा च स्वाहाच नित्यमेव भवन्तिवह ॥ अद्य तावत् पिताऽमुकोमुकगोत्रः

स्वधानमस्तृप्यतां ३ ऊर्जं वहन्तीरऽमृतं घृतं मधु पयः कीलालं परिस्रुतं स्वधा स्थ पितॄन्मेतर्पयत ॥ पितृभ्यः स्वदायिभ्यः स्वधानमस्तृप्यतां ३ पितामहेभ्यः० प्रपितामहेभ्यः स्वदायिभ्यः ॥ ये चेह पितरो येच नेह यांश्च विद्म यां उ च न प्रविद्म । त्वं वेत्थ यतते जातवेदः स्वधाभिर्यज्ञं सुकृतं जुषस्व । पितामहः० । मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । मध्वीर्नः सन्त्वौषधीः ॥ १ ॥ मधु नक्तमथोषसो मधुमत्पार्थिवं रजः । मधुद्यौरस्तु नः पिता ॥ २ ॥ मधुमान्नो वनस्पतिर्मधुमानस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥ ३ ॥ प्रपितामह० । नमो वः पितरो मन्यवे, नमो वः पितरः शुष्माय, नमो वः पितरो जीवाय, नमो वः पितरो रसाय, नमो वः पितरः क्रूराय, नमो वः पितरो बलाय नमो वः पितरः स्वधा वः पितरो याऽत्र पितरः स्वधा यत्र यूयं स्थ सा युष्मासु सुधया यूयं, यथाभागं मादयध्वं, येह पितर ऊर्ग्यत्र वयं स साऽस्मासु तस्यै वयं ज्योग्जीवन्तो भूयास्म ॥ माता, पितामही, प्रपितामही, मातामहः, प्रमातामहः, वृद्धप्रमातामहः । मातामही, प्रमातामही, वृद्धप्रमातामही ॥ (ऐसे सब सम्बन्धियोंकी तृप्ति करके) मातृपक्षास्तु ये केचिद्ये चान्ये पितृपक्षजाः । गुरुश्वरबन्धूनां ये कुलेषु समुद्भवाः । ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्जिताः । जलदानेन ते सर्वे लभन्तां तृप्तिमुत्तमाम् ॥ समस्तमातापितृभ्यो द्वादशदैवतेभ्यः

पितृभ्यः हिमपानं स्वधा, क्षीरपानं स्वधा, मधुपानं स्वधा, तिलोदकं स्वधा, उदकतर्पणं स्वधा, हिमं हिमं, रजतं रजतं। सव्येन। वसन्ताय नमः, ग्रीष्मायनमः वर्षाभ्यो नमः, शरदे नमः, हेमन्ताय नमः, शिशिराय नमः षड्तुभ्यो नमः ॥ देवासुरास्तथा यक्षा नागा गन्धर्वकिन्नराः। पिशाचा गुह्यकाः सिद्धाः कूष्माण्डास्तरवः खगाः॥ तर्पयामि०॥ कण्ठोपवीती। जलेचरा भूनिलया वाय्वाधाराश्च जन्तवः। तर्पयामि०। अपसव्येन। नरकेषु च सर्वेषु यातनासु च ये स्थिताः। तेषामाप्यायनायैतद्दीयते सलिलं मया॥ ये बान्धवा अबान्धवा येऽन्यजन्मनि बान्धवाः। तेषां॥ येपि दग्धा अदग्धा वा प्राणमन्तश्च ये स्थिताः। तेषां। ये चरन्ति सदा मेरौ ब्रह्मणाधिष्ठिताः सुराः। तेषां॥ कैलासवासिनो ये च ये शिवध्यानतत्पराः। तेषां॥ ऽयवरा ब्राह्मणा येच गुरवश्च तपोधनाः। तेषां॥ अगतीकाश्च शिष्याश्च प्रत्यक्षं भूरिभोजनाः। तेषां॥ नागलोकगता ये च विष्णुध्याने च ये रताः। तेषां॥ अमरा येऽवतिष्ठन्ति विष्णुं क्षीरोदशायिनम्। तेषां॥ इत्थमेते मुनिवराः समाख्याताः स्वनामभिः। अन्ये नाख्यातनामान ऊर्ध्वरेताः प्रजासृजः। तृप्तिमायान्तु ते सर्वे इदमस्तु तिलोदकम्॥ पिता पितामहश्चैव तथैव प्रपितामहः। मातामह्यः पराश्चैव प्रमातामह्य एवच। प्रपूर्वा वृद्धपूर्वाश्च पूर्वोत्तरास्तथैवच। तेषां॥ भ्राता मातामहश्चैव प्रमातामहएव च। वृद्धपूर्वो मातुलश्च गुरुः श्वशुर एव च। तेषां॥

शुश्रूः स्वसा गुरुपत्नी भार्या मित्रस्य तृप्यताम् । पितृमातामहश्चैव पितृव्यो भ्रातरस्तथा । पितृस्वसा मातुलश्च तद्भगिन्यश्च मातुलाः । भार्या भगिन्यो दौहित्राः श्वशुरो भावकाः स्नुषाः । स्यालाश्च गुरुराचार्यः स्वामी सखा यथाक्रमम् । तर्पयामि तान्० ॥ आ ब्रह्मणो ये पितृवंशजाता मातुस्तथा वंशभवा मदीयाः । वंशद्वयेऽस्मिन्मम दासभूता भृत्यास्तथैवाऽऽश्रितसेवकाश्च । मित्राणि सख्यः पशुवंशभृत्या दृष्टाः श्रुता वापि कृतोपकाराः । जन्मान्तरे ये मम सङ्गताश्च स्वधा त्विदमम्बु ददामि तेषाम् ॥ पितृव्या भ्रातृपुत्राश्च मातुलस्य च ये सुताः । मातृस्वसृसुताश्चैव पुत्रास्तद्वत्पितृस्वसुः ॥ तर्पयामि० । तनयास्तनयाश्चैव ये चान्ये स्नेहभागिनः । तर्पयामि ॥ ये मत्कुल्याः स्वर्गलोके नरके वा वसन्ति ये । अवीच्यन्तर्गता ये च कुम्भीपाकान्तरे स्थिताः ॥ रौरवस्योपभोक्तारो ये महारौरवे स्थिताः । कालसूत्रोपतप्ताङ्गा असिपत्रवने स्थिताः । तर्पयामि० ॥ क्षुधूत्पूयासृग्विष्टारुक्टाहाप्लुतविग्रहाः । अन्यत्रवा तत्र तत्र यातनासु च ये स्थिताः । तर्पयामि० ॥ यमाय धर्मराजाय मृत्यवे चान्तकाय च । वैवस्वताय कालाय सर्वप्राणाहराय च । औडम्बराय नीलाय ब्रह्माय परमेष्ठिने । वृकोदराय भीमाय चित्रागुप्ताय वै नमः । पाशहस्तकृतान्ताय प्रेताधिपतये नमः ॥ स्वाहाकारः स्वधाकारः प्रणवश्चैव सप्तधा । तर्पयामि० ॥ देवाश्च ऋषयश्चैव पितरस्तृप्यंतां स्वधा । यत्र देवाश्च

ऋषयो मघवान्सप्तसप्तश्च ॥ भूताश्च प्रेतरूपाश्च प्रणवादि नमो नमः । तर्पयामि० ॥ ये मातृकुलसम्भूताः पितृवंशसमुद्भवाः । दुहितुश्च कुले जाता ये भ्रातृस्वसृवंशजाः ॥ राज्ञां चैव कुले ये च ये तद्वर्गसमुद्भवाः । श्वशुरस्य कुले जाता ये श्वश्रूकुलसम्भवाः ॥ सुहृत्कुले गुरुकुले बन्धोर्ममकुले तथा । यस्मिन्स्थाने च पितरो धनसम्बन्धिनश्च ये ॥ येषां गृहे मया भुक्तं येषां भुञ्जाम्यहं पुनः । पुत्रदारविहीनाश्च नरके वा वसन्ति ये ॥ तेभ्यः सर्वेभ्यः पितृभ्य इदमस्तु तिलोदकम् । अस्मिन्दिने महापुण्ये यन्मया समुपार्जितम् ॥ तेनायं सर्वजन्तूनां क्लेशदोषः प्रशाम्यतु । मत्कुले ये च पितरो लुप्तपिण्डोदकक्रियाः । सूक्ष्मास्त्वकृतचूडाश्च ये च गर्भादिके मृताः ॥ येपि दग्धा अदग्धा वा ये च संस्कारवर्जिताः । तेषा० ॥ यत्र मे मातरः प्रेता यत्र प्रेताः प्रमातरः । महाप्रमातरः प्रेतास्तिलाम्भस्तत्र गच्छतु ॥ यत्र मे पितरः प्रेता यत्र प्रेताः पितामहाः । प्रपितामहान्तराः प्रेतास्तिलाम्भस्तत्र गच्छतु ॥ पञ्चाशत्कोटयो घोरा नरकानां प्रकीर्तिताः । असत्कर्मरतानां च नराणां शास्त्रदूषिणाम् ॥ पितॄणां चैव सर्वेषामिदमस्तु तिलोदकम् ॥ देवद्रव्योपहर्तॄणां शरणागतघातिनाम् । आत्मनस्त्यागिनां चैव चण्डालादिहताश्चये । तमसा दग्धकर्माणो महापातकिनश्च ये । गोघ्नानां च कृतघ्नानामगम्यगामिनां तथा । सुवर्णभूमिहर्तॄणां शौचाचा-

रविवर्जिनाम् । दयादाक्षिण्यहीनानां पैशुन्यानृतचेतसाम् । नरकास्तु समाख्याताश्चत्वारिंशाधिकं शतम् ॥ तेषामपि प्रधानाश्च नरकास्तु प्रकीर्तिताः । अवीचिः कुम्भीपाकश्च महारौरवरौरवाः । असिपत्रवनं चैव तथा वैतारणीनदी । तन्मध्ये पतिता ये च ये च कर्मवशानुगाः । तरन्ति सर्वे तत्क्षिप्रं मद्दत्तेनोदकेन ते । सप्त सप्त तथा सप्त मातृकाः पितृकाश्च ये । गुरुश्वशुरवंशोत्थास्तृप्यन्तामुदकेन ते । पितृणां चैव सर्वेषामिदमस्तु तिलोदकम् । उन्मत्ताः प्रतिपन्नाश्च गुरुशापव्यतिक्रमात् । तेषामुद्धरणार्थाय नराणां नरकार्णवात् । ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः । पञ्चकारणसंयोगान्नराणामस्तु तोषणम् । गोब्राह्मणहतानां च तथा विश्वासघातिनाम् । अन्येषां पतितानां च इदमस्तु तिलोदकम् ॥ सव्येन । विष्णुपीठे भद्रपीठे तीर्थे देवसमागमे । यागार्चनेऽग्निकार्ये च देवगोद्विजसन्निधौ । दद्यान्मन्त्रमयं तोयं पितृणामात्मतृप्तये । सर्वं प्रतिग्रहे होमे स्नाने दाने सुरार्चने । अध्यापने तथा यज्ञे य इदं तर्पणं पठेत् । धनं कीर्तिर्यशश्चैव नित्यं च सुखमश्नुते । दीर्घायुः सुबहून्पुत्रान्पठमानो लभेत्सदा । वपुः पूतं पवित्रं च नित्यं गोदानिकं फलम् ॥ मा विघ्नं मा च मे पापं मा सन्तु परिपन्थिनः । सौम्या भवन्तु तृप्ताश्च भूताः प्रेताः सुखावहा । ओंनमो देवेभ्यः । कण्ठोपवीती । स्वाहाऋषिभ्यः । अपसव्येन । स्वधा पितृभ्यः ।

सख्येन आब्रह्मस्तम्बपर्यन्तं ब्रह्माण्डं सचराऽचरं जगत्तृप्यतु ३ एवमस्तु ॥ इति श्लोकतर्पणम् ॥ १६ ॥

## अथ गोप्रदानम् ॥ १७ ॥

( आदौ कुशब्राह्मण को "संव्र: सृजामि । अश्विनोः प्राणस्तौते" इन मन्त्रों से जीवाधान देकर, "गवि" रुद्र को और जलादिधेनौ विष्णु को नमष्कार करना ) प्रसीद मम हे विद्वन्भगवंस्त्वां नुता वयम् । अनुग्रहार्थमस्माकमियं गौः प्रतिगृह्यताम् । आपादाच्छीर्षपर्यन्तमापो हिष्ठेति शाश्वतम् । न वहन्तीति मन्त्रेण गवां स्नानं प्रकल्पयेत् ॥ इन मन्त्रों से गवों को छिडकना ॥ आपोहिष्ठा, । हिरण्यवर्णाः शुचयो या, । यासां देवा दिवि, । यासां राजा वरुणो, । शिवेन मा चक्षु, । न वहन्तीभिः स्नायाद्यद्वहन्तीभिः स्नायात्क्षेत्रं यश ऋच्छेन्न कूप्याभिः स्नायाद्विषं यश ऋच्छेत्स्थावराभिः स्नायादेता वां अपां दीक्षिता पशुमतीर्याः स्थावरा लोमशाः सन्तता लोमशा पशवो यजमानमेव यशमर्पयन्ति ॥ इति गवांजलाभ्युक्षणम्, ततो ब्राह्मणगवोः पूजनम् । अब ब्राह्मण और गवों को पूजा करना ) । ॐगायत्र्यै नमः २ । तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् २ ॥ ( जलधेनुविषये ) वासुदेवाय विद्महे नारायणाय धीमहि । तन्नो विष्णुः प्रचोदयात् २ ॥ सुभगायै विद्महे काममालिन्यै धीमहि । तन्नो धेनुः प्रचो-

दद्यात् ३ ॥ ॐतत्सद्ब्रह्माद्यतावत्, रुद्रस्य वा ( विष्णोः ) सानुचरस्य । नन्दायाः, सुनन्दायाः, सुभगायाः, सुशीलायाः, सुरभेः, वरकामधेनोः आत्मनो, श्रीविष्णुप्रीत्यर्थं पितुर्वा मातुः परलोके वैतारिणीनदीसुखसन्तारणार्थं गोप्रदाननिमित्तं रुद्र ( विष्णु ) पूजनं धेनुपूजनमर्चामहं करिष्ये ॐकुरुष्व । एवमेव। रुद्रस्य वा ( विष्णोः ) सानुचरस्य नन्दायाः, इदमासनं नमः। रुद्राय ( विष्णवे ) सानुचराय नन्दायै सुनन्दायै सुभगायै सुशीलायै सुरभये वरकामधेनवे युष्मान्वः पूजयामि ॐ पूजय । रुद्रं वा ( विष्णुं ) सानुचरं नन्दां सुनन्दां सुभगां सुशीलां सुरभिं वरकामधेनुं आवाहयिष्यामि ॐ आवाहय ॥ आवाहनं । आवाहयाम्यहं (देवमीश्वरं पार्वतीपतिम्) "वा" विष्णुं वै विश्वरूपिणम्, । या देवी भार्गवकुले नन्दा सर्वत्र पूजिता । आगता सा गृहे माता सुप्रीता वरदास्तु मे ॥ या गिरीशं सदा देवी सुनन्दा प्रत्युपस्थिता । आगता, ॥ सुभगा या भारद्वाजे सर्वकामफलाप्तये । आगता, ॥ सुशीला कश्यपे या तु पूजिते सर्वपूजिता । आगता, ॥ आवाहयाम्यहं देवीं सुरभीं लोकमातरम्। पूज्यां त्रिभुवने दैत्यैर्गन्धर्वैः सुरकिन्नरैः ॥ अमृतस्राविणीं देवीं सर्वयज्ञप्रवर्तिनीम् । देवि त्वं सर्वदेवानां जननी सर्वकामदा ॥ मया कामदुघा दत्ता कामदास्तु भवे भवे । देवि त्वं पापहर्तासि देवि त्वं मलनाशिनी ॥ देवि त्वं मानदालोके

देवि त्वं भयनाशिनी ( यवान्विकीर्य ) शन्नो देवी, । लाजा-श्च, । रुद्राय 'वा' विष्णवे सानुचराय नन्दायै, पाद्यं नमः । पुनः शन्नो देवी, । आपः क्षीरं, । रुद्र 'वा' विष्णो सानुचर नन्दे, इदं वोऽर्घ्यं नमः । रुद्राय 'वा' विष्णवे सानुचराय नन्दायै समालभनं गन्धो नमः । एवं अर्घो नमः पुष्पं नमः । पादेषु वेदाश्चत्वारः ऋग्वेदायनमः यजुर्वे, सामवे, अथर्ववे, । कृतयुगाय त्रेता, द्वापर, कलियुगाय । ( ललाटे ) रुद्राय ( नेत्रयोः ) सूर्याय सोमाय ( श्रवणयोः ) अश्विभ्यां ( नासिकायां ) वायवे ( दन्तेषु ) ऋषिभ्यो ( ओष्ठयोः ) धर्माय अधर्माय ( जिह्वायां ) सरस्वत्यै ( हुङ्कारे ) प्रजापतये ( ग्रीवायां ) कालरात्र्यै ( शृङ्गयोः ) मेरवे मन्दाराय ( पार्श्वयोः ) दशदिग्भ्यो ( तन्मध्ये ) विष्णवे ध्रुवाय असुरेभ्यो गणेभ्यो ( उरसि ) स्कन्दाय सिद्धेभ्यो साध्येभ्यो ( रोमकूपेषु ) विद्याधरेभ्यो ( जठरे ) हुताशनाय ( श्रेणितटे ) पितृभ्यो ( लाङ्गूले ) वालखिल्येभ्यो ( स्तनेषु ) क्षीरोदधये क्षारो, दध्यु, घृतो, सुरो, स्वादू, इक्षूदधये, ( हृदये ) वराहाय ( कुक्षौ ) वसुभ्यो ( आधारे ) अग्नये ( पृष्ठे ) वैवस्वताय यमाय ( दक्षिणकुक्षौ ) देवेभ्यो ( वामकुक्षौ ) असुरेभ्यो ( अपाने ) सर्वतीर्थेभ्यो ( गोमये ) लक्ष्म्यै ( प्रस्रावे ) जाह्नव्यै नदीभ्यो ( खुरमध्ये ) गन्धर्वेभ्यो ( खुराग्रे ) पन्नगेभ्यो ( खुराणां पश्चिमभागे ) गणेभ्यो असुरेभ्यो रुद्रमातृभ्यो ( जानुदेशे )

विश्वेभ्योदेवेभ्यो सर्वदुहितृभ्यो सर्वस्वसृभ्यो ( कृकाटिकायां-सटेषु ) विद्याधरेभ्यो नन्दायै सुनन्दायै सुभगायै सुशीलायै सुरभ्यै, वरकामधेनवे, भूर्भुवःस्वःस्वरूपायै अर्घोनमः पुष्पंनमः ॥ धूपदीपवासोऽपोशानं । पुनः, शन्नोदेवी, । सैव दक्षिणा ॥ ( विष्णोःप्रतिमायाः पृच्छां विसर्ज्य ) । ॐभूःपुरुषं विसर्जयामि नमः ३ ( सर्वा विष्णुगायत्रीः ) आत्मनो, पितुर्वा मातुर्विष्णु-पूजनमच्छिद्रं, । आपन्नोसि, । ध्येयःसदा, । नमो ब्रह्मणे, । सावित्राणि अद्यतावत् पितुर्वा मातुः परलोके सुखसन्तारणार्थं रुद्राय ( विष्णवे ) सानुचराय, मणिमुक्तप्रवालान्नादिसहितां सहिरण्यां सवासरां सर्वोपस्करणोपेतां गां ददानि ३ गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश । यस्मात्तस्माच्छुभं मेस्यादिहलोके परत्र च । गां प्रतिगृह्णामि ३ ॥ ( इति ब्रूयात्प्रतिगृहीता ) । अथाञ्जलिं बद्ध्वा पठेत् ॥ क इदं कस्मै अदात् कामः कामाय कामो दाता कामः प्रतिगृहीता, कामः समुद्रमाविशत् कामेन त्वा प्रतिगृह्णामि कामैतत्तेऽस्तु इति ॥ ( तत्पुच्छं तु करे कृत्वा देवान्पितॄंश्च तर्पयेत् । कुशसर्षपमध्वाज्यपयोक्षततिलोदकैः ) ॥ ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः । महाकालाग्निरुद्राश्च व्यक्ता-व्यक्तमनोरथाः । ते सर्वे तृप्तिमायान्तु गोपुच्छोदकतर्पणात् ॥ इन्द्राद्या लोकपालाश्च ब्राह्म्याद्या मातरस्तथा । आदित्या वसवो रुद्राः सरितः सागरास्तथा । ते सर्वे, ॥ देवकन्या नाग-

कन्याश्चासुराणां च कन्यकाः । ऋषयो मुनयो गावो देवमातर एव च । ताः सर्वा, ॥ यमो वै धर्मराजश्च मृत्युश्चान्तक एव च । वैवस्वतश्च कालश्च सर्वप्राणहरस्तथा । औडम्बरश्च नीलश्च चित्रगुप्तस्तथैव च । ते सर्वे तृप्तिमायान्तु, ॥ पुष्करो नैमिषारण्यं कुरुक्षेत्रं पृथूदकम् । कार्कोटकं प्रभासं च तथा बदिरिकाश्रमम् । ते सर्वे, ॥ अन्यानि सर्वतीर्थानि ह्यासमुद्रात्सरांसि च । तानि सर्वाणि तृप्यन्तु गो, ॥ भौमः शनैश्चरश्चैव बुधः शुक्रो बृहस्पतिः । सूर्यसोमौ च राहुश्च ध्रुवागस्त्यसमाहिताः । उपग्रहाश्च ये देवास्तथान्ये लोकपालकाः । ते सर्वे, ॥ शेषः कूर्मस्तथा नागाः किन्नरा पर्वतादयः । विद्याधरा अप्सरसो मुनयश्चोर्ध्वरेतसः । सप्तर्षयः ससमुद्रा वाडवाग्निर्महाबलः । ते सर्वे, ॥ कूर्मकच्छपमत्स्याश्च पुरुषा जलवासिनः । अश्विनौ च कुमारश्च सत्यवन्तो महातपाः । ते सर्वे, ॥ देवासुरास्तथा यक्षा नागा गन्धर्वकिन्नराः । यक्षराक्षसडाकिन्याः पूतनाजम्बुकादयः । ते सर्वे, ॥ ब्रह्मराक्षसवेतालाः कूष्माण्डाः क्रूरमार्गगाः । भूम्यन्तरिक्षपाताले ये वसन्ति महोदयाः । ते सर्वे, ॥ ॐकारश्चैव गायत्री सावित्री च सरस्वती । ऋग्वेदोथ यजुर्वेदः सामवेदस्तथैव च । अथर्वश्चोपवेदाश्च सषडङ्गपदक्रमाः । ते सर्वे, ॥ इन्द्रोपेन्द्रो महेन्द्रो वा देवेन्द्राश्चापि सामराः । धान्वन्तराधिपा ये च संभूता ये पुरन्दराः । ते सर्वे, ॥ यः प्रभुः

सर्वभूतानां येन सर्वं प्रतिष्ठितम् । स एष भगवान्विष्णुर्बहुरूपो जनार्दनः । ब्रह्मा प्रजापतिश्चैव मित्रो मरुत्तथाश्विनौ । ते सर्वे, ॥ कार्तिकेयो महासेनः स्कन्दरूपी षडाननः । नन्दी चैव महाकालो भृङ्गिराट्च गणेश्वरः । षष्टिकोटिगणाः सर्वे शिवभक्ताश्च ये स्थिताः । ते सर्वे, ॥ ब्रह्माद्याश्च सुरश्रेष्ठाः पद्मयोनिः पितामहः । नासत्यावश्विनौ दस्रावाश्विनीयौ च तावुभौ । ते सर्वे, ॥ (गृत्समदस्य गायत्री) । विश्वेदेवास आगत शृणुताऽम इमं हवम् । इदं बर्हिर्निषीदत "इत्यावाह्य" । ब्रह्मातृप्यतां, विष्णुस्तृ,-रुद्रः, प्रजापतिस्तृप्यतां, च्छन्दांसितृप्यन्तां, वेदाः, ऋषयः, आचार्याः, इतराचार्याः, तपोधनाः, संवत्सराःसावयवः, देवाः, अप्सरसः, देवानुगाः, नागाः, सागराः, पर्वताः, सरितः, मनुष्याः, यक्षाः, रक्षांसि, पिशाचाः, सुपर्णाः, भूतानि, पशवः, वनस्पतयः, भूतग्रामाश्चतुर्विधाः, असुराः, क्रूराः, सर्पाः, जम्बुकाः, खगाः, विद्याधराः, जलाधाराः, निराधाराः, पापधर्मरताः, सर्वेदेवाः, सर्वेग्रहास्तृप्यन्तां, यमस्तृप्यतां, धर्मराजः, मृत्युः, अन्तकः, वैवस्वतः, कालः, सर्वप्राणहराः, औडम्बरः, नीलः, ब्रध्नः, परमेष्टिः, वृकोदरः, भीमः, चित्रः, चित्रगुप्तस्तृप्यतां ॥ ॐ अथ यजुर्वेदकाठके लौगाक्षिसूत्रे यज्ञपरिशिष्टे तर्पणखण्डं व्याख्यास्यामः ॥ अग्निः प्रजापतिः सोमो रुद्रोदितिर्बृहस्पतिः सर्प इत्येतानि प्राग्द्वाराणि सदैवतानि सनक्षत्राणि सग्रहाणि साऽहो-

रात्राणि समुहूर्तानि तर्पयामि, वसूंश्च तर्पयामि ॥ पितरोऽर्यमा भगः सविता त्वष्टा वायुरिन्द्राग्नी इत्येतानि दक्षिणद्वाराणि सदैवतानि सनक्षत्राणि सग्रहाणि साऽहोरात्राणि समुहूर्तानि तर्पयामि, रुद्रांश्च तर्पयामि ॥ मित्र इन्द्रो नैरृतिरापो विश्वेदेवा ब्रह्माविष्णुरित्येतानि पश्चिमद्वाराणि सदैवतानि सनक्षत्राणि सग्रहाणि साऽहोरात्राणि समुहूर्तानि तर्पयामि, आदित्यांश्च तर्पयामि ॥ वसवो वरुण अजैकपादऽहिर्बुध्न्यः पूषाश्विनौ यम इत्येतानि उदग्द्वाराणि सदैवतानि सनक्षत्राणि सग्रहाणि साऽहोरात्राणि समुहूर्तानि तर्पयामि, साध्यांश्च तर्पयामि ॥ ब्रह्माणं तर्पयामि प्रजापतिं चातुर्मुखं स्वायंभुवं परमेष्ठिनं हिरण्यगर्भं रुद्रपार्षदान्, रुद्रपार्षदींश्च, ॐभूःपुरुषं, ॐभुवःपु, ॐस्वःपु, ॐभूर्भुवःस्वःपु, ॐभूर्लोकं, ॐभुवोलोकं, ॐस्वर्लो, ॐमहोलोकं, ॐजनोलोकं, ॐतपोलोकं, ॐसत्यलोकं, भवंदेवं शर्वंदेवं रुद्रंदेवं, पशुपतिंदेवं, उग्रंदेवं, महादेवं, ईशानंदेवं। भवस्यदेवस्यपत्नींतर्पयामि, शर्वस्यदे, रुद्रस्यदे, पशुपतेर्दे, उग्रस्यदे, महादे, भीमस्यदे, ईशानस्यदेवस्यपत्नीं, ॥ भवस्यदेवस्यसुतंतर्पयामि, शर्वस्य, रुद्रस्य, पशुपतेर्दे, उग्रस्य, महादेवस्य, भीमस्य, ईशानस्य, ॥ सनकंतर्पयामि, सनत्कुमारं, स्कन्दं, षष्ठं, विशाखं, स्कन्दपार्षदान्, स्कन्दपार्षदींश्च, विघ्नान्, वीरान्, कालं, एकदन्तं, हस्तिमुखं, विघ्नपार्षदान्, विघ्नपार्षदींश्च, यमं, धर्मराजं, मृत्युं, अन्तकं वैवस्वतं, सर्वप्राणहरं, औडम्बरं,

नीलं, ब्रध्नं, वृकोदरं, भीमं, चित्रं, चित्रगुप्तं, पाशहस्तं, कृता-न्तं, प्रेताधिपतिं, उग्रमुखं भारद्वाजं, धान्वन्तरिं, धान्वन्तरि-पार्षदान्, धान्वन्तरिपार्षदींश्च, विद्यां, माहेश्वरीं, वह्निं, गेहा-ग्निं, दक्षिणाग्निं, आहवनीयाग्निं, सूर्यं, वरुणं, वायुं, कुबेरं, इन्द्रं, जातवेदसं, नैर्ऋतिं, मारुतं, वैश्रवणं, ईशानं, अग्निं, शक्रं, रौरवं, असिपत्रवनं, कुम्भीपाकं, विभीषणं, अतिभीषणं, गर्भ-वासं, स्वात्मगं, गुह्यकान्, मोहिनीं, पयोधरान्, आकाशा-धारान्, वाय्वाधारान्, निराधारान्, निराश्रयान्, भद्राश्व-द्वीपं, शाकल्य, जम्बु, कुश, क्रौञ्च, शल्मलि, गोमेध, पुष्क-लद्वीपं, अस्तम्भितं, केतुमालिं, मोहान्धकारं, संयमिनीं सुमेरुं, हरिवर्षं, हेमकूटं, किन्नरं, हिमाचलं, मलयाचलं, अमरावतीं, ज्योतिष्मतीं, संयमनीं, कृष्णां, प्रभावतीं, शुद्धवतीं, गन्धर्व-वाहिनीं, महोदरीं, क्षीरसमुद्रं, क्षार, दधि, इक्षुसमुद्रं, स्वादूदक, घृत, सुरासमुद्रं, गण्डान्तकं, रुद्रलोकं, ब्रह्म, विष्णु, ध्रुवमण्डलं, सप्तर्षि, भौम, वायु, सूर्यमण्डलं, हाटकेश्वरं, धूम्रकेतुं, लवणवर्षं, ज्वालाकूटं, मन्दारपर्वतं, मैनाक, चित्रकूट, गन्धमादन, निषध, विन्ध्य, पर्यन्त, सह्य, बलाह, कङ्कपर्वतं, कृतयुगं, त्रेतायुगं, द्वापरयुगं, कलियुगं, ब्रह्मपुराणं, पद्म, भागवत, नारद, मार्क-ण्डेय, अग्नि, भविष्यत्, ब्रह्माण्डपुराणं, लिङ्ग, वाराह, वायु, शिव, वामन, ब्रह्मवैवर्त, स्कन्द, गरुड, विष्णुपुराणं, एकनामं,

बहुनामं, सोमं, कुमारं, अङ्गारकं, हरिं, सौम्यं, शुक्रं, गिरांपतिं, वैद्युतीं, भृगुसुतं, सृष्टिकर्तारं, सौरं, गणपतिं, सैंहिकेयं, शिवं, मयूरं, केतुं, ध्रुवं, अनन्तं, वाडवाग्निं, अग्नीषोमौ, हव्यवाहनं, कव्यवाहनं, चित्रभानुं, ज्वलनं, वैश्वानरं, हुताशनं, बहुरूपं, धनञ्जयं, प्रत्यक्षदेवं, पावकं, कालाग्निरुद्रं, सर्वभूताधिपतिं, त्र्यम्बकं, वासुकिनागराजं, पुष्कर, तक्षक, चक्रहस्त, ऐलापत्र, दैत्याख्य, यातुधान, शङ्खपाल, फणीश्वर, पद्म, महापद्म, नील, शेष, अनन्त, कुलिकनागराजं, ब्राह्मीं, माहेश्वरीं, कौमारीं, वैष्णवीं, वाराहीं, नारसिंहीं, ऐन्द्रीं, ईशानीं, दुर्गां, गायत्रीं, सावित्रीं, सरस्वतीं, ग्रहान्, लोकपालान्, नागान्, सागरान्, वेतालान्, किन्नरान्, पिशाचान्, सुपर्णान्, गुह्यकान्, कूष्माण्डान्, उच्छुष्मान्, जलेचरान्, भूचरान्, खेचरान्, वाय्वाधाराञ्जन्तून्, विश्वकर्माणं, वसून्, रुद्रान्, आदित्यान्, साध्यान्, वेदान्, इतिहासपुराणं, ऋग्वेदं, यजुर्वेदं सामवेदं, अथर्ववेदं, अथर्वाङ्गिरसं, धर्मशास्त्राणि, नक्षत्राणि, नक्षत्राङ्गानि, नक्षत्रदेवताः यज्ञान्, अधिष्ठानदेवताः, इष्टियागं, सोमयागं, इन्द्राग्नी, प्रकृतिं, विकृतिं, प्राप्यप्रापकान्, ग्राह्यग्राहकान्, सोमपान्, असोमपान्, चमसादिदेवताः, यज्वानं, याजकान्, विधेर्देवताः, आग्रायनदेवताः, धूपदेवताः ब्राह्मीं, वाचं, परां, पश्यन्तीं, मध्यमां, वैखरीं,

मन्त्रपान्, बलियोगिनीः यज्ञपार्षदान् यज्ञपार्षदींश्च, धर्मं, अर्थं, कामं, मोक्षं, सत्यं, दिशः, विदिशः, योगान्, तारकाः, संवत्सरान्, ऋतून्, मासान्, अर्धमासान्, अहोरात्राणि, सप्त लोकान्, सप्तपातालान्, सप्तद्वीपान्, सप्तजिह्वान्, सप्तहोतॄन्, अष्टौवसून्, एकादशरुद्रान्, दशाङ्गिरसान्, द्वादशसाध्यान्, एकोनपञ्चाशन्मरुद्गणान्, द्वादशमेषादीनिलग्नानि मेर्वादीन्पर्वतान्, आनन्दादीन्योगान्, कृत्तिकादीनिनक्षत्राणि, आदित्यादीन्ग्रहान्, इन्द्रादीन्दशलोकपालान्, वास्तोष्पतिदेवताः क्षेत्रपालदेवताः ब्राह्म्याद्यामातॄः, गौर्याद्यामातॄः, दुर्गाद्यामातॄः, आत्मदेवताः, परमात्मदेवतास्तर्पयामि ( कण्ठोपवीती ) एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः । अर्हन्ति पितरस्त्रींस्त्रींस्त्रियोप्येकैकमञ्जलिम् ) । अग्निर्ऋषिः पावमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम्, ॥ सनकस्तृप्यतां २ सनन्दनः, सनातनः, सनत्कुमारः, कपिलः, आसुरिः, वोढा, पञ्चशिखः, मरीचिः, अत्रिः, अङ्गिराः, पुलहः, पुलस्त्यः, भृगुः, क्रतुः, प्रचेताः, वसिष्ठः, नारदस्तृप्यतां २ ( मनुगौतमसंवर्तविष्णुच्यवनकश्यपाः । बृहस्पत्युशनःशङ्खशातातपपराशराः ॥ पितामहाङ्गिरोदक्षयमापस्तम्भदेवलाः । बुद्धबौधायनव्यासवसिष्ठजमदग्नयः ॥ सोमनारदहारीतयाज्ञवल्क्यप्रचेतसः । लिखितच्छागलेयात्रिविश्वामित्रमरीचयः ॥ कात्यायनोथ जाबालि

पैठीनससुमन्तवः । धर्मशास्त्रप्रणीतारः षट्त्रिंशन्मुनयश्चये )। ते सर्वे तृप्तिमायान्तु गोपुच्छोदकतर्पणात् ॥ ऋषीन् तर्पयामि २ परमर्षीन्, महर्षीन्, श्रुतर्षीन्, सप्तर्षीन्, मनुर्षीन्, वैष्णवर्षीन्, असुरर्षीन्, सुरर्षीन्, यक्षर्षीन्, गन्धर्वर्षीन्, दैत्यर्षीन्, पिशाचर्षीन्, सिद्धर्षीन्, साध्यर्षीन्, विद्याधरर्षीन्, शैवर्षीन्, बौधर्षीन्, योगर्षीन्, नागर्षीन्, पर्वतस्थितर्षीन्, पृथिवीस्थितर्षीन्, अन्तरिक्षस्थितर्षीन्, दिविस्थितर्षीन्, जलस्थितर्षीन्, सर्वर्षीन्, ऋषिदेवताः ऋषिगोत्राणि, ऋषिछन्दांसि, ऋषिपुत्रान्, ऋषिपत्नीः, आपस्तम्बं, सत्याषाढं, हिरण्यकेशं, सनकं, सनन्दनं, सनातनं, सनत्कुमारं, कपिलं, वोढं, पञ्चशिखं, जाबालिं, अत्रिं, वसिष्ठं, पुलहं, पुलस्त्यं, कश्यपं, च्यवनं, व्याघ्रं, विष्णुं, पराशरं पाराशर्यं, वाल्मीकिं, वत्सं, भारद्वाजं, शौनकं, लौगाक्षिं, कण्वं, हारीतं, जमदग्निं, सुमन्तुं याज्ञवल्क्यं, मनुं, दक्षं, भृगुं, शङ्खं, मरीचिं, नारदं, ऋषिशृङ्गं, कुशिकं, गर्गं, अगस्त्यं, कुत्सं, गौर्गुण्डिल्यं, गौर्गुण्डीयं, उपमन्युं, करटं, सूपकं, देवलं, वर्षकर्णं, शुनःशेपं, प्रागाथं, पावमान्यं, क्षुद्रसूक्तान्, महासूक्तान्, सर्वर्षिगणान्तर्पयामि २ ॥ पिता पितामहश्चैव तथैव प्रपितामहः । माता पितामही तद्वत्तथैव प्रपितामही । मातामहाः सपत्नीका गोत्रसम्बन्धिबान्धवाः । ते सर्वे तृप्तिमायान्तु गोपुच्छोदकतर्पणात् ॥ रौरवे पतिताः केचिद्ये

महारौरवे स्थिताः। सुवर्णहारिणो ये च क्रियालोपगताश्च ये। ये केचिदामयग्रस्ताः श्वभ्रादिष्वात्मघातकाः। शृङ्गिदंष्ट्रिनखिव्यालैर्हता ये पापकर्मिणः। ते सर्वे। ( अपसव्येन ) उशन्तस्त्वा हवामह उशन्तः समिधीमहि। उशन्नुशन्त आवहपितॄन्हविषे अत्तवे॥ कव्यवाडनलः स्वधानमस्तृप्यताम् ३ सोमः, यमः, अर्यमा, अग्निष्वात्ताः स्वधानमस्तृप्यन्तां ३, बर्हिषदः, हविष्मन्तः, सुकालिनः, सोमपाः, आज्यपाः, वसवः, रुद्राः, आदित्याः स्वधानमस्तृप्यन्तां॥ सुमन्तु–जैमिनि-वैशम्पायन–पैल–सूत्रकार–महाभारत–धर्माचार्याः स्वधानमस्तृप्यन्तां ३ ॥ जानकि–बाहवि–गार्ग्य–गालव-गौतम–शौनक–शाकल्य-शाण्डल्य–बाभ्रव्य–माण्डूकेयान् स्वधानमस्तर्पयामि ३ गार्गीं स्वधानमस्तर्पयामि। वाचक्नीं, चचालनां, आतिथेयीं, सुलभां, मैत्रीं, कहोत्रं, कौशीतकं, महाकौशीतकं, आश्वलायनं, महाश्वलायनं एतरीयं, महैतरीयं, गार्ग्यं, बाष्कलं, अजातवक्रं,औदवाहिनं, सौजामिं, शौनकं, अनुक्तगोत्रान्, ऊर्ध्ववक्रान्, अधोवक्रान्, तिर्यग्वक्रान्, पितॄन्, पितामहान्, प्रपितामहान्, मातॄः पितामहीः, प्रपितामहीः, मातामहान्, प्रमातामहान्, वृद्धप्रमातामहान्, मातामहीः, प्रमातामहीः, वृद्धप्रमातामहीः, गुरून्, गुरुपत्नीः, सखीन्, सखिपत्नीः, अमात्यान्, अमात्यपत्नीः, वसून्, रुद्रान्, आदित्यान्, अग्निष्वात्तान्, बर्हिषदः, हविष्मन्तः, सुकालिनः

समानोदकान्, सोमपान्, सुकर्मस्थाञ्जन्तून्, स्वकर्मयातनास्थान्, सर्वान्, सर्वपत्नीःस्वधानमस्तर्पयामि ॥ शङ्खस्य त्रिष्टुप् पितरः। उदीरतामवर उत्परासः उन्मध्यमाः पितरः सौम्यासः। असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु। यमस्य त्रिष्टुप् अङ्गिरसः। अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सौम्यासः। तेषां वयं सुमतौ यज्ञियानामपिभद्रे सुमनसे स्याम। आयन्तु नः पितरः सौम्यासः अग्निष्वात्ताः पथिभिर्देवयानैः। अस्मिन्यज्ञे स्वधया मदन्त्वऽधिब्रुवन्तु तेऽवन्त्वऽस्मान्॥ देवताभ्यः पितृभ्यश्च महायोगिभ्य एवच। नमः स्वधा च स्वाहाच नित्यमेव भवंत्विह ॥ अद्य तावत् पिताऽमुकोमुकगोत्रः स्वधानमस्तृप्यतां ३ ऊर्जं वहन्तीरऽमृतं घृतं मधु पयः कीलालं परिस्रुतं स्वधा स्थ पितॄन्मेतर्पयत ॥ पितृभ्यः स्वदायिभ्यः स्वधानमस्तृप्यतां ३ पितामहेभ्यः० प्रपितामहेभ्यः स्वदायिभ्यः ॥ ये चेह पितरो येच नेह यांश्च विद्म यां उ च न प्रविद्म। त्वं वेत्थ यतते जातवेदाः स्वधाभिर्यज्ञं सुकृतं ज्वषस्व। पितामहः०। मधु वाता ऋतायते मधुक्षरन्ति सिन्धवः। मध्वीर्नः सन्त्वोषधीः ॥ १ ॥ मधु नक्तमथोषसा मधुमत्पार्थिवं रजः। मधुद्यौरस्तु नः पिता ॥ २ ॥ मधुमान्नो वनस्पतिर्मधुमानस्तु सूर्यः। माध्वीर्गावो भवन्तु नः ॥ ३ ॥ प्रपितामहः०। नमो वः पितरो मन्यवे, नमो वः पितरः शुष्माय, नमो वः पितरो

जीवाय, नमो वः पितरो रसाय, नमो वः पितरः क्रूराय, नमो वः पितरो बलाय नमो वः पितरः स्वधा वः पितरो याऽत्र पितरः स्वधा यत्र यूयं स्थ सा युष्मासु सुधया यूयं, यथाभागं मादयध्वं, येह पितर ऊर्ग्यत्र वयं स्म साऽस्मासु तस्यै वयं ज्योग्ज्जीवन्तो भूयास्म ॥ माता, पितामही, प्रपितामही, मातामहः, प्रमातामहः वृद्धप्रमातामहः । मातामही, प्रमातामही, वृद्धप्रमातामही ॥ (ऐसे सब सम्बन्धियोंकी तृप्ति करके) मातृपक्षास्तु ये केचिद्ये चान्ये पितृपक्षजाः । गुरुश्वशुरबन्धूनां ये कुलेषु समुद्भवाः । ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्जिताः । जलदानेन ते सर्वे लभन्तां तृप्तिमुत्तमाम् ॥ समस्तमातापितृभ्यो द्वादशदैवतेभ्यः पितृभ्यः हिमपानं स्वधा, क्षीरपानं स्वधा, मधुपानं स्वधा, तिलोदकं स्वधा, उदकतर्पणं स्वधा, हिमं हिमं, रजतं रजतं । सव्येन । वसन्ताय नमः, ग्रीष्मायनमः, वर्षाभ्यो नमः, शरदे नमः, हेमन्ताय नमः, शिशिराय नमः षड्तुभ्यो नमः ॥ देवासुरास्तथा यक्षा नागा गन्धर्वकिन्नराः । पिशाचा गुह्यकाः सिद्धाः कूष्माण्डास्तरवः खगाः ॥ ते सर्वे तृप्तिमायान्तु गोपुच्छोदकतर्पणात् ॥ कण्ठोपवीती । जलेचरा भूनिलया वाय्वाधाराश्च जन्तवः । ते सर्वे० । अपसव्येन । नरकेषु च सर्वेषु यातनासु च ये स्थिताः । ते सर्वे० । ये बान्धवा अबान्धवा येन्यजन्मनि बान्धवाः । ते सर्वे तृप्ति० । येपि दग्धा अदग्धा वा प्राण-

मन्तश्च ये स्थिताः । ते सर्वे तृप्ति० । ये चरन्ति सदा मेरौ ब्रह्मणाधिष्ठिताः सुराः । ते सर्वे तृप्ति० ॥ कैलासवासिनो ये च ये शिवध्यानतत्पराः । ते सर्वे ॥ त्र्यवरा ब्राह्मणा येच गुरवश्च तपोधनाः । ते सर्वे तृप्ति० ॥ अगतीकाश्च शिष्याश्च प्रत्यक्षं भूरिभोजनाः । ते सर्वे तृप्ति० ॥ नागलोकगता ये च विष्णुध्याने च ये रताः । ते सर्वे तृप्ति० ॥ अमरा येऽवतिष्ठन्ति विष्णुं क्षीरोदशायिनम् । ते सर्वे तृप्ति० ॥ इत्थमेते मुनिवराः समाख्याताः स्वनामभिः । अन्ये नाख्यातनामान ऊर्ध्वरेताः प्रजासृजः । ते सर्वे तृप्तिमायान्तु ॥ पिता पितामहश्चैव तथैव प्रपितामहः । मातामह्यः पराश्चैव प्रमातामह्य एवच । प्रपूर्वा वृद्धपूर्वाश्च पूर्वोत्तरास्तथैवच । ते सर्वे तृप्ति० ॥ भ्राता मातामहश्चैव प्रमातामहएव च । वृद्धपूर्वो मातुलश्च गुरुः श्वशुर एव च । ते सर्वे तृप्ति० ॥ श्वश्रूः स्वसा गुरुपत्नी भार्या मित्रस्य तृप्यताम् । पितृमातामहश्चैव पितृव्यो भ्रातरस्तथा । पितृस्वसा मातुलश्च तद्भगिन्यश्च मातुलाः । भार्या भगिन्यो दौहित्राः श्वशुरो भावकाः स्नुषाः । स्यालाश्च गुरुराचार्यः स्वामी सखा यथाक्रमम् । ते सर्वे तृप्ति० ॥ आ ब्रह्मणो ये पितृवंशजाता मातुस्तथा वंशभवा मदीयाः । वंशद्वयेऽस्मिन्मम दासभूता भृत्यास्तथैवाऽऽश्रितसेवकाश्च । मित्राणि सख्यः पशुवश भृत्या दृष्टाः श्रुता वापि कृतोपकाराः । जन्मान्तरे ये मम सङ्गताश्च

स्वधा त्विदमम्बु ददामि तेषाम् ॥ पितृव्या भ्रातृपुत्राश्च मातुलस्य च ये सुताः । मातृस्वसृसुताश्चैव पुत्रास्तद्वत्पितृस्वसुः ॥ ते सर्वे तृप्ति० ॥ तनयास्तनयाश्चैव ये चान्ये स्नेहभागिनः । ते सर्वे तृप्ति० ॥ ये मत्कुल्याः स्वर्गलोके नरके वा वसन्ति ये । अवीच्यन्तर्गता ये च कुम्भीपाकान्तरे स्थिताः ॥ रौरवस्योपभोक्तारो ये महारौरवे स्थिताः । कालसूत्रोपतप्ताङ्गा असिपत्रवने स्थिताः । ते सर्वे तृप्ति० । क्षुधूत्पूयासृविष्टारुक्कटाहाप्लुतविग्रहाः । अन्यत्रवा तत्र तत्र यातनासु च ये स्थिताः । ते सर्वे तृप्ति० ॥ यमाय धर्मराजाय मृत्यवे चान्तकाय च । वैवस्वताय कालाय सर्वप्राणहराय च । औदुम्बराय नीलाय ब्रह्माय परमेष्ठिने । वृकोदराय भीमाय चित्रागुप्ताय वै नमः । पाशहस्तकृतान्ताय प्रेताधिपतये नमः ॥ स्वाहाकारः स्वधाकारः प्रणवश्चैव सप्तधा । ते सर्वे तृप्ति० ॥ देवाश्च ऋषयश्चैव पितरस्तृप्यंतां स्वधा । यत्र देवाश्च ऋषयो मघवान्सप्तसप्तश्च । भूताश्च प्रेतरूपाश्च प्रणवादि नमो नमः । ते सर्वे तृप्ति० ॥ ये मातृकुलसम्भूताः पितृवंशसमुद्भवाः । दुहितुश्च कुले जाता ये भ्रातृस्वसृवंशजाः ॥ राज्ञां चैव कुले ये च ये तद्वर्गसमुद्भवाः । शुश्वरस्य कुले जाता ये शुश्रूकुलसम्भवाः ॥ सुहृत्कुले गुरुकुले बन्धोर्मम कुले तथा । यस्मिन्स्थाने च पितरो धनसम्बन्धिनश्च ये ॥ येषां गृहे मया भुक्तं येषां भुञ्जाम्यहं पुनः । पुत्रदार-

विहीनाश्च नरके वा वसन्ति ये ॥ तेभ्यः सर्वेभ्यः पितृभ्य इदमस्तु तिलोदकम् । अस्मिन्दिने महापुण्ये यन्मया समुपार्जितम् ॥ तेनायं सर्वजन्तूनां क्लेशदोषः प्रशाम्यतु । मत्कुले ये च पितरो लुप्तपिण्डोदकक्रियाः । सूक्ष्मास्त्वकृतचूडाश्च ये च गर्भादिके मृताः ॥ येपि दग्धा अदग्धा वा ये च संस्कारवर्जिताः । ते सर्वे तृप्ति० ॥ यत्र मे मातरः प्रेता यत्र प्रेताः प्रमातरः । महाप्रमातरः प्रेतास्तिलाम्भस्तत्र गच्छतु ॥ यत्र मे पितरः प्रेता यत्र प्रेताः पितामहाः । प्रपितामहान्तराः प्रेतास्तिलाम्भस्तत्र गच्छतु ॥ पञ्चाशत्कोटयो घोरा नरकाणां प्रकीर्तिताः । असत्कर्मरतानां च नराणां शास्त्रदूषिणाम् ॥ पितृणां चैव सर्वेषामिदमस्तु तिलोदकम् ॥ देवद्रव्योपहर्तृणां शरणागतघातिनाम् । आत्मनस्त्यागिनां चैव चण्डालादिहताश्चये । तमसा दग्धकर्माणो महापातकिनश्च ये । गोघ्नानां च कृतघ्नानामगम्यगामिनां तथा । सुवर्णभूमिहर्तृणां शौचाचारविवर्जिनाम् । दयादाक्षिण्यहीनानां पैशुन्यानृतचेतसाम् । नरकास्तु समाख्याताश्चत्वारिंशाधिकं शतम् ॥ तेषामपि प्रधानाश्च नरकास्तु प्रकीर्तिताः । अवीचिः कुम्भेपाकश्च महारौरवरौरवाः । असिपत्रवनं चैव तथा वैतारणीनदी । तन्मध्ये पतिता ये च ये च कर्मवशानुगाः । तरन्ति सर्वे तत्क्षिप्रं मद्दत्तेनोदकेन ते । सप्त सप्त तथा सप्त मातृकाः पितृकाश्च ये ।

गुरुशुश्वरवंशोत्थास्तृप्यन्तामुदकेन ते । पितॄणां चैव सर्वेषामि-
दमस्तु तिलोदकम् । उन्मत्ताः प्रतिपन्नाश्च गुरुशापव्यतिक्रमात् ।
तेषामुद्धरणार्थाय नराणां नरकार्णवात् । ब्रह्मा विष्णुश्च रुद्रश्च
ईश्वरश्च सदाशिवः । पञ्चकारणसंयोगान्नराणामस्तु तोषणम् ।
गोब्राह्मणहतानां च तथा विश्वासघातिनाम् । अन्येषां पति-
तानां च इदमस्तु तिलोदकम् ॥ सव्येन । विष्णुपीठे भद्रपीठे
तीर्थे देवसमागमे । यागार्चनेऽग्निकार्ये च देवगोद्विजसन्निधौ ।
दद्यान्मन्त्रमयं तोयं पितॄणामात्मतृप्तये । सर्वं प्रतिग्रहे होमे
स्नाने दाने सुरार्चने । अध्यापने तथा यज्ञे य इदं तर्पणं पठेत् ।
धनं कीर्तिर्यशश्चैव नित्यं च सुखमश्नुते । दीर्घायुः सुबहून्पुत्रा-
न्पठमानो लभेत्सदा । वपुः पूतं पवित्रं च नित्यं गौदानिकं
फलम् ॥ मा विघ्नं मा च मे पापं मा सन्तु परिपन्थिनः ।
सौम्या भवन्तु तृप्ताश्च भूताः प्रेताः सुखावहाः । ओंनमो देवभ्यः ।
कण्ठोपवीती । स्वाहाऋषिभ्यः । अपसव्येन । स्वधापितृभ्यः ।
सव्येन । आब्रह्मस्तम्बपर्यन्तं ब्रह्माण्डं सचराऽचरं जगत्तृप्यतु ३
एवमस्तु ॥ ततो वेदचतुष्टयीं सम्पाद्य । गायत्र्यै नमः ३ । अद्यतावत् ।
पृथिव्याः अग्नेः ऋग्वेदस्य ब्रह्मणः छन्दसां । अन्तरिक्षस्य वायोः
यजुर्वेदस्य ब्रह्मणः छन्दसां । दिवः सूर्यस्य सामवेदस्य ब्रह्मणः
छन्दसां । दिशां चन्द्रमसः अथर्ववेदस्य ब्रह्मणः छन्दसां ।

आत्मनो, चतुर्वेदेश्वरपूजनमच्छिद्रं सम्पूर्णमस्तु । यवोदकं नमः ॥ आपन्नोसि । नमो ब्रह्मणे ॥ ( ततो वेदचतुष्टयीं गोश्चतुर्षु पादेषु स्वस्वमन्त्रेण प्रतिपाद्य ) ॥ ब्राह्मणप्रच्छां । गायत्र्यै नमः । तत्पुरुषाय वि, । 'वा'वासुदेवाय वि, । सुभगायै वि, । अद्यतावत् रुद्रस्य 'वा' (विष्णोः)सानुचरस्य नन्दायाः सुनन्दायाः सुभगायाः सुशीलायाः सुरभेः वरकामधेनोः आत्मनो, पितुर्वा मातुः परलोके सुखसन्तारणार्थं गोप्रदाननिमित्तं रुद्रपूजनं धेनुपूजनमच्छिद्रं ॥ सम्पूर्णमस्तु ॥ यवोदकं नमः । क्षमापुष्पाणि । आपन्नोसि । या लक्ष्मीः सर्वभूतानां या च देवेष्ववस्थिता । धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥ देहस्था या च रुद्राणां शङ्करस्य सदा प्रिया । धेनुरू, ॥ विष्णोर्वक्षसि या लक्ष्मीः स्वाहा या च विभावसौ । धेनुरूपेण, ॥ चतुर्मुखस्य या लक्ष्मीर्लक्ष्मीर्या धनदस्य च । लक्ष्मीर्या लोकपालानां सा धेनुर्वरदास्तु मे ॥ स्वधा या पितृमुख्यानां स्वाहा यज्ञभुजामपि । सर्वपापहरा धेनुस्तस्माच्छान्तिं प्रयच्छतु ॥ सर्वदेवनिमित्ताङ्गां सर्वदेवनमस्कृताम् । प्रयच्छामि महासत्वामक्षयाय शुभाय च ॥ ग्रीष्मान्तस्था च या लक्ष्मीः समुद्रान्तः स्थिता तथा । शक्रचन्द्राग्निरुद्राणां सा धेनुर्वरदास्तु मे ॥ त्वं धेनो मम दासस्य भुक्तिं मुक्तिं च कांक्षिणः । आर्तस्येवाभियुक्तस्य प्रसादं कुरु सर्वदा ॥ ( अथ प्रतिग्रहीतुः पुष्पं धेनोरुपरि ) । प्रतिगृह्णामि देवि त्वां कुटुम्बार्थे विशेषतः ।

होमार्थमग्निहोत्रस्य कामधेनो नमोस्तु ते ॥ ( ॐह्रींश्रींस्फीं कुरुष्वप्रसादंभोःममसुरभेऽद्यविष्णुभगिनिरुद्रदुहितः-सर्वकामप्रदेप्रसादंकुरुकुरु ) ॥ न गोषु तुल्यं धनमस्ति किञ्चिद्दुह्यन्ति वाहन्ति हरन्ति पापम् । तृणानि भुक्त्वाप्यमृतं स्रवन्ति विप्रेषु दत्तं कुलमुद्धरन्ति ॥ उदकलशं, । मन्त्रार्थः ॥ अनन्तशाखकल्पाय, ॥ इति गोप्रदानविधिः ॥ १७ ॥

## अथ प्रायश्चित्तस्थानकम् १८ ॥

यथाऽश्वमेधः क्रतुराट् सर्वपापापनोदनः । तथाऽघमर्षणं सूक्तं सर्वपापापनोदनम् ॥ ध्यानं ॥ श्रीनारायणमात्मरूपममलं ब्रह्मादिभिः संस्तुतं शङ्खं चक्रगदाम्बुजानि दधतं दोर्भिश्चतुर्भिः सदा । लक्ष्म्या भूषितवामभागममले पद्मे निषण्णं महापापानामभिसंहरन्तमनघं दोषापनुत्यै भजे ॥ भद्रं कर्णेभिरिति चतसृभिः स्योनोमइति छिद्रस्य ब्रवो मित्रावरुणयोरन्तेवासिनः पङ्क्तिरयातयानीन्द्रक्रतुमिति शक्तेर्वासिष्ठस्य प्रायश्चित्तानि सर्वान्तीयानि शिशुशैशवयोः प्रजापतिमनसीत्यादि मित्रो जनानित्यन्तं वैप्रुषासन्ततीनां वसिष्ठपुत्राणां स्वर्गतानां वाग्वै सरस्वती विंशानुवाकौ प्रायश्चित्तेति वैतानि हवींषि पापविमुञ्चनम् । ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्द-

धातु ॥ पृषदश्वा मरुतः पृश्निमातरः शुभं यावानो विदथेषु जग्मयः । अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसा गमन्निह ॥ शतमिन्नु शरदो अन्तिदेवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मानो मध्या रीरिषतायुर्गन्तोः ॥ प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ, त्वां शश्वन्तमुपयन्ति वाजाः ॥ श्रत्कर्णाय कवये वेद्याय वाचोभिर्नाकमुपयामि शंसन् । यतोभयमभयं तन्नो अस्त्वऽग्ने देवानामवहेड ईक्ष ॥ अग्निं वो देवमग्निभिः सजोषं यजिष्ठं दूतमध्वरे कृणवध्वम् । यो मर्त्येषु निध्रुविनृतावातपुर्मूर्धा घृतन्नः पावकः ॥ घृतप्रतीको घृतपृष्ठो अग्ने घृताहवानो घृतमस्य धाम । घृतप्रुषो हरितस्त्वा वहन्तु घृतं पिबन्यजतादेवदेवान् ॥ ( अ० १ ) इमो अग्ने वीततमानि हव्याजस्रो वक्षि देवतातिमच्छ । प्रति न ईं सुरभीणि व्यन्तु सप्त ते अग्ने त्रयस्त्रिंशत्, यन्मे मनसो विश्वकर्माग्निं युनज्मीन्धानास्त्वाऽग्निर्न ईळित ईळितव्यैर्देवैः पार्थिवैः पातु वायुर्न ईळित ईळितव्यैर्देवैरन्तरिक्षैः पातु सूर्यो न ईळित ईळितव्यैर्देवैर्दिव्यैः पातु विष्णुर्न ईळित ईळितव्यैर्देवैर्दिश्यैः पातु अग्निर्यजुर्भिः पूषा सुगाकारैस्त इमं यज्ञमवन्तु ते मामवन्त्वन्वऽव आरभेनमारभध्वम् २ पृथिवी विभूवरि सिनीवाल्युबन्ध आचित्तिमनस्ते ध्रुवि, विवस्ते य ऊर्मिर्हविष्य इन्द्रियावांस्तव ऋद्ध्या संसोमस्याज्यमसि, हविषो

हविर्ज्योतिषो ज्योतिर्विश्वेषां देवानां भागधेयेस्थ देववीतयेवो गृह्णामि ॥ संवः सिञ्चन्तु मरुतः संपूषा सन्धाता समिन्द्रः संबृहस्पतिः, संव्वोयमग्निः सिञ्चतु प्रजया च धनेन च आयुष्मन्तं कृणोतु माम् । मान्दावशः, आपो देवीर्घृतमिदाप आसन्नग्नीषोमौ बिभ्रत्याप इत्ताः, तीव्रो रसो मधुपृचामरङ्गम आमा प्राणेन सह वर्चसागन् ॥ आदित्पश्याम्युत वा शृणोम्यामा घोषो गच्छति वाङ्म आसम्, मेनेभेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपं यदा वः ॥ समान्यायन्त्युपयन्त्यन्याः समानमूर्व्वं नद्यः पृणन्ति, तंमूं शुचिं शुचयो दीदिवांसमपान्नपातं परितस्थुरापः । आपोहिष्ठामयोभुवस्तान ऊर्जे दधातन, महे रणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयते हनः, उशतीरिव मातरः । तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ, आपो जनयथा चनः । स ईं वृषा जनयंस्तासु गर्भं स ईं शिशुर्धयति तं रिहन्ति, सो अपान्नपादूर्जयन्नप्स्वऽन्तर्वसु देयाय विदते विभाति । इह गावः प्रजायध्वमिहाश्वा इह पूरुषाः, इह सहस्रदक्षिणो रायस्पोषः प्रजायताम् । अयं यज्ञो वर्धतां गोभिरश्वैरियं वेदिः सुपत्या सुवीरा, इदं बर्हिरतीबर्हींष्यन्येमं यज्ञं विश्वे अवन्तु देवाः ॥ स्व आदमे सुदुघा यस्य धेनुः स्वधां पीपाय सुत्वन्नमत्ति, सो अपान्नपादन्नभिम्लातवर्णोन्यसीवेह तन्वा विवेश ।२। स्कन्ना द्यौः स्कन्ना पृथिवी स्कन्नं विश्वमिदं हविः, स्कन्नादो

विश्वा भूतानि प्रस्कन्नं जायतां हविः । इह गावोऽयं यज्ञः । पयस्वतीरापं ओषधयः पयस्वान्मामकं वचः, अपां पयस्वद्यत्पयस्तेन नः सह वर्धतां । यद्वामृक्षच्छकुनिर्मुखेन निर्ऋते तव, अग्निष्टत्सर्वं शुन्धतु हव्यवाड्घृतसूदनः । यद्वामृक्षच्छुपान्मुखेन निर्ऋते तव, अग्निष्टत्सर्वं शुन्धतु हव्यवाड्घृतसूदनः । भूतिर्दभ्रा घृतेन वर्धतां यज्ञं यज्ञाय मुञ्चतु स्वाहा, घृतेन वर्धतां भूतिर्मुञ्चेमं यज्ञं मुञ्च यज्ञपतिमंहसः स्वाहा, यास्ते अग्ने समिद्धा अप्स्वन्तर्वर्ष्मन्पृथिव्या उपसूर्ये याः, तास्ते गच्छन्त्वाहुतीर्घृतस्य देवाय यजमानाय शर्म । ४ ॥ यज्ञस्य हि स्थ ऋत्विजा इन्द्राग्नी कल्पना युवम्, हुताहुतस्य तृप्यतु साहुतस्य हुतस्य च, हुतस्य चाहुतस्य चाहुतस्य च हुतस्य च, पीतापीतस्य सोमस्यास्य हव्यस्येन्द्राग्नी वीतं पिबतमागतम्, सोमं यज्ञं तमो विदन्मत्तिजोमो इमाः प्रजाः, मयाः सोमं पिबादिमं संसृष्टमुभयङ्कृतम् । मा नो ऽवरिषुः पितरो मोत देवा मा नः सबन्धुरुत वान्यबन्धुः, मा नो दुःशंसो अघशंस ईशताहुतोयं यज्ञो अप्येतु देवान् । सप्तर्त्विजः सप्तसदांस्येपान्दशक्षिपो अश्विन पञ्चवाजः, प्राणोव्यानोऽपानः समान आकृतिमग्निः स्वाहा, देवा हविरिदं जुषन्ताम् ५ आत्मा यज्ञस्य रंह्याः सुषाणः पवते सुतः प्रतानि पाति काव्यः, घोषा इनो नृषा अस्य श्वसा वाजसा उत आत्मा यज्ञस्य पूर्व्यः, आत्मान्वन्नभो दुह्यते घृतम्पयो ऋतस्य योनिरमृतं विजा-

यते, समीचानः सुदानवः प्रीणन्ति तन्तु रोहितमेव मेहन्ति पेरवः। देवा देवेषु श्रयन्तां, प्रथमा द्वितीयेषु श्रयन्तां, द्वितीया तृतीयेषु श्रयन्तां, येस्थ त्रय एकादश त्रयश्च त्रिंशच्च त्रयश्च त्रीश्च शता त्रयश्च, त्रीश्च सहस्रा त इमं यज्ञमवन्तु ते मामवन्तु नोव आरभेनमारभध्वम् ६ वसवस्त्वोदीरयन्तु रुद्रास्त्वोदीर्पयन्त्वा-दित्यास्त्वोच्छ्रयन्तु विश्वे त्वा देवा दंहन्तु । ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे, ध्रुवं विश्वमिदं जगद्ध्रुवोराजा विशामसि। देवो ह धर्मणा ध्रुवा यजमानः पशुभिर्ध्रुवः, दिवि दिव्यां दंहाऽन्तरिक्षेऽन्तरिक्षं दंह, पृथिव्यां पार्थिवान् दंह॥ आ त्वा हर्षमन्तरेभूर्ध्रुवस्तिष्ठ विचाचलत्, विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्यज्ञे अधिभ्रशत्॥ ध्रुवं ध्रुवेण हविषा हविरवसोमन्नया-मसि, यथा न इन्द्रः केवली विशो बलिर्ह्रतस्करत्। स्वाहा दिव आप्यायस्व, स्वाहाऽन्तरिक्षादाऽप्यायस्व, स्वाहा पृथिव्या आप्यायस्व । आयुर्धा असि ध्रुवमाऽयुर्मेदेहि, वयोधा असि ध्रुवं वयो मे देहि, तनूपा असि ध्रुवं तन्वं मे पाहि, चक्षुष्पा असि ध्रुवं चक्षुर्मे पाहि, वर्चोधा असि ध्रुवं वर्चो मे धेहि। अध्वर्योऽयं यज्ञो अस्तु देवा ओषधीभ्यः पशुभ्यो मे धनाय, विश्वस्मै भूताय ध्रुवो अस्तु देवाः स पिन्वस्व घृतवद्देव-यज्ञा। इहैवैधि मा पच्योष्टाः पर्वता इवाविचाचलत्, इन्द्र इवेह ध्रुवस्तिष्ठेह यज्ञमुधारय॥ इममिन्द्रो अदीधरद्ध्रुवन्ध्रुवेण हविषा

हविः, तस्मै सोमो अधिब्रुवत्तस्मा वो ब्रह्मणस्पतिः। ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे, ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामसि ७ असवे स्वाहा, वसवे स्वाहा, वसुधेयायस्वाहा, भूपतयेस्वाहा भुवनपतयेस्वाहा, भूतानांपतयेस्वाहा, भूताय-स्वाहा। द्रप्सश्च स्कन्दः पृथिवीमनुद्यामिमं च योनिमनु यश्च पूर्वः, समानं योनिमनुसञ्चरन्तं द्रप्सं जुहोम्यनु सप्तहोत्राः। यस्ते द्रप्सः स्कन्दति यस्ते अंशुर्बाहुच्युतो धिषणाया उपस्थे। अध्वर्यो वा परिवायः पवित्रान्तर्ते जुहोमि मनसा वषट्कृतम्। यो द्रप्सो अंशुः पतितः पृथिव्यां परिवापात्पुरोळाशात्करम्भात्, धाना-सोमान्मन्थिन इन्द्रशुक्रात्स्वाहाकृतमिन्द्राय तं जुहोमि। यस्ते द्रप्सो मधुमां इन्द्रियावान्स्वाहाकृतः पुनरप्येति देवान्, अध्वर्यो वा परिवायः पवित्रान्तर्ते जुहोमि मनसा वषट्कृतम्। यस्ते द्रप्सः स्कन्दति यस्ते अंशुरवश्चयः पुरोदिवः, अयन्देवो बृह-स्पतिः सन्ततिसिञ्चन्तु राधसा ८ विसृष्टधेनाः सलिला घृत-च्युतो वसन्तो ग्रीष्मो मधुमन्ति वर्षाः। शरद्धेमन्त ऋतवो मयो-भुव उदप्रुतो नभसीसं वसन्ताम्। आनः प्रजा मा देवानान्त्व-मग्ने व्रतपा असि, यद्वो वयं प्रमिनाम व्रतानि विद्विषां देवा आविदुष्टरासः, अग्निष्टद्विश्वमापृणाति विद्वान्येभिर्देवानृतुभिः कल्पयति। मधुश्च माधवश्च वासन्तिकौ ऋतू, शुक्रश्च शुचिश्च ग्रैष्मा ऋतू, नभश्च नभस्यश्च वार्षिकौ ऋतू, इषश्चोर्जश्च शारदौ

ऋतू, सहश्च सहस्यश्च हैमन्तिकौ ऋतू, तपश्च तपस्यश्च शैशरौ
ऋतू, त इमं यज्ञमवन्तु ते मामवन्त्वनुव आरभेनुमारभध्वम् ९
असवेस्वाहा, वसवेस्वाहा, विभवेस्वाहा, विवस्वतेस्वाहा, शूषाय-
स्वाहा, संसर्पायस्वाहा, मलिम्लुचायस्वाहा, गणश्रियेस्वाहा,
चन्द्रायस्वाहा, ज्योतिषेस्वाहाऽभिभवेस्वाहाऽधिपतयेस्वाहा,
दिवापतयेस्वाहा। इन्द्रस्य गृहोसि गृहीतो गृह्यो देवानां पूरसि,
तन्त्वा प्रविशामि, तन्त्वाप्रपद्ये, सहगृहैः, सहप्रजया, सह
पशुभिः, सहर्त्विग्भिः, सह सदस्यैः, सहसोम्यैः, सहदक्षिणीयैः,
सहयज्ञेन, सहयज्ञपतिना। इन्द्राग्नी परिधीममावातो देवपु-
राकृता, तन्त्वेन्द्रस्य ग्रहाय प्रपद्ये, सगुः साश्वः सपुरुषः सह
यन्मे स्थितेन, अरिष्टचा अविथ्यै संवेशायोपवेशाय गायत्र्यै
च्छन्दसेऽभिभुवे स्वाहाऽरिष्ट्या अविथ्यै संवीशायोपवीशाय त्रैष्टु-
भेन च्छन्दसा जगत्याऽनुष्टुभेन पांक्त्यै च्छन्दसेऽभिभुवे स्वाहा
१० द्यौश्च त्वा पृथिवी च श्रीणीतामहश्च त्वा रात्री च श्रीणी-
तां, वाक्च त्वा मनश्च श्रीणीतामापश्च त्वोषधयश्च श्रीणीता-
मृक्च त्वा साम च श्रीणीतां, स्तोमश्च त्वा यजुश्च श्रीणीतां,
बृहच्च त्वा रथन्तरं च श्रीणीतां, यज्ञश्च त्वा दक्षिणा च श्रीणीतां,
सूर्यश्च त्वा चन्द्रमाश्च श्रीणीतां, दर्शश्च त्वा पौर्णमासश्च श्रीणीतां,
ब्रह्मच त्वा क्षत्रं च श्रीणीतां, अर्कश्च त्वाऽश्वमेधश्च श्रीणीतां,
श्रीतस्त्वं श्रीतोहमिन्दुरिन्दुमवागंस्तस्य त इन्द्रियावत इन्द्र-

पीतस्य सर्वगणः सर्वगणस्योपहूत उपहूतस्य भक्षयामि ॥११॥
विश्वा अग्ने त्वया वयं धारा उदन्य इव अतिगाहे महिद्विषः,
या दिव्याष्टकास्यपसामपस्तमास्वपा असि, तस्यैत एना हविषा
विधेम त्वं यज्ञो वरुणस्या वया असि, श्रुत्कर्णाय, अनुमतेन
मन्यस्व न इदं यद्भेषजं कृण्वमहे तनूषु, यद्वा तोकेषु तनुषु,
प्रजासु यद्गोष्वोषधीष्वप्सु ॥ १२ ॥ हिरण्यगर्भः समवर्तताग्रे
भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां
कस्मै देवाय हविषा विधेम । तदित्पदन्नविचिकेत विद्वान्यन्मृतः
पुनरप्येति देवान्, त्रिवृद्भुवनं यद्रथवृहज्जीवो गर्भो न मृतः
स्वाहा । आप्यायस्व, सन्ते पयांसि, आप्यायस्व मदिन्तम सोम-
विश्वेभिरंशुभिर्भवानः सुश्रवस्तमः सखावृधे ॥ १३ ॥ अप्स्वग्ने
तपोष्वग्ने अन्तरां अमित्रान्तपशंसमररुषः परस्य, तपो वसो
चिकितानो अचित्वान्विते तिष्ठन्तामजरा अयासः, योनः
सनुत्यो अभिदासदग्ने यो अन्तरो मित्रमहो अनुष्यात्, तम-
जरेभिर्वृषभिस्तवष्टैस्तया तपिष्ठ तपसा तपस्वान् । सम्मा कृणोतु
केतुमानक्तं चिद्दूर आसते । पावको यद्वानस्पतीन्प्रासा मिना-
त्यजरः । न हितो अग्ने तन्वः क्रूरमाना शमन्तः कपिर्बिभस्तिते
जनं स्वं जरायुर्गौरिव मेष इव यदुपच विचचर्वति यदप्सरद्द-
नुपरम्य खादति । शीर्ष्णा शिरो वक्षसा वक्ष एजयन्नंशुं बभस्ति
हरितेभिरासभिः सुपर्णावाचमक्रतोपद्याव्या खरे कृष्णा ईषिरा

अनर्तिषुः, न्यङ्घियन्त्युपरम्य निष्कृतं पुरूरेतोदधिरे सूर्यश्चित्तः
१४ अग्निना तपोन्वाभवत्, सूर्येण तेजो, वायुना प्राणा, इन्द्रेण
देवा, यमेन पितरः, सरस्वत्या मनुष्याः, सप्तदशेन स्तोमा,
वामदेव्येन सामानि, गायत्र्या च्छन्दांसि, मण्या रूपाणि,
हिरण्येन वचांसि तिरश्चि, राजिना सर्पा, अजगरेणाऽऽसव्याः,
श्येनेन पतत्रिणो, व्याघ्रेणारण्याः पशवः, सुपर्णेन वयांसि,
अश्वत्थेन वनस्पतयो, ओदनेनाऽन्नानि, यवेनौषधयोऽश्ववृषेणैक-
शफाः पशवो, वृषभेन गावो, वृष्णिनाऽवयो, वस्तेनाजाश्चन्द्र-
मसा नक्षत्राणि, ब्राह्मणेन वाचो, वाचा देवताः, स्त्रिया विराट्,
ग्राव्णा पर्वताः, समुद्रेणापोऽद्भिः सत्यं, सत्येनर्तं, मृतेन तप,
स्तपसा परमेष्टी, परमेष्टिना मृत्युर्मृत्युना प्रजाः, प्रजाभिः
सगर,स्तनूभिः प्रजापतिस्तैर्देवैरन्वाभूति,रन्वा च भूयांसं, मतिं
च भूयांसं, ब्राह्मणानां श्रेष्ठश्च भूयांसम् १५। यस्य द्रोणकलश
उपदस्यति, कलशमेव तस्योपवायन्तं प्राणोनूपवस्यति प्राणो हि
सोमस्तदाहुः, पयोऽवनयेदित्यऽथो खल्वाहुरन्तर्हितमेव वा,
एतद्यत्पयो हिरण्यमेवाऽपोऽभ्यवनयेद्धिरण्यमभ्युन्नयेदऽमृतं वा,
आप आयुर्हिरण्यममृतादेवाध्यायुरात्मन्धत्ते। चत्वारो वरा
देया, ब्रह्मण उद्गात्रे होत्रेऽध्वर्यवे, एते वै यज्ञस्येन्द्रास्तानेव
प्रीणाति, सैव तत्र प्रायश्चित्तिः। यस्य चमस उपदस्यति, चमस-
मेव तस्योपवायन्तं प्राणोनूपदस्यति, प्राणो हि सोमोऽयमध्व-

र्गुरन्तमं ग्रहं गृह्णीयात्तस्य संपातमवनयेत्प्रायश्चित्ते वै सोमो गृह्यते प्रायश्चित्यैवास्मै प्रायश्चित्तिं करोति, सर्वमायुरेति, सैव तत्र प्रायश्चित्तिः । यस्य ग्रावापि शीर्यते पशुभिर्व्यृध्यते, पशवो हि ग्रावाणो द्युतानस्य मारुतस्य ब्रह्म साम्नेन स्तुवीरन्पशवो, विद्युतानो मरुतः स्वेनैवैनं साम्ना सन्दधाति, पशुमान्भवति, सैव तत्र प्रायश्चित्तिः॥प्रजापतये स्वाहेत्यऽभक्षणीयानुपरमेष्ववऽनयेत्प्राजापत्यो वै सोमः प्रतिष्ठामेवैनङ्गमयति सैव तत्र प्रायश्चित्तिः । यस्य सोममभिदहेद्ग्रावानध्वर्युः स्पार्शयेत,स्तोत्राण्युद्गाता शस्त्राणि होताथ यथापूर्वं यज्ञेन चरेयुः, पञ्च वरा देयाः, पङ्क्तो यज्ञो यज्ञमेवाऽवरुन्धेऽवभृथं गत्वा, पुनरुदेत्य पुरा द्वादश्याः पुनर्दीक्षेत, यद्द्वादशीमऽतिनयेदन्तर्धीयेत तत्र ता दक्षिणा दद्याद्यः पूर्वस्मिन्दास्यं भवति सैव तत्र प्रायश्चित्तिः १६। सर्वान्वा एषोऽग्नौ कामान्प्रवेशयते योग्निमन्वाधाय व्रतमुपैति,स यदनिष्ट्वा प्रयायादऽकामप्रीता एनं कामानानुप्रयायुरऽतेजा अवीर्यः स्यात्स प्रयास्यं जुहुयात्; तुभ्यन्ता अङ्गिरस्तमविश्वाः सुक्षितयः पृथक्, अग्ने कामाय येमिरे,इति कामानेवाऽस्मिन्दधाति, कामप्रीता एनं कामा अनुप्रयान्ति, तेजस्वी वीर्यवान्भवति, सन्ततिर्वा एषा यज्ञस्य योऽग्निमन्वादाय व्रतमुपैति, स यदनिष्ट उद्वयाद्विच्छित्तिरेवास्य सा प्राञ्चमुद्धृत्य मनसोपतिष्ठेत,मन इव वै प्रजापतिः प्राजापत्यो यज्ञो यज्ञमेव सन्तनोति, भूरिति व्याहरेद्भूतो वै प्रजापतिर्भूतिमे-

वोपैत्याऽयुषा वः एष वीर्येण वृद्ध्यते, यस्याहिताग्नेरग्निरपक्षाप यति, स यावच्छम्यया पराविध्येद्यदि तावदपक्षायेत्तं सम्भरेत्॥ इदन्त एकं परऊत एकं तृतीयेन ज्योतिषा संविशस्व, संवेशनस्तन्वे चारुरेधि प्रियो देवानां परमे जनित्रे, इति ब्राह्मणैर्वैनं सम्भरयति सैव तत्र प्रायश्चित्तिः। यदि परस्तरामपक्षायेदनुप्रियाय, वसेत्सैव तत्र प्रायश्चित्तिः। ओषधीर्वा एतस्य पयः पशून्प्रविशति, यस्य हविषेऽपाकृता वत्सा धयति वायव्यां यवागूं निर्वपेत्, वायुर्वै पयसः प्रदाता तमेव भागधेयेनोपधावति, सोऽस्मैपयः प्रयच्छत्यऽथोत्तरस्मै हविषे वत्सानऽपावर्त्तयेत्सैव तत्र प्रायश्चित्तिः। १७। अर्धं वा एतस्य यज्ञस्य मीयते, यस्य सायं दुग्धं हविरार्तिमार्च्छतीन्द्राय व्रीहीन्निरुप्योपवसेत्पयो वा ओषधयः पय एवारभ्योपवसति, यत्प्रातः स्यात्तच्छृतं कुर्युरैन्द्र इतरः पुरोळाशः स्यात्पयो वा ओषधयः पय एवाऽरभ्योपवसति पयसैवास्मै पयः प्रदापयत्यथोत्तरस्मै हविषे वत्सानऽपावर्तयेत् सैव तत्र प्रायश्चित्तिः। उभयान्वा एष देवान्भागधेयेन व्यर्धयति, ये यजमानस्य सायं च प्रातश्च गृहमागच्छन्ति, यस्य सायं प्रातर्दुग्धं हविरार्तिमार्च्छत्योदनं पञ्चशरावं निर्वपेदऽग्निर्देवतानां प्रथमं यजेदग्निमुखा एव देवताः प्रीणात्यग्निं वा अन्वन्या देवता इन्द्रमऽन्यास्ता एवोभयीः प्रीणात्यऽथोत्तरस्मै हविषे वत्सानऽपावर्तयेत्सैव तत्र प्रायश्चित्तिः। यत्कीटावपन्नेन जुहुयादप्रजा अपशुर्यजमानः स्याद्यदनायतने निनाये-

दनायतनः स्यान्मध्यमेन पर्णेन द्यावापृथिव्यावर्चन्तः परिनिनयेत् द्यावापृथिवी वै यज्ञस्य प्रतिष्ठा, प्रतिष्ठामेवैनं गमयति सैव तत्र प्रायश्चित्तिः। यत्प्रयाजेष्वऽनिष्टेषु प्राङऽङ्गारः स्कन्देद्ऽध्वर्यवे च यजमानाय चाऽकं स्यात्, यद्दक्षिणा ब्रह्मणे च यजमानाय चाऽकं स्यात्, यत्प्रत्यङ् होत्रे च पत्न्यै चाऽकं स्यात्, यदुदङऽग्नीध्रे च यजमानस्य च पशुभ्योऽकं स्यात्तं प्रहरेत्। सहस्रशृङ्गो वृषभो जातवेदः स्तोमपृष्ठो घृतवान्सुप्रतीकः मा मा हिंसीन्नाथितो त्वाचे जहाति, सहस्रपोषं मे गोपोषं च यच्छ इति ब्राह्मणैवैनं प्रहरति सैव तत्र प्रायश्चित्तिः। अर्धं वा एतस्य यज्ञस्य मीयते यस्य व्रते पत्न्यानालम्बुका भवति, तामऽपरुध्य यजेत, सर्वेणैव यज्ञेन यजेत तामिष्ट्वोपह्वयेत। सा त्वमस्यऽमोहममोहमसि सा त्वम्, ता एहि संरभावहै, पुंसे पुत्राय कर्तव्ये रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय, इत्यर्ध एवैनामाभजति सैव तत्र प्रायश्चित्तिः १८। यदववृष्टेन जुहुयादपरूपमस्यात्संजायेत, यत्प्रत्येयात्पापीयान्स्याद्यन्न जुहुयादार्तिमार्च्छेत्। मित्रो जनन्यातयति प्रजानान्मित्रो दधार पृथिवीमुत द्याम्, मित्राकृष्टीरनिमिषाभिचष्टे मित्राय हव्यं घृतवद्विधेम इति मैत्र्यर्चा समिधमाधाय होतव्यं मित्रो वै यज्ञस्य शान्तिर्मित्रेणैवैनं शमयति तद्धुत्वाऽथान्यां दुग्ध्वा पुनर्होतव्यं सैव तत्र प्रायश्चित्तिः। यत्कीटावपन्नेन जुहुयादऽप्रजा अपशुर्यजमानः स्यात्, यन्न जुहुयादार्तिमार्च्छेत्तत्प्रजापत्यर्चा वाल्मीकवपायामवन-

येत् प्राजापत्यो वै वाल्मीको यज्ञः, प्रजापतिर्यज्ञ एव यज्ञं प्रतिष्ठापयति, तद्धुत्वाथान्यां दुग्ध्वा पुनर्होतव्यं सैव तत्र प्रायश्चित्तिः । यदि पूर्वस्यामाहुत्यां हुतायामुत्तराऽऽहुतिः स्कन्देद्द्विपद्भिः पशुभिर्यजमानो वृद्ध्यते, यदभिजुहुयाच्चतुष्पाद्भिः पशुभिर्यजमानो वृद्ध्यते॥ यत्र वेत्थ वनस्पते देवानां गुह्या नामानि तत्र हव्यानि कामय इति वानस्पत्ययर्चा समिधमादाय होतव्यं, वनस्पतिर्नैवास्यान्तां चानान्तां चाहुतीः विदाधार, तद्धुत्वाऽथान्यां दुग्ध्वा पुनर्होतव्यं सैव तत्र प्रायश्चित्तिः ।१९॥(आज्येन)देवाश्च वाऽसुराश्चास्मिँल्लोके आसन्प्रजापतिरकामयत, पराऽसुरान्न देवान्, प्रजा सृजेयेति, स एतानि चातुर्मास्यान्यपश्यत्स चातुर्मास्यैरेवासुरान्प्रणुदत, चातुर्मास्यैः प्रजा असृजत, य एवं विद्वांश्चातुर्मास्यैर्यजेत, परा भ्रातृव्यं नुदते, प्रप्रजया प्रपशुभिर्जायते, ऽग्निष्टोमाद्वैश्वदेवं यज्ञक्रतुं निर्माय प्रजापतिः प्रजा असृजतोक्थाद्वरुणप्रघासान्यज्ञक्रतुं निर्माय, प्रजा वरुणेन ग्राहयेदतिरात्रात्साकमेधान्यज्ञक्रतुर्निर्मायेन्द्रो वृत्रमऽहन्वैश्वदेवेन वै सोऽसुरान्प्राणुदत, वैश्वदेवेन प्रजा असृजत, सृष्टा वै अन्याः प्रजा आसन्नसृष्टा अन्या, अथ प्रजापतिरकामयत, प्रजाः सृजेयेति, संवत्सरो वै यज्ञो यज्ञः प्रजापतिः, स एते आत्मनोधिपयसी निरमिमीतो धान्यं च वह्यं चाथैताभ्यो देवताभ्य एतानि हवींषि भागं निरवपत्तैः प्रजा असृजत तेभ्यो वैताः प्रजाः प्रजायन्त, ऋतव एतानि पञ्च

हवींषि पश्च ह्यृतवस्तत एवं प्रजायन्ते,ऽग्निरेव प्रावापयत्सोमो रेतो दध्यान्मिथुनं वा अग्निश्च सोमश्च सविता प्रासुवत्संवत्सरो वै सविता द्वादश मासाः संवत्सरस्तस्माद्द्वादशकपालोऽथो वैश्वदेवत्वायैव द्वादशकपाल उपांशु यजत्यनिरुक्तो हि संवत्सरः सरस्वत्यैव सृष्ट्वा सुवाचमदधात्, पूषाणं प्रतिष्ठामभ्यसृजन्त, वाग्वै सरस्वती पशवः पूषा मिथुनं वाक्च पशवश्च मध्यतो वै प्रजा विसृज्यन्तेऽन्ततो मिथुनाद्विषूचीः प्रजायन्ते, तदेतत्प्रजापतेरेवाधिमध्यतः प्रजा विसृज्यन्ते,ऽथोदोत्ततो मिथुनादुभयतो विषूचीः प्रजायन्ते ( तेजोसि ) वातघ्नानि वा एतानि हवींषि अग्निना वा अनीकेनेन्द्रो वृत्रमहन्सोमेन राज्ञा सवित्रा प्रसूत सरस्वत्या चेत्र्या पूषावीर्यैरवतिष्ठत विजितिरेवैतानि हवींषि स्वाहा ॥ तर्पणम् ॥ प्रायश्चित्तं पठेद्यो वै प्रातरुत्थाय मानवः। अश्वमेधसहस्राणां फलं सर्वशुभप्रदम् । हुनेद्यो वै सदा मर्त्यो यज्ञे नैमित्तिके परम् । नित्यपापाद्विनिर्मुक्तिर्याज्ञिकस्य द्विजस्य च । तस्मात्पठेद्धुनेन्मर्त्यो नित्ये नैमित्तिके तथा । अगम्यगमनादिभ्यो मुक्तो याति परां गतिम् ॥ अभक्ष्यभक्षणाऽग्राह्यग्रहणादिभ्य एवच । अकार्यकरणाच्चैव स्वाचाराणां विलोपनात् ॥ स्वधर्मपङ्क्तिनाशाय स्वकर्माणि च निन्दकः । एतैर्धर्मैर्विनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ॥ अनेन मन्त्रहोमेन भगवान्वासुदेवः प्रीयतां प्रीतोऽस्तु ॥ इति श्रीयजुषि काठके चरकशाखायामुपमिकायां नाम प्रायश्चित्तस्थानकं पञ्चत्रिंशं संपूर्णम् ॥ १८ ॥

## अथ ऋग्वेदे विष्णुबुधसूक्तानि १९ ॥

ध्यानं । यस्य हस्ते गदा चक्रं गरुडो यस्य वाहनम् । शङ्खः करतले यस्य स मे विष्णुः प्रसीदतु ॥ प्रबुद्धबुद्धिसृतुकाले प्रबोधं सत्यावाचा सोमवंशप्रसूतम् । सुवर्चसं तेजसा विश्वरूपं बुधं सदा शरणमऽहं प्रपद्ये ॥ परो वैष्णव ऊरुमिन्द्रश्चतस्रोऽनूसर्त्तः ॥ परो मात्रया तन्वा वृधान, न ते महित्वमन्वश्नुवन्ति । उभे ते विद्म रजसे पृथिव्या, विष्णो देव त्वम्परमस्य वित्से ॥ न ते विष्णो जायमानो न जातो, देव महिम्नः परमन्तमाप । उद-स्तभ्ना नाकमृष्वं बृहन्तं, दाधर्थ प्राचीङ्ककुभं पृथिव्याः ॥ हिळावती धेनुमती हि भूतं, सूर्यवसिनी मनुष्ये सदस्या । व्युष्टभ्ना रोदसी विष्णवेते, दधात्थ पृथिवीमभितो मयूखैः ॥ उरुं यज्ञाय चक्रथूरुलोकञ्जनयन्ता सूर्यमुषासमग्निम् । दासस्य चिद्वृषशिप्रस्य माया, जघ्नथुर्नरा पृतनाज्येषु ॥ इन्द्राविष्णू दृंहितः शम्बरस्य, नवपुरो नवतिश्च श्नथिष्टम् । शतं वर्चस्विनः सहस्रं च साकं, ह्यथो अप्रत्यसुरस्य वीरान् ॥ इयं मनीषा बृहती बृहत, उरुक्रमा तवसा वर्धयन्ती । ररेवांस्तोमं विदथेषु विष्णो, पिन्वन्तो मिषो वृजिनेष्विन्द्र ॥ वषट्ते विष्ण आस आकृणोमि, तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्धन्तु त्वा सुष्टु-तयो गिरो मे, यूयं पात स्वस्तिभिः सदा नः ॥ नमन्तो दयते सविष्यन्यो विष्णव उरुगायाय दाशत् । प्रायः सत्राचा मनसा

यजेत, एतावन्तमर्यमा विवासत् ॥ त्वं विष्णो सुमतिं विश्वजन्या, मऽप्रयतामेव यावोमतिन्दाः। पर्चो यथानः सुवितस्य भूरीरश्वावतः पुरुश्चन्द्रस्य रायः ॥ त्रिन्दिवः पृथिवीमेष एतां विचक्रमे शतर्चसं महित्वा । प्रविष्णुरस्तु तवसस्तुवीया, न्त्वेषं ह्यस्य स्थविरस्य नाम ॥ विचक्रमे पृथिवीमेष एतां, क्षेत्राय विष्णुर्मनुष्ये दश स्यात् । ध्रुवासो अस्य कीरयो जनास उरु क्षितिं सुजनिमाचकार ॥ प्रतत्ते अद्य शिपिविष्टनामा, यः शंसामि वयुनानि विद्वान् । तन्त्वा गृह्णामि तव सा मतव्या, क्षयन्तमस्य रजसः पराके ॥ किमत्ते विष्णो परिचक्षमऽभूत्प्रयद्विवक्ष्ये शिपिविष्टो अस्मिन् । मा वर्षो अस्मदपगूह एतत्, यदन्यरूपः समिथे वभूव ॥ वषट् ते विष्ण० ॥ ॥ उद्बुध्यध्वं बुधाः सौम्यं नवम्यन्ते जगत्यौ पञ्चमी बृहतीगायत्र्योर्मध्ये ॥ ॥ उद्बुध्यध्वं सुमनसः सखायः, समग्निमिन्धुं बहवः सनीळाः। दधिक्रमऽग्निमुषसञ्च देवीमिन्द्रावतो वसूनि हयेवः ॥ मन्द्रा कृणुध्वं धिय आतन्वध्वं, नावमरित्रमरणीं कृण्वध्वम् । इङ्कृणुध्वमायुधारं कृणुध्वं, प्राञ्चयज्ञं प्रणयता सखायः ॥ युनक्तु सीरा वियुगा तन्वध्वङ्कृते योनौ वपतीह बीजम् । गिरा च श्रुष्टिः सभरा असन्नो, नोदीय इच्छृण्यपक्कमेयात् ॥ सीरा युञ्जन्ति कवयो, युगा वितन्वते पृथक् । धीरा देवेषु सुम्नया, निराहावाङ्कृणोतु न संवरत्रा दधातन, सिञ्चामह अवततम् ।

सुद्रिणं च वयं कतौ, सुषेकमनुपक्षितम् ॥ इष्कृता हावमवतं, सुवरत्रं सुषेचनम् । उच्छ्रिणं सिञ्चे अक्षितम् ॥ प्रणीताश्वान्हिताञ्जयाथ, स्वस्तिवाहं रथमित्कृणुध्वम् ॥ द्रोणहावमवतमश्मचक्रुः, संसत्रकोशं सिञ्चता नृपानाम् ॥ व्रजङ्कृणुध्वं सहिवो नृपाणो, वर्म सेव्यध्वं बहुला पृथूनि । पुनः कृणुध्वं मायसीरदृष्टः, सावस्तिस्रोचं हसो दृहतातम् ॥ आवोधियं यज्ञियां वर्त ऊतये, देवो देवीं यजतां यज्ञियामहे । सानो दुहीयद्यवसेव गत्वी, सहस्रधारा पयसा महीङ्गोः ॥ आतूषिञ्च हरिमिन्द्रोरुपस्थे, वाशीभिस्तक्षताश्म धमयीभिः । परिषजष्वन्दशकक्ष्याभि, रुभेध्वरौ प्रतिवह्निं युनक्तु ॥ उभौ ध्वरौ वह्निराप्यब्दमानोऽन्तर्येनेव चरति द्विजानि । वनस्पतिं वन आस्थापयिध्वं, निषूदधिध्वमखनन्त उत्सम् ॥ कपृन्नरः कपृथमुद्दधात नचोदयत खुदतवाजसातये । निष्टर्यः पुत्रमाच्यावथोतय, इन्द्रं सबाध इह सोम पीतये ॥ अनेन मन्त्रहोमेन आत्मनो० ( मार्गशीर्षे ) रुक्मिणीसहितः कृष्णः, श्रीस-केशवः, ( पौषे ) प्रियास-अनन्तः, वागीश्वरीस-नारायणः, ( माघे ) प्रीतिस-अच्युतः, कान्तास-माधवः ( फाल्गुने ) शक्तिस-चक्री, क्रियास-गोविन्दः ( चैत्रे ) सिद्धिस-वैकुण्ठः, मतिस-विष्णुः ( वैशाखे ) शोभास-जनार्दनः, विभूतिस-मधुसूदनः ( ज्यैष्ठे ) महिमास-उपेन्द्रः, इच्छास-त्रिविक्रमः ( आषाढे ) लक्ष्मीस-यज्ञपुरुषः, धृतिस-वामनः ( श्रावणे )

कान्तिस-वासुदेवः, रतिस-श्रीधरः ( भाद्रपदे ) प्राप्तिस-हरिः, मायास-हृषीकेशः ( आश्वियुजे ) प्राकाम्यास-योगीश्वरः, धीस-पद्मनाभः ( कार्तिके ) लघिमास-पुण्डरीकाक्षः, गरिमास-दामोदरः ( मलिम्लुचे ) सत्यभामास-नरकारिः, निष्कलास-महामार्तण्डः प्रीयतां प्रीतोऽस्तु ॥ इति ऋग्वेदे विष्णुबुधसूक्तम् १९

## अथ गायत्रीब्राह्मणम् ॥ २० ॥

अस्य श्रीमहागायत्रीब्राह्मणमन्त्रस्य प्रजापतेर्भूलोकस्यानुष्टुप् ककुभा-पृथिवी ऋषिः, विराट्छन्दः, ब्रह्मा देवता, प्रणवऋषिः, गायत्रं छन्दः, परमाग्निवायुर्देवता, व्याहृतीनां जमदग्निभारद्वाजभृगव ऋषयः, अग्निवा-युसूर्या देवताः,आत्मनो वाङ्मनः० सूर्याद्यावाहनपूर्वकं श्रीमहागायत्रीप्री-त्यर्थं होमे पाठे वा विनियोगः ॥ ॐकारो यस्य मूलं० । मुक्तावि० । आयातु वरदादेवी० । ३ ॥ ॐअग्नयेस्वाहा, ॐभूःस्वाहा, ॐभुवः-स्वाहा, ॐस्वःस्वाहा, ॐभूर्भुवःस्वःस्वाहा, ॐभूःस्वाहा, ॐभुवः-स्वाहा, ॐस्वःस्वाहा,ॐमहःस्वाहा,ॐजनःस्वाहा, ॐतपःस्वाहा, ॐसत्यंस्वाहा ॥ ॐअग्नयेस्वाहेत्यग्निः सर्वादेवताः सौख्यं करो-त्यसौ वा अग्निः प्रीणाति, ॐभूःस्वाहेति भूमिं वै उर्वन्तरिक्ष-मुर्वादींस्तेन प्रीणाति, ॐभुवःस्वाहेति भुवनानां पतय इत्यऽद्भुतं तेन प्रीणाति, ॐस्वःस्वाहेति आप एष इमं लोकं जयतु तेन सोमपः प्रीणाति, ॐभूर्भुवःस्वःस्वाहेति अग्निं सूर्यं ज्योतिष्मन्तं करोति यजमानो वृध्यते । ॐभूःस्वाहेति भूमिर्वै द्विपदाश्चैव

चतुष्पदस्तेन वृद्ध्यंते, ॐभुवःस्वाहेति अन्तरिक्षं वै वायुर्देवता तेन वायून्वै प्रीणाति, ॐस्वःस्वाहेति वाचो मे प्राणापानौ सम्राट् चक्षुषस्तेन प्रीणाति, ॐमहःस्वाहेति महामनसां महालोकाञ्जयति होतारं तेन प्रीणाति, ॐजनःस्वाहेति जनानां जनपतिर्जन्तूनामिमं लोकं तेन प्रीणाति, ॐतपःस्वाहेति तपो वाऽसावादित्यो द्वादशमासाः संवत्सरं तेन प्रीणाति, ॐसत्यंस्वाहेति सत्यमिति वरुणचन्द्रमसौ नक्षत्राणि सप्तार्णवांस्तेन प्रीणाति, अथोत्तरस्मै सर्वा देवतास्तेन प्रीणाति, तेन सौख्यं करोति, यजमानो वृद्ध्यते सन्तत्यै प्रजावत्या भवति, अविच्छिन्नं प्रदीयते य एवं वेद ॥ इति व्याहृतिब्राह्मणम् ॥ मध्याह्ने वृषवाहना त्रिनयनाशुक्लाम्बरालेपना खट्वाङ्गं त्रिशिखं कपालडमरू दोर्भिर्वहन्ती सदा । शुक्ला शुक्लविभूषणा नरशिरोमालाभिरावेष्टिता भूयाद्यौवनवत्यसौ त्रिजगतां सर्वार्तिविद्राविणी ॥ ॐतत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ३ ॥ ॐतत्सवितुरिति तदादित्यः सविता प्रसविता प्रजया पशुषु प्रतितिष्ठति, वरेण्यमित्यऽग्निर्वै वरिवः कृणोति, भर्गेति रश्मयः शतं सहस्रमऽयुतं च प्रतनोति देवस्य द्योतनपरं कामस्य, धीमहीति धीमान् विश्वस्याप्नोति, धियोयोन इति अहोरात्रिः सन्ध्यामुपयति, प्रचोदयादितिप्रजापतिर्वा प्रजामुपसृजति, पशुषु प्रतितिष्ठति, तस्माद्गायत्री चतुर्विंशत्यक्षरा भवति

सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै न ब्रह्मचारिणं शतं सहस्रमयुतं च प्रजावान्पशुमान्रयिमानायुष्मन्तं करोति, तस्माद्गायत्री आयुरिव परमं कामं गायत्र्याऽभितिष्ठति य एवं वेद ॥ इति तत्सवितुर्ब्राह्मणम् ॥ ॥ चतुर्भुजामऽर्कसहस्रकोटिभां त्रिलोचनां हारकिरीटशोभिताम् । चतुर्मुखस्याङ्कगतां महोज्ज्वलां वेदेश्वरीं पञ्चमुखीं नमाम्यऽहम् ॥ ॐओजोऽसि सहोऽसि बलमसि भ्राजोसि देवानान्धामनामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूः ॥ ॐदेवाश्चवा असुराश्च संयत्ता आसंस्तान्गायत्र्यऽन्तराऽतिष्ठदोजो वै वीर्यमन्नाद्यं परिगृह्य संवत्सरो वा वैनान्सोऽन्तरातिष्ठच्चतुर्विंशतिगायत्र्या अक्षराणि, चतुर्विंशति संवत्सरस्यार्धमासास्ते विदुर्यतरान्वा इयमुपवर्त्स्यति, तइदं भविष्यंति तं व्यह्वयन्तदाभीत्यऽसुरा आह्वयन्विश्वकर्मन्निति देवा अस्मान्यतरांश्च नोपवर्तन्त, ते देवा एतद्यजुरपश्यन् ओजोसि सहोसि बलमसि भ्राजोसि देवानान्धामनामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूरिति स देवानुपावर्तत, ततो देवा अभवन् पराऽसुरा अभवन्नाग्नेय्यमऽष्टाकपालं निर्वपेद्भ्रातृव्यवान्वा स्पर्धमानो वा तमाऽस्याद्यैतैर्ऋजुभिरभिमृशेदोजो वै वीर्यं संवत्सर ओज एव वीर्यं भ्रातृव्यस्य वृंक्ते, सनिर्वीर्यः पराभवति, सैषा गायत्री नामेष्टिरथो आहुः क्षेत्रस्य संवर्ग इति ॥ इति ओजोसिब्राह्मणम् ॥ ब्राह्मी हंसरथस्थिता मुखसरोजोद्यच्चतुर्वोऽभ्रयी मुद्रापुस्तककुण्डलाक्षवल-

याधारा चतुर्भिर्भुजैः । रक्ता रक्तविभूषणा प्रहसिता रक्ताम्बरालङ्कृता कौमारी मम जीवितावधि सदा भूयादघध्वंसिनी ॥ ( अश्वमेधे· घोराणामार्षम् ) । द्रष्ट्रेनम उपद्रष्ट्रेनमोऽनुद्रष्ट्रेनमः ख्यात्रे· नम उपख्यात्रेनमोऽनुख्यात्रेनमः शृण्वतेनम उपशृण्वतेनमः सते नमोऽसतेनमो जातायनमो जनिष्यमाणायनमो भूतायनमो भविष्यतेनमश्चक्षुषेनमः श्रोत्रायनमो मनसेनमो वाचेनमो ब्रह्मणे नमः शान्तायनमस्तपसेनमः ॥ भूतं भव्यं भविष्यद्व· षट्स्वाहानम, ऋक्सामयजुर्वषट्स्वाहानमो, गायत्री त्रिष्टुब्जगती वषट्स्वाहानमः, पृथिव्यन्तरिक्षं द्यौर्वषट्स्वाहानमोऽन्नं कृषि· र्वृष्टिर्वषट्स्वाहानमः, पिता पुत्रः पौत्रो वषट्स्वाहानमः, प्राणो व्यानोऽपानो वषट्स्वाहानमो, भूर्भुवःस्वर्वषट्स्वाहानमः ॥ द्रष्ट्रे· नम उपद्रष्ट्रेनमोऽनुद्रष्ट्रेनम इत्यऽग्निर्वै द्रष्टा ब्रह्मण उपद्रष्टा वायुरऽ· नुद्रष्टा तेभ्य एव नमस्करोति, ख्यात्रेनम उपख्यात्रेनमोऽनुख्यात्रेनम इति संवत्सरो वै ख्याताऽदित्य उपख्याता चन्द्रमाऽनुख्याता तेभ्य एव नमस्करोति, शृण्वतेनम उपशृण्वतेनम इति द्यावा· पृथिवीभ्यामेव नमस्करोति, सतेनमोऽसतेनम इति सदसद्भ्या· मेव नमस्करोति, जातायनमो जनिष्यमाणाय नम इति यज्ञाय वै दक्षिणायै च नमस्करोति, भूतायनमो भविष्यतेनम इति ऋक्सामभ्यामेव नमस्करोति, चक्षुषेनमः श्रोत्रायनम इति यथा यजुरेकविंशतिकृत्वो नमस्करोति, पञ्चर्तवो द्वादश मासास्त्रय

इमे लोका असावादित्य एकविंश एष स्वर्गो लोकः स्वर्गस्य लोकस्य समष्ट्यै सर्वा वा एतर्ह्येतस्मिन्देवता आशंसन्ती सामभिर्व्याहरिष्यन्तीत्यग्निः सर्वा देवता असावादित्योऽग्निर्यदेतैर्नमस्कारैरादित्यमुपतिष्ठते, सर्वाभिरेवैनं देवताभिः समर्धयत्यश्वं वषट्कारं ये ते पन्थानः सविता पूर्व्यास इति वितता अन्तरिक्षे तेभिर्नो अद्य पथिभिः सुगेभिरक्षा च नो अधि च ब्रूहि देव इति स्वर्गस्य लोकस्य समष्ट्यै नमोऽग्नये पृथिवीक्षित इत्यग्निनाऽयतनेषु विदधातीमानेवैनांल्लोकानुगमयति य एवं वेद ॥ इति द्रष्टृब्राह्मणम् ॥ ॥ ॐ यस्या भूः पाददेशे वसति तदुपरि खं गुदे स्वर्गलोको नाभौ मध्ये महाख्यो जन उरसि गतः कण्ठगामी तपश्च । सत्यं मूर्ध्नीश्वराख्या त्रिगुणविरहिता निष्कला स्वस्वरूपा सा देवी विश्वरूपा वितरतु विभवं वेदमूला पराख्या ॥ यो विश्वचक्षुरुत विश्वतो मुखो विश्वतो हस्त उत विश्वतस्पात् । सम्बाहुभ्यां नमते संयजत्रैर्द्यावापृथिवी जनयन्देव एकः ॥ यो विश्वचक्षुरुत इति विश्वचक्षुर्वै देवानां भवति, विश्वतो मुख इति विश्वमुखां दर्शयति, विश्वतो हस्त इति विश्वहस्त उत्तमा भवति, उत विश्वतस्पात् इति विश्वतस्पाद्दधार सम्बाहुभ्यामिति सर्वबाहुर्वै, नमते नमस्कुर्याः कुर्वन्ते, संयजत्रैरिति सर्वस्य जित्यै, द्यावापृथिवी इति द्यावापृथिव्योर्धारयते, जनयन्देव एक इति जनमिति जनानां जनपतेर्जन्तूनामात्मा वै सर्वान्ध्यायन्ते देव एको भवति स

देवः सर्वेभ्यो रक्षांसि भवति य एवं वेद ॥ इति यो विश्वब्राह्मणम् ॥ ॥ प्रातःकाले कुमारी कुमुदकलिकया जप्यमालां जपन्ती मध्याह्ने प्रौढरूपा विकसितवदना चारुनेत्रा विशाला । सन्ध्यायां वृद्धरूपा गलितकुचयुगे मुण्डमालां वहन्ती सा देवी दिव्यदेहा हरिहरनमिता पातु नो ह्यादिमुद्रा ॥ ॐआ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामस्मिन्राष्ट्रे राजन्य एषव्यः शूरो महारथो जायतां दोग्ध्री धेनुर्वोढाऽनुड्वानाऽशुः सप्तिर्जिष्णू रथिष्ठाः पुरन्ध्रिर्योषा सभेयो युवाऽस्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥ आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामित्याह, ब्राह्मण एव ब्रह्मवर्चसं दधाति, तस्मात्पुरा ब्राह्मणो ब्रह्मवर्चसी जायताम्, अस्मिन्राष्ट्रे राजन्य एषव्यः शूरो इति इषव्योऽतिव्यते, महारथो जायतामिति राजन्य एव शौर्यं महिमानं दधाति, तस्मात्पुरा राजन्यः शूर इषव्योऽतिव्यते महारथो जज्ञे, दोग्ध्री धेनुरिति धेन्वामेव पयोदधाति, तस्मात्पुरा धेनुर्दोग्ध्री जज्ञे, वोढाऽनुड्वानिति अनुडुह्येव बलं दधाति, तस्मात्पुराऽनुड्वान्वोढा जज्ञे, आशुः सप्तिरिति अश्व एव बलं दधाति, तस्मात्पुराऽऽशुरश्वोऽजायत, पुरन्ध्रिर्योषेति योषित्येव ज्योतिरिव रूपं दधाति, तस्माद्रूपिणी ज्योतिः प्रिया भावुका, जिष्णू रथेष्ठा इति राजन्य एव जैत्रं महिमानं दधाति, तस्मात्पुरा राजन्यो जिष्णुर्जज्ञे,

सभेयो युवेति एष वै सभेयो युवा यः प्रथमवयसि तस्मात्प्रथमवयसि स्त्रीणां प्रियो युवा पुमान्भावुकः, अस्य यजमानस्य वीरो जायतामित्याह वै तत्र यजमानस्यैव प्रजायां वीर्यं दधाति, तस्मात्पुरा राजन्यस्य वीरो जज्ञे, निकामे निकामे नः पर्जन्यो वर्षतु इति निकामे निकामो वै तत्र पर्जन्यो वर्षति यत्रैतेन यज्ञेन यजन्ते, फलवत्यो न ओषधयः पच्यन्तामिति फलवत्यो वै तत्रौषधयः पच्यन्ते यत्रैतेन यज्ञेन यजन्ते, योगक्षेमो नः कल्पतामिति योगक्षेमो वै तत्र कल्प्यते यत्रैतेन यज्ञेन यजन्ते तस्माद्यत्रैतेन यज्ञेन यजन्ते क्लृप्तप्रजानां योगक्षेमो भवति य एवं वेद ॥ श्रीमहागायत्र्यैस्वाहा, सावित्र्यैस्वाहा, सरस्वत्यैस्वाहा ॥ अनेन मन्त्रहोमेन आत्मनो० श्रीमहागायत्रीदेवीसन्तोषणार्थं महागायत्री सावित्री सरस्वती सव्याहृतिः प्रीयतां प्रीताऽस्तु ॥ इति गायत्रीब्राह्मणम् ॥ २० ॥

## अथ कूष्माण्डार्षम् ॥ २१ ॥

ब्रह्मा स्वयम्भूर्लिङ्गोक्ता देवताः समिधादानं पाप्मापहं च यद्देवा देवहेळनमित्यष्टौ आद्याश्चतस्रोऽनुष्टुभः, पञ्चम्यष्टम्यौ त्रिष्टुभौ षट्सप्तम्यौ जगत्यौ ॥ यददीव्यन्निति सप्तोनाष्टौ त्रिष्टुप् महान्त्या प्रस्तारपङ्क्तिः, षष्ठी गायत्री दशम्यनुष्टुबुपान्त्याद्व्युष्णिक् ॥ आयुस्ते विश्वतो दधदिति सप्तोनाद्या द्विपद् सप्तम्यात्रिष्टुप् तृतीयाद्यातिस्रो गायत्रं पञ्चाष्टम्याद्यानुष्टुप् शक-

र्यन्तम् । सौत्रामण्यानिचाङ्कुणस्य । यद्देवा देवहेळनमिति तिसृभि-रनुष्टुप् । भद्रं कर्णेभिरिति चतसृभिः शिशुशैशवयोः । आद्यान्त्ये त्रिष्टुप् द्वितीया विराट् तृतीया जगती । शेषः कोकिलस्य राजपुत्रस्य राज्येप्सोः । पुनन्तु मा पितर इति नवभिः चतुर्थी चाद्या द्वेऽनुष्टुभौ त्रिष्टुबन्त्या वैश्वदेवी, शेषं गायत्रं तृतीया पञ्चम्याद्याश्चतस्रो गायत्रं । ब्रह्मणो यश्चानिरुक्तम् पुनर्मामैत्विन्द्रियमिति तिसृभिरनुष्टुबष्टरूपा प्रस्तारपङ्क्तिः अपां यो द्रवण इति चतस्रः प्रजापतेस्त्रिष्टुप् । हिरण्यवर्णा इति तिसृभिः । कश्यपस्य त्रिष्टुप् जगत्यस्य । अग्ने त्वं पारयेतित्रयोदश स्वयम्भूर्ब्रह्मा लिङ्गोक्ताद्यास्तिस्रः षष्ठ्यादि तिस्रस्त्रिष्टुबेकादशी च चतुर्थ्यादि द्वावनुष्टुब्नवमी जगती पङ्क्तिर्द्विशक्वर्यन्तम् ॥ अथ कूष्माण्डैर्जुहुयाद्योऽपूत इव मन्येत यथा वै भ्रूणहैव स एष भवति योऽयोनौ रेतः सिञ्चति यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मुचेयमित्यऽयोनौ रेतः सिक्त्वा स्वप्नादन्यत्र भ्रूणहत्याया ब्रह्महत्याया वा पवित्रकामः पौर्णमास्याममावस्यायां वा केशश्मश्रुलोमनखानि वापयित्वा शुद्धपक्षस्य पुण्याहे पर्वणि रोहिण्यां वा स्नातः शुचिः शुचिवासाः कृष्णाजिनवासा वा ब्रह्मचारिकल्पेन व्रतमुपैति, संवत्सरं मासं चतुर्विंशति द्वादश षट् तिस्रो वा रात्रीः, न मांसमश्नीयात्, न स्त्रियमुपेयात्, नोपरि शयीत जुगुप्सेतानृतात्, पयो भक्षयति इति प्रधानकल्पः । यावकमुपभुञ्जीत कृच्छ्रं द्वादशरात्रं

वाऽचरेत्, यवागूं राजन्यस्याऽमिक्षां वैश्यस्य सौम्येऽप्यध्वर इत्येतद्व्रतं ब्रूयात् यदि मन्येतोपदास्यामीत्येवमोदनं धाना सक्तून् घृतमित्यनुव्रतयेदात्मनोऽनुपदासायेति पूर्वाह्णेऽग्निमुपसमाधाय चरुं श्रपयित्वाऽग्नेयाद्याः षट् देवताः कलशेऽभ्यर्च्य निर्वपेत्। आज्यभागान्तं हुत्वाऽथ स्रुवेणाज्यस्य जुहोति । यद्देवा देवहेळनं, यददीव्यन्नृणमहं, आयुस्ते विश्वतो दधदित्येतैः सूक्तैः प्रत्यृचमाज्यं जुहुयात् । यद्देवा देवहेळनमिति तिसृभिः । भद्रं कर्णेभिरिति च चतसृभिः । पुनन्तु मा पितर इति नवभिः, पुनर्मामैत्विन्द्रियमिति तिसृभिः । रथे अक्षेष्विति चतसृभिः । हिरण्यवर्णा इति तिसृभिः, प्रतिमन्त्रमाज्यस्य हुत्वा अथ व्रतहोमान् जुहोति । अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये कूष्मर्षिभ्य इति व्रतहोमः । अग्ने त्वं पारयेति स्विष्टकृतम् । वैश्वानर्येणेति सूक्तेन प्राङ्मुखः प्राञ्जलिरुपतिष्ठते, जपेत्सूक्तानि पराञ्चि यानि वैश्वानरीयं च । एवमोदनमासाद्याग्न्याधेये दशहोता दर्शपौर्णमासयोश्चतुर्होता चातुर्मास्येषु पञ्चहोता पशुयज्ञे षड्होता सोमे सप्तहोतेति ह विज्ञायते कर्मादिष्वेतैर्जुहुयात्पूतो देवलोकं समश्नुत इत्येतदित्येतत् ॥ इति कूष्माण्डार्षम् ॥ ॥ अथ कूष्माण्डमन्त्राः ॥ ॥ अस्य श्रीकूष्माण्डमन्त्रस्य, ब्रह्मा ऋषिः, गायत्रंच्छन्दः श्रीकूष्माण्डो देवता, आत्मनो० अहोरात्रकृतदशविधपापनिष्कृत्यर्थं पाठे होमे वा विनियोगः ॥ ध्यानम् ॥ कूष्मा नाम मुनीश्वरास्त्रि-

भुवने ख्याताः सुरूपाः शुभा अण्डानाममृतेश्वरा विचरतां मध्ये सुहंसात्मकाः । तेऽपि यत्पठनात्परात्परतरां श्रेष्ठां गतिमास्थिताः सोयं नो विदधातु सौख्यनिचयं पापारिनाशं सदा ।१। यत्पाठात्प्रलयं प्रयान्ति शतशः पापारिसंघाः क्षणाद्धोमात्तर्पणसञ्चयात्सुमहतामभ्यासनात्सद्वरात्। सोयं ब्रह्ममुखोद्भतः परतरो मन्त्रादिगर्भो महान् कूष्माण्डो विदधातु सौख्यनिचयमग्नेः पुरःसंस्थितिम् ॥ २ ॥ कूष्माण्डानि कूष्माणां शकुनीनामण्डस्थानाम् ॥ यद्देवा देवहेळनं यद्वाचानृतमूदिम । आदित्यास्तस्मान्मुञ्चतर्तस्यर्तेन मामुत ॥ १ ॥ देवा जीवनकाम्या यद्वाचानृतमूदिम । तस्मान्न इह मुञ्चत विश्वेदेवाः सजोषसः ॥ २ ॥ ऋतेन द्यावापृथिवी ऋतेन त्वं सरस्वति । कृतान्नः पाह्येनसो यत्किञ्चानृतमूदिम ॥ ३ ॥ इन्द्राग्नी मित्रावरुणौ सोमो धाता बृहस्पतिः । ते नो मुञ्चन्त्वेनसो यत्किञ्चानृतमूदिम ॥ ४ ॥ सजातशंसादुत जामिशंसाज्ज्यायसः शंसादुत वा कनीयसः । अनाधृष्टं देवकृतं यदेनस्तस्मात्त्वमस्माञ्जातवेदो मुमुग्धि ॥ ५ ॥ यदन्तरिक्षं पृथिवीमुत द्यां यत्पितरं मातरं वा जिहिंसिम । अग्निर्नस्तस्मादेनसो गार्हपत्यः प्रमुञ्चतु चकृम यानि दुष्कृता ॥ ६ ॥ येन त्रितो अर्णवान्निर्बभूव येन सूर्यस्तमसो निर्मुमोच । येनेन्द्रो विश्वा अजहादरातीस्तेनाहं ज्योतिषा ज्योतिरानशान आक्षि ॥ ७ ॥ यत्कुसीदमप्रतीतं मयीह येन यमस्य मिथुना चरामि । एतत्तदग्ने अनृणो भवामि

जीवन्नेव प्रति तत्ते दधामि ॥ ८ ॥ यददीव्यन्नृणमहं बभूवा
दित्सन्वासजगरञ्जनेभ्यः । अग्निर्मा तस्मादिन्द्रश्च संविदानौ
प्रमुञ्चताम् ॥ ९ ॥ यद्धस्ताभ्यां चकर किल्बिषाण्यक्षाणां वग्नु-
मुपजिघ्नमानः । उग्रंपश्या च राष्ट्रभृच्च तान्यप्सरस अनुदत्ता-
मृणानि ॥ १० ॥ उग्रंपश्ये राष्ट्रभृत्किल्बिषाणि यदक्षवृत्तमनु-
दत्तमेतत् । नेन्न ऋणादृणवा इच्छमानो यमस्य लोके अधि-
रज्जुरायत् ॥ ११ ॥ अव ते हेळो वरुण नमोभिरव यज्ञेभिरी-
महे हविर्भिः । क्षयन्नस्मभ्यमसुर प्रचेतो राजन्नेनांसि शिश्रथः
कृतानि ॥ १२ ॥ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमं
श्रथाय । अथा वयमादित्यव्रते तवानागसो अदितये स्याम १३
इमं मे वरुण श्रुधी हवमद्या च मृळय । त्वामवस्युराचके
॥ १४ ॥ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो
हविर्भिः । अहेळमानो वरुणेह बोध्युरुशंसमान आयुः प्रमोषीः
॥ १५ ॥ त्वं नो अग्ने वरुणस्य विद्वान्देवस्य हेळोऽवयासि-
सीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमु-
ग्ध्यस्मत् ॥ १६ ॥ स त्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या
उषसो व्युष्टौ । अव यक्ष्व नो वरुणं रराणो वीहि मृळीकं सुहवो
न एधि ॥१७॥ सङ्कसुको विकसुको निर्ऋथो यश्च निःस्वरः ।
तेऽस्मद्यक्ष्ममनागसो दूराद्दूरमचीचतन् ॥ १८ ॥ निर्यक्ष्मम-
चीचतन् कृत्यां निर्ऋतिं च । तेनान्योऽस्मत्समृच्छतां तमस्मै

प्रसुवामसि ॥ १९ ॥ दुःशंसानुशंसाभ्यां घनेनानुघनेन च। तेन योऽन्योऽस्मत्समृच्छतां तमस्मै प्रसुवामसि ॥ २० ॥ संवर्चसा पयसा सन्तनूभिरगन्महि मनसा संशिवेन । त्वष्टा सुदत्रो विदधातु रायो नोऽनु मार्ष्टु तन्वो यद्विलिष्टम् ॥२१॥ आयुस्ते विश्वतो दधदयमग्निर्वरेण्यः । पुनस्ते प्राण आयातु परायक्ष्मं सुवामि ते ॥ २२ ॥ इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण संशिशाधि । मातेवास्मा अदिते शर्म यच्छ विश्वेदेवा जरदष्टिर्यथासत् ॥ २३ ॥ अग्न आयूंषि पवस आसुवोर्जमिषं च नः। आरे बाधस्व दुच्छुनाम् ॥२४॥ अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् ॥ २५ ॥ अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधद्रयिं मयि पोषम् ॥ २६ ॥ अग्ने जातान्प्रणुदानः सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व। अधि नो ब्रूहि सुमना अहेळञ्शर्म ते स्याम त्रिवरूथ उद्भौ ॥ २७ ॥ सहसा जातान्प्रणुदानः सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व। अधि नो ब्रूहि सुमनस्यमानो वयं स्याम प्रणुदानः सपत्नान् ॥ २८ ॥ अग्ने यो नोऽभितो वृको जनो वारो जिघांसति । तं त्वं वृत्रहञ्जहि वस्वस्मभ्यमाकृधि ॥ २९ ॥ अग्ने यो नोऽभिदासति समानो यश्च नेष्ट्यः। तं वयं समिधं कृत्वा तुभ्यमग्नेऽपिदध्मसि ॥ ३० ॥ यो नः शपादशपतो यश्च नः शपतः शपात् । इध्मस्येव प्रक्ष्यायतस्तस्य मुच्छेषि किञ्चन ॥ ३१ ॥

संशितं मे ब्रह्म संशितं वीर्यं बलम् । संशितं क्षत्रं मे जिष्णु यस्याहमस्मि पुरोहितः ॥३२॥ उदेषां बाहू अतिरमुद्वर्चो अथो बलम् । क्षणोमि ब्रह्मणा मित्रानुन्नयामि स्वाँनहम् ॥ ३३ ॥ पुनर्मनः पुनरायुर्म आगात्पुनश्चित्तं पुनराधीतं म आगात् । पुनश्चक्षुः पुनः श्रोत्रं म आगात् । वैश्वानरो अदब्धस्तनूपा अवबाधतां दुरितानि विश्वा ॥ ३४ ॥ सौत्रामण्या निचाङ्कुणस्य ॥ यद्देवा देवहेळनं देवासश्चकृमा वयम् । अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥ ३५ ॥ यदि दिवा यदि नक्तमेनांसि चकृमा वयम् । वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥ ३६ ॥ यदि जाग्रद्यदि स्वप्नमेनांसि चकृमा वयम् । सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥ ३७ ॥ (प्रायश्चित्तानि सर्वान्तीयानि शिशुशैशवयोः ॥) भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥३८॥ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥३९॥ पृषदश्वा मारुतः पृश्निमातरः शुभं युवानो विदथेषु जग्मयः । अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसाऽगमन्निह ॥४०॥ शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥ ४१ ॥ शेषः कोकिलस्य राजपुत्रस्य राज्येप्सोः ॥ पुनन्तु

मा पितरः सोम्यासः पुनन्तु मा पितामहाः । पुनन्तु प्रपिता-
महाः पवित्रेण शतायुषा ॥४२॥ पुनन्तु मा पितामहाः पुनन्तु
प्रपितामहाः । पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ॥४३॥ अग्न
आयूंषि पवस आसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम्
॥४४॥ पुनन्तु मां देवजनाः पुनन्तु मनसा धियः । पुनन्तु
विश्वाभूतानि जातवेदः पुनीहि मा ॥ ४५ ॥ पवित्रेण पुनीहि
मा शुक्रेण देव दीद्यत् । अग्ने क्रत्वा क्रतूँरनु ॥ ४६ ॥ यत्ते
पवित्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनातु मा ॥ ४७ ॥
पवमानः सो अद्य नः पवित्रेण विचर्षणिः । यः पूतः स पुनातु
मा ॥ ४८ ॥ उभाभ्यां देव सवितः पवित्रेण सवेन च । मां
पुनीहि विश्वतः ॥४९॥ वैश्वदेवी पुनती देव्यागाद्यस्यामिमा-
स्तन्वो वीतपृष्ठाः । तया मदन्तः सधमादेषु वयं स्याम पतयो
रयीणाम् ॥ ५० ॥ "ब्राह्मणो यच्चानिरुक्तम्" पुनर्मा मैत्वि-
न्द्रियं पुनरायुः पुनर्भगः । पुनर्ब्रह्मणमैतु मा पुनर्द्रविणमैतु
माम् ॥ ५१ ॥ यन्मेऽद्य रेतः पृथिवीमस्कन्यदोषधीरप्यसर-
द्यदपः । तदहं पुनराददे ॥ ५२ ॥ यन्मे रेतः प्रसिच्यते यन्म
आजायते पुनः । यद्वा मे प्रतितिष्ठति तेन माममृतं कुरु
तेन सुप्रजसं कुरु ॥ ५३ ॥ "अपां यो द्रविण इति प्रजापतेः"
रथे अक्षेषु वृषभस्य वाजे वाते पर्जन्ये वरुणस्य शुष्मे । इन्द्रं
या देवी सुभगा जजान सेयमगाद्वर्चसा संविधाना ॥ ५४ ॥

या हस्तिनि द्वीपिनि या हिरण्ये गोष्वऽश्वेषु पुरुषेष्वन्तः । इन्द्रं या० ॥ ५५ ॥ सिंहे व्याघ्र उत या पृदाकौ त्विषिरग्नौ ब्राह्मणे सूर्ये या । इन्द्रं या देवी० ॥ ५६ ॥ या राजन्ये दुन्दुभावायतायामश्वस्य क्रन्दे पुरुषस्य मायौ । इन्द्रं या० ॥ ५७ ॥ "हिरण्यवर्णा इति कश्यपस्य" हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः । या अग्निं गर्भं दधिरे विरूपास्ता न आपः शं स्योना भवन्तु ॥ ५८ ॥ यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति । या अग्निं० ॥ ५९ ॥ यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् । या अग्निं० ॥ ६० ॥ "कूष्माण्डब्राह्मणंच हुत्वा" (तेजोसि) ॐ अग्नयेनमः, वायवेनमः, सूर्यायनमः, ब्रह्मणेनमः, प्रजापतयेनमः, कूष्मर्षिभ्योनमः, "इति व्रतहोमः" "अग्ने त्वं पारयेति स्विष्टकृतम्" ॥ अग्ने त्वं पारयानव्यो अस्मान्स्वस्तिभिरतिदुर्गाणि विश्वा । पूश्च पृथ्वी बहुलान उर्वी भवा तोकाय तनयाय शंय्योः ॥ ६१ ॥ "वैश्वानरेण सूक्तेन प्राङ्मुखः प्राञ्जलिरुपतिष्ठते, जपेत्सूक्तानि पराञ्चि यानि वैश्वानरीयं च" वैश्वानराय प्रति वेदयामो यदी मृळं सङ्गर देवतासु । स एतान्पाशान्प्रमुञ्च प्रवेद स नो मुञ्चतु दुरितादवद्यात् ॥ ६२ ॥ वैश्वानरः पावयानः पवित्रैर्यत्सङ्गरमभिधावाम्याशाम् । अनाजानन्मनसा याचमानो यदत्रैनो अपतत्सुवामि ॥ ६३ ॥ अमू

ये सुभगे दिवि विचृतौ नाम तारके। प्रेहामृतस्य यच्छतमेत-द्वद्धकमोचनम् ॥ ६४ ॥ विजिहीष्व लोकान्कृधि बन्धान्मुञ्चसि बद्धकम्। योनेरिव प्रच्युतो गर्भः सर्वान्पथो अनुष्यात् ॥ ६५ ॥ सुप्रजानन्प्रतिगृह्णाति विद्वान्प्रजापतिः प्रथमजा ऋतस्य। अस्माभिर्दत्तं जरसः परस्तादच्छिन्नं तन्तुमनु सन्तरेम ॥ ६६ ॥ उत तन्तुमन्वेके सन्तरन्ति येषां दत्तं पित्र्यमायतन-वत् ॥ अबन्ध्वेके ददतः प्रयच्छन्दातुं चेच्छक्नुवान्स स्वर्ग एषाम् ॥ ६७ ॥ आरभेथामऽनु संरभेथां समानं पन्थामवतो घृतेन। यद्वां पूर्तं परिविष्टं यदग्नौ तस्य गुप्त्या इह जायापती संरभेथाम् ॥६८॥ यदन्तरिक्षं पृथिवीमुत द्यां यत्पितरं मातरं वा जिहिंसिम। अग्निर्नस्तस्मादेनसो औपासन उन्नैनेषद्दुरिता यानि चकृम ॥ ६९ ॥ भूमिर्माताऽदितिर्नो जनित्रं भ्रातान्त-रिक्षमभिशस्त्या नः। द्यौर्नः पिता पित्र्याच्छं भवाति जामि-मृत्वा मावपत्सि लोकान् ॥७०॥ यत्रासुहार्दः सुकृतो मदन्ति विहाय रोगं तन्वं स्वाम्। अश्रोणा अङ्गैरहुताः स्वर्गेलोके तत्र पश्येम पितरं च पुत्रम् ॥ ७१ ॥ यदन्नमद्म्यऽनृतेन देवा दास्यन्नदास्यन्नुत वा करिष्यन्। यद्देवानां चक्षुष्या गो अस्ति यदेव किञ्च प्रतिजग्राहाहमग्निर्मा तस्मादऽनृणं करोतु ॥७२॥ यदन्नमद्मि बहुधा विरूपं वासो हिरण्यमुत गामजामविम्। यद्देवानां चक्षुष्या गो अस्ति यदेव किञ्च प्रतिजग्राहाहमग्निर्मा

तस्मादऽनृणं करोतु ॥ ७३ ॥ महापापापनुत्यर्थं कूष्माण्डानि जपेद्द्विजः । कृतव्रतः पौर्णमास्यां दर्शे वा प्रातरेवच ॥ १ ॥ पयो यवागूरामिक्षा द्विजादीनां व्रतं क्रमात् । नवां स्थालीं समाहृत्य तस्यां पायसमाश्रपेत् ॥ २ ॥ देवतास्तेन यष्टव्या ऋचो होम्या जपेत च । कूष्माण्डानि जपेन्नित्यं जुहुयाद्दर्शपूर्णयोः ॥ ३ ॥ पापी पापाद्विनिर्मुक्तः शुद्धात्मा स्वर्गमाप्नुयात् । प्रायश्चित्तानि हुत्वाथ द्विजाञ्छक्त्या प्रपूजयेत् ॥ ४ ॥ अनेन कूष्माण्डमन्त्रहोमेन "वा" पाठेन आत्मनो० अग्निः प्रीयतामग्निः प्रीतोऽस्तु, वायुः प्रीयतां वायुः प्रीतोऽस्तु, सूर्यः प्रीयतां सूर्यः प्रीतोऽस्तु , ब्रह्मा०, प्रजापतिः०, कूष्मर्षयः प्रीयन्तां प्रीताः सन्तु, पापान्मुक्तिः पुण्यवृद्धिरस्तु ॥ इति कूष्माण्डमन्त्राः ॥ २१ ॥

## अथ कूष्माण्डब्राह्मणम् ॥ २२ ॥

"ब्राह्मणः प्रजापतेर्यजुः" ॥ वातरशना ह वा ऋषयः श्रमिण ऊर्ध्वमन्थिनो बभूवुस्तानृषयोऽर्थमायन् ते निलायमाचरंस्तान्प्रददृशुः, कूष्माण्डानि तांस्तेऽन्वपश्यञ्छ्रद्धया च तपसा च तानृषयोऽपृच्छन् कथानिलायं चरथेति, त ऋषीनऽब्रुवन्नमो वोस्तु भगवन्तोऽस्मिन्धाम्नि केन वः सपर्यामेति तानृषयोऽब्रुवन् पवित्रं नो ब्रूत, येनाऽरेपसो भविष्याम इति । त एतानि सूक्तान्यपश्यन् "यद्देवा देवहेळनं । यददीव्यन्नृणमहं । आयुस्ते विश्वतो दधत्" इत्येतैराज्यं जुहुत, तेनाऽरेपसो भविष्यथेति, त एतैराज्यमजुहुवुस्ते वाऽरेपसोऽभवन्कर्मादिष्वेतै-

र्जुहुयात्पूतो देवलोकान्समश्नुते १ कूष्मा ह वै नाम ऋषयो वातरशनास्ते हंसा हिरण्मया ज्योतिष्पक्षा अजिराभूत्वाऽचरँ-स्तेऽकामयन्ताऽण्डेषु नः प्रजा ब्रह्म वदेयुरिति तेषामण्डेष्वेव प्रजा ब्रह्माऽवादिषुस्त अण्डस्था अवदंस्तस्मात्कूष्माण्डानि कूष्मा-ण्डैर्जुहुयात् योऽपूत इव मन्येत यदर्वाचीनमेनो भ्रूणहत्याया-स्तस्मान्मुच्येयमित्ययोनौ वा रेतः सिक्त्वा जुहुयात् यथा वै स्तेनो यथा भ्रूणहैवमेष भवति योऽयोनौ रेतः सिञ्चति, यदे-तैराज्यं जुहोति, तैरेवाऽत्मानं पुनीते दीक्षामुपैति दीक्षित एतैः सदधि जुहोति संवत्सरं दीक्षितो भवति संवत्सरादेवा-त्मानं पुनीते, मासंदीक्षितो भवति, यो वै मासः स संवत्सरः संवत्सरादेवात्मानं पुनीते, द्वादशरात्रीर्दीक्षितो भवति द्वादशमासाः संवत्सरः संवत्सरादेवात्मानं पुनीते, षड्रात्रीर्दी-क्षितो भवति षड्वाऋतवः संवत्सरः संवत्सरादेवात्मानं पुनीते। तस्य व्रतं "न मांसमश्नीयात्, न स्त्रियमुपेयात्, नोपर्यासीत, जुगुप्सेतानृतात्" पयो ब्राह्मणस्य व्रतं, यवागू राजन्यस्य, आमिक्षा वैश्यस्य सौम्येप्यध्वरे इत्येतद्व्रतं ब्रूयात् यदि मन्येतोपदास्यामीत्यो-दनं धानाः सक्तून् घृतमित्यनुव्रतयेदात्मनोऽनुपसादायेति॥ इति कूष्माण्डब्राह्मणम् ॥ २२ ॥

## अथ पावमान्यब्राह्मणम् ॥ २३ ॥

"वैश्वानरेणेति पावमान्यब्राह्मणेन चोपस्थानम्" ॥ "ॐ स

सोमासि द्वात्रिंशद्भारद्वाजः कश्यपो गोतमोऽत्रिर्विश्वामित्रो जमदग्निर्वसिष्ठ इतीह त्र्यृचाः सप्तर्षयः शेषे पवित्रो वसिष्ठो भौवितारस्तिस्रः पापाण्यो यत्ते पवित्रमाग्नेयी सावित्र्यग्निः सावित्री वैश्वदेवी पवस्व सोमेति षोडशाक्षरास्तिस्रो द्विपदास्त्रिंशी पुराउष्णिक् सप्तविंशत्यऽनुष्टुबन्ते च पावमान्यधेतृस्तुती जगती उपस्थाने विनियोगः" ॥ ॐ त्वं सोमासि धारयुर्मन्द्र ओजिष्ठो अध्वरे। पवो समं हयद्रविः ॥ त्वं सदो नृपादने दधन्वात्सत्सरित्तमः। इन्द्राय सूरिरन्धसा ॥ त्वं सुष्वाणो अद्रिभिरभ्योऽकर्षत्कनिक्रदत्। द्युमन्तं शुष्मभुत्तमम् ॥ इन्दुं हिन्वनि आर्षति तिरो वाराण्यव्यया। हरिर्वाजमचिक्रदत् ॥ इन्दो व्यवमर्षसि विश्रवांसि विसौभगः। विवाजान्सोमगोमतः ॥ १ ॥ आन इन्दो शतग्विनं रयिङ्गोमन्तमश्विनम्। भिरासोमसहस्रिणम् ॥ पावमानः स इन्दवः स्थिरः पवित्रमाशवः। इन्द्रं यामेभिराशत ॥ ककुहः सोम्यो रस इन्दुरिन्द्राय पूर्व्यः। आयुः पवत आयवे ॥ हिन्वन्ति सूर सुस्रयः पवमानः मधुश्च्युतम्। अभिगिरा समस्वरन् ॥ अविता नो अजाश्वः पूषा यामनि वासनि। आभक्षत्कन्यासु नः ॥ २ ॥ अयं सोमः कपर्दिनो घृतन्नः पवते शुचि। आ भक्षत्कन्यासु नः ॥ वाचो जन्तुः कवीनां पवस्व सोम धारया। देवेषु रत्नधा असि ॥ आकलयेषु धावति श्येनो वर्म विगाहते। अभिद्द्रोणा कनिक्रदत् ॥ परि प्रसोमतेर-

सौरसलिकलशोऽसुतः। श्येनो न उक्तो आर्षति ॥ ३ ॥ पवस्व सोम मन्दयन्निन्द्राय मधुमत्तमः । असृग्रन्देववीतये वाजयन्तो रथा इव । ते सुतासो मदिन्तमाः शुक्रावायुमसृक्षत ॥ ग्राव्णा तन्नो अभिष्टुतः पवित्रं सोम गच्छसि। दधत्स्तोत्रे सुवीर्यम् ॥ एष तन्नो अभिष्टुतः पवित्रमतिगाहते । रक्षोहावारमव्ययम् ॥ ४ ॥ यदन्ते यच्च दूरके भयं विन्दति मामिह। पावमानं वित्तञ्जहि ॥ पावमानः सो अद्यनः पवित्रेण विचर्षणिः । यः पूतः स पुनातु मा ॥ यत्ते पवित्रमर्चिष्यग्ने विततमन्तरः । ब्रह्मंस्तेन पुनीहि नः ॥ यत्ते पवित्रमग्निवदग्ने तेन पुनीहि नः । ब्रह्म स वै पुनीहि मा ॥ उभाभ्यां देव सवितः पवित्रेण सवेन च । मां पुनीहि विश्वतः ॥ ५ ॥ "इत्युपस्थाने पावमान्यब्राह्मणं समाप्तम् ॥ २३ ॥

## अथ तर्पणे पावमानीब्राह्मणम् ॥ २४ ॥

अस्य पावमानीसूक्तस्य "गायत्रीच्छन्दः सप्तर्षयो देवता आत्मनो० तर्पणे विनियोगः" ॐ त्रिभिष्ट्वन्देव सवितर्वर्षिष्ठैः सोमधामभिः । अग्ने दक्षैः पुनीहि मा ॥ अनुष्टुप्छन्दः । पुनन्तु मा देवजनाः पुनन्तु वसवो धिया । विश्वेदेवाः पुनीत मा जातवेदः पुनीहि मा । "द्वे गायत्रीच्छन्दः" । आप्ययस्व प्रस्यन्दस्व सोम विश्वेभिरंशुभिः । देवेभ्य उत्तमं हविः ॥ उपप्रियं परिपूतं च्युवानमाहुतीवृधम् । अगर्भ विद्रुतो नमः॥ "उष्णिक्छन्दः" । अला-

ध्यस्य परशुना शतमा पर्वसु देवसोम । आखुश्चिदेव सोम ॥ "द्वेअनुष्टुप्छन्दः" । यः पावमानीरध्येत्यृषिभिः सम्भृतं रसम् । सर्वं स पूतमश्नाति स्वदितं मातरिश्वना ॥ पावमानीर्यो अध्येत्यृषिभिः सम्भृतं रसम् । तस्मै सरस्वती दुहे क्षीरं सर्पिर्मधूदकम् ॥ पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्चुतः । ऋषिभिः सम्भृतो रसो ब्राह्मणेष्वमृतं हितम् ॥ पावमानीर्दिशन्तु न इमं लोकमथो अमुम् । कामान्समवयन्तु नो देवैर्देवीः समाहृताः ॥ येन देवाः पवित्रेणाऽऽत्मानं पुनते सदा । तेन सहस्रधारेण पावमान्यः पुनातु मा ॥ प्राजापत्यं पवित्रं शतद्योतं हिरण्ययम् । तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमहे ॥ इन्द्रः सुनीत्या सहसा पुनातु सोमः स्वस्त्या वरुणः समीच्या ॥ यमो राजा प्रमृणाभिः पुनातु जातवेदाः ऊर्जयन्त्या पुनातु मा ॥ ऋषयस्तु तदपस्तापे सर्वे सर्वजिगीषवः । तपसस्तपसोऽध्यायन्तु पावमानी ऋचोऽब्रवीत् ॥ यन्मे गर्भे वसतः पापमुग्रं यज्जायमानस्य च किञ्चिदन्यत् । जातस्य च यच्चापि च वर्धतो मे तत्पावमानीभिरहं पुनामि ॥ माता पित्रोर्यन्न कृतं वचो मे यत्स्थावरं जङ्गममावभूव । विश्वस्य यत्प्रहरिषितं वचो मे तत्पावमानीभिरहं पुनामि ॥ गोघ्नात्तुष्कराद्वा स्त्रीवधाद्यत्किल्विषम् । पापकं च चरणेभ्यस्तत्पावमानीभिरहं पुनामि ॥ ब्रह्मवधात्सुरापानात्सुवर्णस्तेयाद्वृषलिगमनमैथुनसङ्गमात् । गुरोर्दारा-

भिगमनाच्च तत्पावमानीभिरहं पुनामि । बालघ्नान्मातृपित्रो-
र्वधाद्भूमितस्करात्सर्ववर्णगमनमैथुनसङ्गमात् । पापेभ्यश्च प्रतिग्र-
हात् सद्यः प्रहरन्ति सर्वदुष्कृतं तत्पावमानीभिरहं पुनामि ॥
क्रियविक्रयाद्योनिदोषाद्भक्ष्याद्भोज्यात्परिग्रहात् । असम्भो-
जनाच्चापि नृशंसं तत्पावमानीभिरहं पुनामि ॥ दुरिष्टं दुरधीतं
पापं यच्चाज्ञानतः कृतम् । अयाचिताच्चासंयाज्यात्तत्पावमानी-
भिरहं पुनामि ॥ ऋतस्य योनयोऽमृतस्य धाम विश्वादेवेभ्यः
पुण्यगन्धाः । तान आपः प्रहरन्ति पापम् । शुद्धो गच्छामि
सुकृतां लोके तत्पावमानीभिरहं पुनामि ॥ पावमानीः स्वस्त्यय-
नीर्याभिर्गच्छति नन्दनम् । पुण्यांश्च भक्ष्यान्भक्षयत्यमृतत्वं
च गच्छति ॥ पावमान्यं परंब्रह्म शुक्रं ज्योतिः सनातनम् ।
पितृंस्तस्योपतिष्ठन्ति क्षीरं सर्पिर्मधूदकम् ॥ पावमानीः पितृ-
न्देवान्ध्यायेद्यच्च सरस्वतीम् । पितृंस्तस्योपतिष्ठेत क्षीरं सर्पि-
र्मधूधकम् ॥ अनेन० अक्षय्यतृप्तिरस्तुपावमानीमन्त्राः प्रीताः सन्तु ॥
इति तर्पणे पावमानीब्राह्मणम् ॥ २४ ॥

## अथाग्निकुण्डपूजा ॥ २५ ॥

अथाग्निकर्म । पात्रं तिला० । निर्दग्धं रक्षो० । अग्निं परि-
समूह्य पर्युक्ष्य परिषिच्य ९ आदौ पञ्च० । १६ ( वेदिमुपस्पृश्य
यजमानः ) । आगच्छ वरदे ज्ञानमुद्रे यज्ञैर्विभूषिते । वेदि वेद-
मयैर्मन्त्रैः संस्कृते ते नमो नमः ॥ त्वामाश्रित्य स्थिता देव

घृताहुतिं पिबन्ति ये । ते देवास्तुष्टिमायान्तु मा विघ्नं यज्ञकर्मणि ॥ पयः पृथिव्यां पय ओषधीषु० । देवस्य त्वा सवितुः० ॥ ( अथाञ्जलिः ) ॥ संमुखा तिष्ठ वेदि त्वं यथा स्थास्यन्ति देवताः । स्थानभूता शिवादीनां शक्तीनां सुरपूजिते । ब्रह्माऽज्ञयाद्य मे यज्ञं सफलीकर्तुमर्हसि ॥ ( गणपतयेऽक्षोटं ज्वालालिङ्गे श्रीफलकन्दौ च संस्थाप्य) ॥ संवः सृजामि । अश्विनोः प्राण ॥ ॐ गायत्र्यै नमः ३ । तत्पुरुषाय विद्महे वक्रतुण्डाय० । तन्नोदन्ती ३ वैश्वानराय विद्महे सप्तार्चिषे धी० तन्नोऽग्निः प्र ३ ॥ पावकाय विद्महे हेलालीलाय धीः तन्नोग्नि० ३ । तत्पु० महादेवा० ३ । अद्य तावत्ति० महागणपतेः० द्वार्देवतानां, विनायकस्य ८ आदित्यमणेः अनुमतिमणेः सरस्वतिमणेः (पूर्वे) देवमुखस्य (आग्नेये) सप्तजिह्वस्य (दक्षिणे) वैश्वानरस्य (नैर्ऋते) जातवेदसः (पश्चिमे) अग्नेः (वायवे) हुताशनस्य (उत्तरे) हुतवहस्य (ईशाने) कृष्णवर्त्मनः (मध्ये) अग्नेः सहस्राक्षस्य शतं ते प्राणः शतं ते व्यानः शतं ते तेजः सहस्रमुखस्य(ऊर्ध्वे)ब्रह्मविष्णुमहेश्वरदेवतानां काल्याः कराल्याः मनोजवायाः सलोहितायाः धूम्रायाः विस्फुलिंगिन्याः सुमनसायाः विश्वचर्यायाः ब्रह्माण्डव्यापिन्याः ज्वालालिङ्गतेजसः धूम्रवर्णायाः नीलवर्णायाः कपिलायाः ज्वालायाः तेजोवत्याः हव्यवाहायाः कव्यवाहायाः रौद्र्याः संहारिण्याः तापिन्याः पाचिन्याः । भवस्य देवस्य ८ षड्त्रिं-

शत्तत्त्वानां सप्तजिह्वासहितस्य पावकस्य ब्रह्माण्डव्यापकते-जोमयपरमशिवज्वालालिङ्गदेवतानां ( स्रुवमूले ) सोमस्य शुक्रस्य अग्नेः (मध्ये) महेश्वरस्य [मूर्ध्नि] ब्रह्मणः । [स्रुचमूले] अपां [मध्ये] भास्करस्य [रन्ध्रयोः] गौर्याः दुर्गायाः कात्यायन्याः मह्याः स्रुक्स्रुवदेवतानां आत्मनो० अमुककर्म निमित्तं द्वारदेवतापूजनं अग्नि-कुण्डपू० ज्वालालिङ्गपू० स्रुक्स्रुवपूजनमर्चामहं करिष्ये ॐ कुरुष्व ॥ एवमेवासनं ॥ महागणपतये० विनायकाय० आदित्यमणये अनुमतिमणये सरस्वतिमणये(पूर्वे)देवमुखाय (आग्नेये)सप्तजिह्वाय (दक्षिणे)वैश्वानराय(नैर्ऋते)जातवेदसे(पश्चिमे)अग्नये(वायव्ये) हुता-शनाय(उत्तरे)हुतवाहाय(ईशाने)कृष्णवर्त्मने(मध्ये)अग्नये सहस्रा-क्षाय शतं ते प्राणः शतं ते व्यानः शतं ते तेजः सहस्रमुखाय (ऊर्ध्वे) ब्रह्मविष्णुमहेश्वरदेवताभ्यः, काल्यै कराल्यै मनोजवायै सुलोहितायै धूम्रायै विस्फुलिङ्गिन्यै सुमनसायै विश्वचर्यै ब्रह्माण्ड-व्यापिन्यै ज्वालालिङ्गतेजसे धूम्रवर्णायै नीलवर्णायै कपिलायै ज्वालायै तेजोवत्यै हव्यवाहायै कव्यवाहायै रौद्र्यै संहारिण्यै तापिन्यै पाचिन्यै । भवाय देवाय ८ षड्त्रिंशत्तत्त्वेभ्यः सप्तजिह्वा-सहिताय पावकाय ब्रह्माण्डव्यापकतेजोमयपरमशिवज्वाला-लिङ्गदेवताभ्यः । सोमाय शुक्राय अग्नये महेश्वराय ब्रह्मणे । अद्भ्यः भास्कराय गौर्यै दुर्गायै कात्यायन्यै मह्यै स्रुक्स्रुवदेव-ताभ्यः युष्मान्वः पूजयामि ॐ पूजय । महागणपतिं० विना-

थकं ८ आदित्यमणिं अनुमतिमणिं सरस्वतिमणिं (पूर्वे) देवमुखं (आग्नेये)सप्तजिह्वं(दक्षिणे)वैश्वानरं(नैर्ऋते) जातवेदसं(पश्चिमे)अग्निं (वायव्ये)हुताशनं(उत्तरे)हुतवाहं(ईशाने)कृष्णवर्त्मानं (मध्ये) अग्निं सहस्राक्षं शतं ते प्राणः शतं ते व्यानः शतं ते तेजः सहस्र-मुखं (ऊर्ध्वे) ब्रह्मविष्णुमहेश्वरदेवताः कालीं करालीं मनोजवां सुलोहितां धूम्रां विस्फुलिङ्गिनीं सुमनसां विश्वचर्यां ब्रह्माण्ड-व्यापिनीं ज्वालालिङ्गतेजसं धूम्रवर्णां नीलवर्णां कपिलां ज्वालां तेजोवतीं हव्यवाहां कव्यवाहां रौद्रीं संहारिणीं तापिनीं पाचिनीं भवंदेवं ८ षड्त्रिंशत्तत्त्वानि सप्तजिह्वासहितं पावकं ब्रह्माण्ड-व्यापकतेजोमयपरमशिवज्वालालिङ्गदेवताः सोमं शुक्रं अग्निं म-हेश्वरं ब्रह्माणं । अपः भास्करं गौरीं दुर्गां कात्यायनीं महीं स्रुक्स्रुव-देवताः आवाहयिष्यामि ॐमावाहय॥(द्वार्देवेभ्यः)आवाहयाम्यहं देवं गणेशं सुरपूजितम् । सदैव विघ्नहर्तारं सर्वकामफलप्रदम् ॥ रक्त-वर्णोमहातेजा रक्तस्रग्दामभूषितः । बलिः पुष्पं चरुश्चैव धूपोयं परिकल्पितः ॥ इत्यादि (अग्नये) अग्निं स्वाहासमेतं दितिजसुरनुतं रक्तवर्णं त्रिनेत्रं कण्ठे हारं भुजाभ्यां वरमभयमथो दक्षिणाभ्यां वहन्तम् । वामाभ्यामक्षमालाममृतकलशकं रम्यहासं सुवेषं नाना-लङ्कारयुक्तं मृगवरसहितं त्वाह्वये होमकाले ॥ ज्वालामण्डितमा-काशं ॥ (ज्वालालिङ्गे ) आवाहयामि गिरिजाधवमीश्वरं तं गौरी-युतं सकलपापहरं सुरेशम् । चर्माम्बरं दशभुजं च त्रिशूलहस्तं

व्यालैर्विभूषिततनुं मखरक्षणार्थम् ॥ ( स्रुक्स्रुचौ ) ॥ मूले सोमा-ग्निशुक्रास्पदमथ शिरसि ब्रह्मणो मध्यदेशे माहेश्वर्यं स्रुवं तं स्रुचमपि पयसां भास्करस्याथ मध्ये । दुर्गागौर्योर्द्विरन्ध्रे स्वज-नभयहतेर्भूमिकात्यायनीयं देवान्पितॄनृषींश्चाविरतकुशलदावा-ह्ये वां स्वहोमे ॥ भगवन्पुण्डरीकाक्ष०। शन्नो देवी०। लाजाश्च॥ महागणपतये० पाद्यं नमः । पुनः, शन्नो देवी । आपः क्षीरं। महागणपते कुमार० विनायक ८ आदित्यमणे अनुमतिमणे सरस्वतिमणे(पूर्वे)देवमुख(अग्नेये)सप्तजिह्व (दक्षिणे)वैश्वानर(नैरृते) जातवेदः (पश्चिमे) अग्ने (वायव्ये) हुताशन (उत्तरे)हुतवाह (ईशाने) कृष्णवर्त्मन् (मध्ये)अग्ने सहस्राक्ष शतं ते प्राणः शतं ते व्यानः शतं ते तेजः सहस्रमुख (ऊर्ध्वे) ब्रह्मविष्णुमहेश्वरदेवताः कालि करालि मनोजवे सुलोहिते धूम्रे विस्फुलिङ्गिनि सुमनसे विश्व-चर्ये ब्रह्माण्डव्यापिनि ज्वालालिङ्गतेजः धूम्रवर्णे नीलवर्णे कपिले ज्वाले तेजोवति हव्यवाहे कव्यवाहे रौद्रि संहारिणि तापिनि पाचिनि । भवदेव ८ षट्त्रिंशत्तत्त्वानि सप्तजिह्वासहित पावक ब्रह्माण्डव्यापकतेजोमयपरमशिवज्वालालिङ्गदेवताः सोम शुक्र अग्ने महेश्वर ब्रह्मन् अपः भास्कर गौरि दुर्गे कात्यायनि महि स्रुक्स्रुवदेवताः इदं वोर्घ्यं नमः । महागणपतये गन्धादि दक्षिणा-नैवेद्यान्तम् ॥ ॥ अथ पुरोहितपूजा ॥ शतक्रतोर्यथा जीवो विष्णो-र्ब्रह्मा यथा पुरः । अध्वर्योभूत्तथा मे त्वं भव ब्रह्मन्नमोस्तु ते ।

इन्द्राबृहस्पतिभ्यां गन्धादि नैवेद्यान्तम् । अथ स्रुक्स्रुवप्रतिपादनम् । सावित्राणि सावित्रस्य देवस्य त्वा स० ॥ आत्मनो यज्ञसाफल्यद्वारा सर्वात्मकविष्णुप्रीत्यर्थं ब्राह्मणाय स्रुक्स्रुवौ प्रतिपादयामि ३ प्रतिगृह्णामि ३ ॥ [ गृहीत्वा हस्तौ चालयन् पठति ] त्रातारमिन्द्रमवितारमिन्द्रं हवे हवे सुहवं शूरमिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः ॥ इन्द्रं कुत्सो वृत्रहणं शचीपतिं काटे निबाढ ऋषिराह्वदूतये । रथं न दुर्गाद्वसवः सदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ चित्तिः स्रुक्चित्तमाज्यं वाग्वेदिराधीतं बर्हिः । केतोरग्निर्विज्ञातमग्निर्वाचस्पतिर्होता मन उपवक्ता प्राणो हविः सामाऽध्वर्युरिन्द्रं गच्छ नमः ॥ कया नश्चित्र० ॥ अन्नात्परिस्रुतो रसं० ॥ ब्रह्मा देवानां० पृथिवी शान्तिरन्तरिक्षं शान्तिः ॥ (ततोऽग्नये पुष्पं दद्यात्) सप्तहस्तश्चतुःश्रृङ्गः सप्तजिह्वो द्विशीर्षकः । त्रिपात्प्रसन्नवदनः सुखासीनः शुचिस्मितः १ यावद्धोमं तथा कर्म करिष्ये त्वदनुज्ञया । तावत्कालमिहातिष्ठ वह्ने विघ्नं निवारय २ [ ततोग्निकोणे धमयेत् ] ॐहुंहुतभुजेस्वाहा ३ अग्ने शकेमते इति (मंत्रः) ॥ ( अथ समित्पूजा ) । ॐभूर्भुवः स्वर्मंत्रेण समिद्धमानयेद्बुधः । [ घृतवती, पयः पृथिव्यामिति घृतदुग्धाभ्यां संस्पृशेत् ॥ ] घृतवती भुवनानामऽभिश्रियोर्वी पृथिवी मधुदुघे सुपेशसा । द्यावापृथिवी वरुणस्य धर्मणा विष्कम्भिते अजरे भूरितेजसा । १ ॥ पयः

पृथिव्यां पय ओषधीषु पयोदिव्यन्तरिक्षे । पयोधाः पयस्वतीः प्रदिशः सन्तु मह्यम् २ [ दर्भकाण्डद्वयं प्रज्वाल्यावर्तनीयम् ]। येन देवा ज्योतिषोर्ध्वा उदारयन्येनादित्या वसवो येन रुद्राः। येनाङ्गिरसो महिमानमानशुस्तेनैतु यजमानाय स्वस्ति । [ ततो नमस्कारः ]। पृथिवी समित्तामग्निं समिन्धे तामहं समिन्धे सा मा समिद्धा सुसमिद्धा तेजसा वर्चसा यशसा ब्रह्मवर्चसेन समिन्ध्यात्१ ।। अन्तरिक्षं समित्तां वायुं समिन्धे तामहं समिन्धे०२।। द्यौः समित्तां सूर्यं समिन्धे तामहं० ३ ।। ओषधीनां पते सोम हव्यकव्येष्वऽयुक्तताम्। यथातथागतां सम्यक्दूरीकुरु नमोस्तु ते। ततः हव्यै कव्यै कुरुकुल्यायै सिन्धव्यै सिंह्यै अमृतवर्धिन्यै अमृतरूपिण्यै वह्निप्रियायै। गन्धादि नैवेद्यान्तमर्चयित्वा प्रणमेत्।। हव्यं प्रणीहि हव्यं भृणीहि हव्यं श्रपय हव्यं पाचय हव्यमसि हव्यत्वा हव्यं वहसि हव्यं सीद सुगमं प्रयासि ।। [ततः पुस्तकपूजा ।] सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने । सरस्वतीं सुकृतो आह्वयन्ते सरस्वती दाशुषो वार्यं धात् ।। लक्ष्म्यै मेधायै धरायै धृत्यै तुष्ट्यै पुष्ट्यै वागीश्वर्यै वाग्देवतायै गायत्र्यै सावित्र्यै सरस्वत्यै अमृतेश्वर्यै । गन्धादि नैवेद्यान्तमर्चयित्वा । ( अग्निभद्रं पठेत् ) अग्नये [१] समनमत्० [२] वायवे० [३] सूर्याय० [४] वरुणाय० [५] साम्ने० [६] ब्राह्मणे० [७] राज्ञे० [८] रथाय समन० ।। इत्यग्निकुण्डपूजा ।। २५ ।।

## ऋचकम् ॥ २६ ॥

ॐश्रीगणेशाय नमः ॥ आदौ स्वस्त्ययनम् । ॐकारो यस्य मूलं क्रमपदजठरं छन्दविस्तीर्णशाखा ऋक्पत्रं सामपुष्पं यजुरुचितफलं स्यादऽथर्वा प्रतिष्ठा । यज्ञच्छायासुशीतो द्विजगणमधुपैर्गीयते यस्य नित्यं शक्तिः सन्ध्या त्रिकालं दुरितभयहरः पातु नो वेदवृक्षः ॥ १ ॥ सुच्छायः स्थिरधर्ममूलवलयः पुण्यालवालान्वितो धीविद्याकरुणाक्षमादिविलसद्विस्तीर्णशाखाश्रितः । सन्तोषोज्ज्वलपल्लवः शुचियशःपुष्पः सदा सत्फलः सर्वाशापरिपूरको विजयते श्रीवेदकल्पद्रुमः ॥ २ ॥ मूलाधाराद्धुतवहकलामिश्रितं भूर्भुवःस्वर्ब्रह्मस्थानात्परमगहनात्तत्सवितुर्वरेण्यम् । भर्गो देवः शशिकलमयी धीमहीत्येकरूपं धियो यो नः परममृतं चोदयान्नः परं तत् ॥ ३ ॥ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वात्मवर्णात्मिकाम् । गायत्रीं वरदाभयाङ्कुशकरां शूलं कपालं गुणं शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥ ४ ॥ आयातु वरदा देवी त्र्यक्षरा ब्रह्मवादिनी । गायत्रि ! छन्दसां मातर्ब्रह्मयोने ! नमोस्तु ते ॥ ३ ॥ [ ॐओजोसीति गायत्रीमावाह्य । देवानामार्षम् ॥ ] ओजोऽसि सहोसि बलमसि भ्राजोऽसि देवानां धामनामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूः ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐसत्यं ॐतत्सवितुर्वरेण्यं भर्गो

देवस्य धीमहि। धियो यो नः प्रचोदयात्॥३॥ [स्वस्त्यात्रेयः पांक्त्यन्तमग्नेः पञ्चोनाश्चतस्रो गायत्र्यः षड्डष्णिहस्तिस्रो जगत्योऽन्त्याऽनुष्टुभौ बृहती च॥ ] स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः । स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना ॥ १ ॥ स्वस्तये वायुमुपब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः । बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवन्तु नः ॥ २ ॥ विश्वेदेवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये । देवा अवन्त्वृभवः स्वस्तये स्वस्तिनो रुद्रः पात्वंहसः ॥ ३ ॥ स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति । स्वस्ति न इन्द्रश्चाग्निश्च स्वस्ति नो अदिते ! कृधि ॥४॥ स्वस्ति पन्थामनुचरेम सूर्याचन्द्रमसाविव । पुनर्ददता घ्नता जानता सङ्गमेमहि ॥ ५ ॥ स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं महद्भूतं वायसं देवतानाम् । असुरघ्नमिन्द्रसखं समत्सु बृहद्यशो नावमिवारुहेम ॥ ६ ॥ अंहोमुचमाङ्गिरसं गयं च स्वस्त्यात्रेयं मनसा च तार्क्ष्यम् । प्रयतपाणिः शरणं प्रपद्ये स्वस्ति सम्बाधेष्वभयं नो अस्तु। कल्याणमस्तु ॥७॥ [इति स्वस्त्ययनं नाम कल्याणभद्रम् ॥] (ॐअग्निर्वायुश्च सूर्यश्च वरुणः साम एव च । ब्रह्म राज्ञ रथश्चैवमष्टौ भद्राः प्रकीर्तिताः ) अग्नये समनमत्पृथिव्यै समनमद्यथाग्निः पृथिव्या समनमदेवं मह्यं भद्राः सन्नतयः संनमन्तु ॥ १ ॥ वायवे समनमदन्तरिक्षाय समनमद्यथा वायुरन्तरिक्षेण समनमदे० ॥ २ ॥

सूर्याय समनमद्दिवे समनमद्यथा सूर्यो दिवा समनमदे० ॥ ३ ॥
वरुणाय समनमदऽद्भ्यः समनमद्यथा वरुणोऽद्भिः समनमदेव०
॥ ४ ॥ साम्ने समनमदृचे समनमद्यथा सामर्चा समनमदे०
॥ ५ ॥ ब्रह्मणे समनमत्क्षत्राय समनमद्यथा ब्रह्म क्षत्रेण समन०
॥ ६ ॥ राज्ञे समनमत् विशे समनमद्यथा राजा विशा समन०
॥ ७ ॥ रथाय समनमदश्वेभ्यः समनमद्यथा रथोऽश्वैः समन०
॥ ८ ॥ [ इति अग्निभद्रम् ] [ कनिक्रदत्त्यृचं प्रदक्षिणिज्जागतं
मध्येऽतिशक्वर्यष्टिर्वैताभ्यामृषिरध्वरे वाशमानं शकुन्तं तुष्टाव कुशि-
कस्त्वैषीरथिरिन्द्रतुल्यं पुत्रमिच्छंस्तपस्तेपे तस्येन्द्र इव गाधिपुत्रो जज्ञे
गाथिनो विश्वामित्रः स तृतीयं मण्डलमपश्यत् ॥ ] कनिक्रदज्जनुषं
प्रब्रुवाण इयर्ति वाचमरितेव नावम् । सुमङ्गलश्च शकुने भवासि
मात्वा काचिदभिभाविश्व्या विदत् ॥ १ ॥ मा त्वा श्येन
उद्वधीन्मा सुपर्णो मा त्वा विददिषुमान्वीरो अस्ता । पित्र्या-
मनु प्रदिशं कनिक्रदत्सुमङ्गलो भद्रवादी वदेह ॥२॥ अव क्रन्द-
न्दक्षिणतो गृहाणां सुमङ्गलो भद्रवादी शकुन्ते । मा नः स्तेन
ईशत माघशंसो बृहद्वदेम विदथे सुवीराः॥३॥ ॐप्रदक्षिणिदऽभि
गृणन्ति कारवो वयो वदन्त ऋतुथा शकुन्तयः । उभे वाचौ
वदति सामगा इव गायत्रं च त्रैष्टुभं चानु राजति ॥ ४ ॥
उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु शंससि ।
वृषेव वाजी शिशुमतीरपीत्या सर्वतो नः शकुने । भद्रमा वद

विश्वतो नः शकुने पुण्यमा वद ॥ ५ ॥ भद्रं वद दक्षिणतो भद्रमुत्तरतो वद । भद्रं पुरस्तान्नो वद भद्रं पश्चात्कपिञ्जल ॥६॥ भद्रं वद पुत्रैर्भद्रं वद गृहेषु च । भद्रमस्माकं वद भद्रं नो अभयं वद ॥ ७ ॥ भद्रमधस्तान्नो वद भद्रमुपरिष्टान्नो वद । भद्रं भद्रन्न आवद भद्रन्नः सर्वतो वद ॥ ८ ॥ असपत्नं पुरस्तान्नः शिवं दक्षिणतस्कृधि । अभयं सततं पश्चाद्भद्रमुत्तरतो गृहे ॥९॥ योऽवनानि महयसि जिग्युषामिव दुन्दुभिः । शकुन्तक प्रद-क्षिणं शतपत्राऽभि नो वद ॥ १० ॥ अवदस्त्वं शकुने भद्रमा वद तूष्णीमासीनः सुमतिं चिकिद्धि नः । यदुत्पतन्वदसि कर्करिर्यथा बृहद्वदेम विदथे सुवीराः ॥ ११ ॥ [ इति कनि-क्रदत्सूक्तं नाम, शकुनिभद्रम् ॥ ] "ऐन्द्रवायव्ये द्यावापृथिव्यावन्त्य-स्यृचो हविर्धाने वा तस्य तृतीयः पादोवाग्नेयोऽम्बितममानुष्टुभं बृहती च ॥" इन्द्रश्च मृळयाति नोऽननः पश्चादघं नशत् । भद्रम्भवाति नः पुरः ॥ १ ॥ इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयं करत् । जेता शत्रून्विचर्षणिः ॥ २ ॥ विश्वेदेवास आगत शृणुताऽम इमं हवम् । इदं बर्हिर्निषीदत ॥ ३ ॥ तीव्रो वो मधुमां अयं शुनहोत्रेषु मत्सरः । एतं पिबत काम्यम् ॥ ४ ॥ इन्द्रज्येष्ठा मरुद्गणा देवासः पूषरातयः । विश्वे मम श्रुता हवम् ॥ ५ ॥ अम्बितमे नदीतमे देवितमे सरस्वति । अप्रशस्ता इव स्मसि प्रशस्तिमम्ब ! नस्कृधि ॥ ६ ॥ त्वे विश्वा सरस्वति श्रितायूंषि

देव्याम् । शुनहोत्रेषु मत्स्व प्रजां देवि दिदिड्ढिनः ॥ ७ ॥ इमा ब्रह्म सरस्वति जुषस्व वाजिनीवति । या ते मन्म गृत्समदा ऋतावरि प्रियान्देवेषु जुह्वति ॥ ८ ॥ प्रेतां यज्ञस्य शम्भुवां युवामिदा वृणीमहे । अग्निं च हव्यवाहनम् ॥ ९ ॥ द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशम् । यज्ञं देवेषु यच्छताम् ॥ १० ॥ आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः । इहाद्य सोमपीतये ॥ ११ ॥ [ इतीन्द्रभद्रम् । ] आ नो दश वैश्वदेवन्तु द्वि त्रिष्टुबन्तं षष्ठी विराट्स्थाना ॥ आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः । देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवे दिवे ॥ १ ॥ देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो निवर्तताम् । देवानां सख्यमुप सेदिमा वयं देवा न आयुः प्रतिरन्तु जीवसे ॥ २ ॥ तान्पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधम् । अर्यमणं वरुणं सोममश्विना सरस्वती नः सुभगा मयस्करत् । ३ । तन्नो वातो मयोभु वातु भेषजं तन्माता पृथिवी तत्पिता द्यौः । तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवम् ॥ ४ ॥ तमीशानं जगतस्तस्थुषस्पतिं धियञ्जिन्वमवसे हूमहे वयम् । पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥ ५ ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो

बृहस्पतिर्दधातु ॥ ६ ॥ पृषदश्वा मरुतः पृश्निमातरः शुभं यावा-
नो विदथेषु जग्मयः । अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो
देवा अवसा गमन्निह ॥ ७ ॥ भद्रं कर्णेभिः शृणुयाम देवा
भद्रं पश्येमाक्षिभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम
देवहितं यदायुः ॥ ८ ॥ शतमिन्नु शरदो अन्तिदेवा यत्रान-
श्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मानो मध्या
रीरिषतायुर्गन्तोः ॥ ९ ॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता
स पिता स पुत्रः । विश्वेदेवा अदितिः पञ्चजना अदितिर्जात-
मदितिर्जनित्वम् ॥ १० ॥ [ इत्यानो भद्रम् ] ॥ भद्रो नो अग्निः
सुहवो विभावसुर्भद्र इन्द्रः पुरुहूतः पुरुष्टुतः । भद्रः सूर्य उरु-
चक्षा उरुव्यचा भद्रश्चन्द्रमाः समिथेषु जागृविः ॥ १ ॥ भद्रः
प्रजा अजनयन्नः प्रजापतिर्भद्रः सोमः पावमानो वृषा हरिः ।
भद्रस्त्वष्टा विदधद्रूपाण्यद्भुतो भद्रो नो धाता वरिवस्यतु प्रजाः
॥ २ ॥ भद्रस्तार्क्ष्यः सुप्रजस्त्वाय नो महानरिष्टनेमिः पृतना
युधा जयन् । भद्रो वायुर्मातरिश्वा नियुत्पतिर्वेनो गयस्फान
उशन्सदाऽस्तु नः ॥ ३ ॥ भद्रो मित्रो वरुणो रुद्र इद्धृधा भद्रोऽ-
हिर्बुध्न्यो भुवनस्य रक्षिता । भद्रो नो वास्तोष्पतिरस्त्वमीवहा
भद्रः क्षेत्रस्य पतिर्विचर्षणिः । भद्रो विष्णुर्विश्वकर्मा बृहस्पतिर्भद्रो
द्विषस्तपनो ब्रह्मणस्पतिः ॥४॥ भद्रः सुपर्णो अरुणो मरुत्सखा
भद्रो नो वातो अभिवातु भेषजी ॥५॥ भद्रो दधिक्रा वृषभः

कनिक्रदद्भद्रः पर्जन्यो बहुधा विराजति । भद्रा सरस्वां उत नः सरस्वती भद्रो वशी भद्र इन्द्रः पुरूरवः ॥ ६ ॥ भद्रो नः पूषा सविता यमो भगो भद्रोऽग्रज एकपादऽर्यमा मनुः । भद्रो विष्णुरुरुगायो वृषा हरिर्भद्रो विवस्वां अभिवातु नस्त्मना ॥७॥ भद्रा गायत्री ककुबुष्णिहा विराड्भद्रानुष्टुप् बृहती पङ्क्तिरस्तु नः । भद्रा नस्त्रिष्टुब्जगती पुरुप्रिया भद्रातिच्छन्दा बहुधा विभूवरी ॥ भद्रा नो राकानुमतिः कुहूः सुहद्भद्रा सिनीवाल्यदितिर्मही ध्रुवा । भद्रानो द्यौरन्तरिक्षं मयस्करं भद्रोश्वो दक्षस्तनयाय नस्तुजे ॥ भद्रो नः प्राणः सुमनाः सुवागसद्भद्रो अपानः सतनुः सहात्मना । भद्रं चक्षुर्भद्रमिच्छ्रोत्रमस्तु नो भद्रं न आयुः शरदो असच्छताम् ॥ भद्रेन्द्राग्नी नो भवतामृतावृधा भद्रा नो मित्रा वरुणा धृतव्रता । भद्राश्विना नो भवतां नवेदसा भद्रा द्यावापृथिवी विश्वशम्भुवा ॥ भद्रा न इन्द्रावरुणा रिशादसा भद्रा न इन्द्रा भवतां बृहस्पती । भद्रेन्द्राविष्णू सवनेषु यावृधा भद्रेन्द्रासोमा युधि दस्युहन्तमा ॥ भद्राग्नाविष्णू विदथस्य प्रसाधना भद्रा नोऽग्नीन्द्रा वृषभा दिवस्पती । भद्रा नो अग्नीवरुणा प्रचेतसा भद्राग्नीषोमा भवता नवेदसा ॥ भद्रा सूर्याचन्द्रमसा कविक्रतू भद्रा सोमा भवतां पूषणा नः । भद्रेन्द्रावायू पृतनासुसासही भद्रा सूर्याग्नी अजिता धनञ्जया ॥ भद्रा नः सन्तु वसवो वसुप्रजा भद्रा रुद्रावृत्रहणा पुरन्धरा ।

भद्रा आदित्याः सुपसः सुनीतयो भद्रा राजानो मरुतो विर-प्सिनः ॥ भद्रा न ऊमा सुहवाः शतश्रियो विश्वेदेवा मनव-श्चर्षणीधृतः । भद्राः साध्या अभिभवः सूरचक्षसो भद्रा नः सन्त्वृभवो रत्नधातमाः ॥ भद्राः सर्वे वाजिनो वाजसातयो भद्रा ऋषयः पितरो गभस्तयः । भद्रा भृगवोऽङ्गिरसः सुदा-नवो भद्रा गन्धर्वाप्सरसः सुदंशसः ॥ भद्रा आपः शुचयो विश्व-भृत्तमा भद्राः शिवा यक्ष्मनुदो न ओषधीः । भद्रा गावः सुर-भयो वयोवृधो भद्रा योषा उशतीर्देवपत्नयः ॥ भद्राणि सामानि सदा भवन्तु नो भद्रा अथर्वाण ऋचो यजूँषि नः । भद्रा नक्ष-त्राणि शिवानि विश्वा भद्रा आशा अहुताः सन्तु नो हृदि ॥ संवत्सरा न ऋतवो मयोभुवो यो वा आयुवाः सुसराण्युत क्षपाः । मुहूर्ताः काष्टाः प्रदिशो दिशश्च सदा भद्रा सन्तु द्विप-देशं चतुष्पदे ॥ ( भद्रं पश्येम प्रचरेम भद्रं भद्रं वदेम शृणु-याम भद्रम् । तन्नो मित्रो वरुणो मा महन्तामदितिः सिन्धुः पृथिवी उत द्यौः ) ॥ इत्यशीतिभद्रं । ( स्वस्त्ययनं समाप्तम् ॥ )

अथ कलशस्थापनम् ॥ ( कलशे पुष्पम् ) ॥ आग्नेय्यौ द्वे देवीनामे-केन्द्राणीवरुणान्यग्नायीनां द्यावापृथिव्यौ पार्थिवी षड्वैष्णव्योऽतो देवा दैवी वा ॥ अभि नो देवीरवसा महः शर्मणा नृपतीः । अच्छि-न्नपत्रा सचन्ताम् ॥ इहेन्द्राणीमुपह्वये वरुणानीं स्वस्तये । आग्नायीं सोमपीतये ॥ मही द्यौः पृथिवी च न इमं यज्ञं मिमि-

क्षताम् । पिपृतां नो भरीमभिः ॥ तयोरिद्घृतवत्पयो विप्रा रिहन्ति धीतिभिः । गन्धर्वस्य ध्रुवे पदे ॥ स्योना पृथिवि भवा-नृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः ॥ अतो देवा अव-न्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्तधामभिः ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे ॥ त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ॥ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पृशे । इन्द्रस्य युज्यः सखा ॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ ( इति विष्णुभद्रम् ) ॐगायत्र्यै नमः ॐभुर्भुवः० ३ ॥ ( क्षेत्रपालयोरक्षतम् ॥ अश्वमेधेघोराणामार्षम् ) द्रष्ट्रेनम उपद्रष्ट्रेनमोऽनुद्रष्ट्रेनमः ख्यात्रेनम उपख्यात्रे नमोऽनु-ख्यात्रेनमः शृण्वतेनम उपशृण्वतेनमः सते नमोऽसते नमो जातायनमो जनिष्यमाणायनमो भूतायनमो भविष्यते नमश्चक्षु-षेनमः श्रोत्राय नमो मनसेनमो वाचेनमो ब्रह्मणेनमः शान्ताय नमस्तपसे नमः ॥ भूतं भव्यं भविष्यद्वषट् स्वाहा नम, ऋक्सा-मयजुर्वषट् स्वाहा नमो, गायत्री त्रिष्टुब्जगती वषट् स्वाहा नमः, पृथिव्यन्तरिक्षं द्यौर्वषट् स्वाहा नमोऽन्नं कृषिर्वृष्टिर्वषट् स्वाहा नमः, पिता पुत्रः पौत्रो वषट् स्वाहा नमः, प्राणो व्यानोऽ-पानो वषट् स्वाहा नमो, भूर्भुवःस्वर्वषट् स्वाहा नमः ॥ ( कलशे

पुष्पम् ) यो विश्वचक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् । सम्बाहुभ्यां नमते संपतत्रैर्द्यावापृथिवी जनयन्देव एकः ॥ ॐआ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चस्वी जायतामस्मिन्राष्ट्रे राजन्य एषव्यः शूरो महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिर्जिष्णूरथेष्ठाः पुरन्धिर्योषा सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥ [ इषे त्वोर्जे त्वेति ब्रह्मणः सर्ववेदो ब्रह्मणः ] इषे त्वोर्जे त्वा वायवः स्थोपायवः स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे, आप्यायध्वमघ्न्या देवभागं प्रजावतीरनमीवा अयक्ष्मा मा वः स्तेन ईशत माघशंसः, परि वो रुद्रस्य हेतिर्वृणक्तु ध्रुवा अस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि यजमानस्य पशुपा असि ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे, गोषदसि प्रत्युष्टं रक्षः प्रत्युष्टारातिः प्रेयमगाद्धिषणा, बर्हिरच्छ मनुना कृता स्वधया वितष्टा उर्वन्तरिक्षं वीहीन्द्रस्य, परिषूतमसि माधो मोपरिपरुस्त ऋद्ध्या स मा च्छेता ते मा रिषत्, देवबर्हिः शतवल्शं विरोह सहस्रवल्शा वि वयं रुहेम, आदित्या रास्नासीन्द्राण्याः सन्नहनं पूषा ते ग्रन्थिं ग्रथ्नातु, स ते मा स्थादिन्द्रस्य त्वा बाहुभ्यामुद्यच्छे बृहस्पतेस्त्वा मूर्ध्ना हरामि, देवङ्गममसि तदाहरन्ति कवयः पुर-

स्ताद्देवेभ्यो जुष्टमिह बर्हिरासदे ॥ वसोः पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारमऽयक्ष्या वः प्रजया संसृजामि रायस्पोषेण बहुला भवन्तीः, मधुमद्घृतवत्पिन्वमाना जीवा जीवन्तीरुप वः सदेम, मातरिश्वानो घर्मोऽसि द्यौरसि पृथिव्यसि विश्वधायाः परेण धाम्ना हुतासि मा ह्वाः सा विश्वायुः सा विश्वव्यचाः सा विश्वधायाः, हुतस्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा, द्यावापृथिवीभ्यां सम्पृच्यध्वमृतावरी ऊर्मिणा मधुमत्तमा मान्द्रा धानस्य सातयः, इन्द्रस्य त्वा भागं सोमेनातनच्म्यदस्तमसि विष्णवे विष्णो हव्यं रक्षस्वापो जागृत ॥ महित्रूणामवोऽस्तु, द्युम्नं मित्रस्यार्यम्णः, दुराधर्षं वरुणस्य ॥ नहि तेषाममाचन, नाध्वसु वारणेषु, ईशे रिपुरघशंसः ॥ यस्मै पुत्रासो अदितेः, प्रजीवसे मर्त्याय, ज्योतिर्यच्छन्त्यजस्रम् ॥ सोमानं स्वरणं, कृणुहि ब्रह्मणस्पतिः, कक्षीवन्तं य औशिजः ॥ यो रेवान्यो अमीमहा वसुवित्पुष्टिवर्धनः,स नः सिषक्तु यस्तुरः ॥ मा नः शंसो अररुषो धूर्तिः प्रणङ्मर्त्यस्य । रक्षा णो ब्रह्मणस्पते ॥ (प्रणीतपात्रे पुष्पत्रयम्) । सं वः सृजामि हृदयं संसृष्टं मनो अस्तु वः । सं सृष्टास्तन्वः सन्तु वः संसृष्टः प्राणो अस्तु वः ॥ सं यावः प्रियास्तन्वः संप्रियाहृदयानि वः । आत्मा वो अस्तु सं प्रियः सं प्रियास्तन्वो मम ॥ ( तद्विष्टरेण कलशे जीवाधानम् ) अग्नेरायुरसि तस्य ते मनुष्या आयुष्कृतस्तेनास्मा

अमुष्मा आयुर्धेहि ॥ इन्द्रस्य प्राणः स ते प्राणं ददातु यस्य प्राणस्तस्मै ते स्वाहा ॥ पितृणां प्राणास्ते ते प्राणन्ददतु येषां प्राणस्तेभ्यो वः स्वाहा ॥ मरुतां प्राणास्ते ते प्राणन्ददतु प्राणस्तेभ्यो वः स्वाहा ॥ विश्वेषां देवानां प्राणास्ते ते प्राणन्ददतु येषां प्राणस्तेभ्यो वः स्वाहा ॥ प्रजापतेः परमेष्ठिनः प्राणस्तौ ते प्राणन्दत्तां ययोः प्राणस्ताभ्यां वां स्वाहा ॥ यदऽसर्पस्तत्सर्पिरभवो यन्नवमैस्तन्नवनीतमभवो यदघ्रियथास्तद्घृतमभवः ॥ घृतस्य धारामभृतस्य पन्थामिन्द्रेण दत्तं प्रयतं मरुद्भिः, तत्त्वा विष्णुरन्वपश्यत्तत्त्वेळा गव्यैरयत् ॥ पावमानेन त्वा स्तोमेन गायत्र्या वर्तन्या पाँशोवीर्येणोद्धराम्यसौ ॥ बृहता त्वा रथन्तरेण त्रिष्टुभा वर्तन्या शुक्रस्य वीर्येणोत्सृजाम्यसौ ॥ अग्नेस्त्वा मात्रया जगत्या वर्तन्या देवस्त्वा सवितोन्नयतु जीवातवे जीवनस्यायासौ ॥ देवा आयुष्मन्तस्तेऽमृतेनाऽयुष्मन्तस्तेषामयमायुषाऽयुष्मानस्त्वसौ ॥ ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तस्यायमा० ॥ अग्निरायुष्मान्स वनस्पतिभिरायुष्मांस्तस्यायमा० ॥ यज्ञ आयुष्मान्स दक्षिणाभिरायुष्माँस्तस्याय० ॥ सोम आयुष्मान्स ओषधीभिरायुष्माँस्तस्या० ॥ ओषधय आयुष्मतीस्ता अद्भिरयुष्मतीस्तासामय० ॥ इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण संशिशाधि । मातेवास्मा अदिते शर्म यच्छ विश्वेदेवा जरदष्टिर्यथाऽसत् ॥ अश्विनोः प्राणस्तौ ते प्राणं दत्तां तेन जीव, मित्रावरुणयोः प्राणस्तौ ते प्राणं दत्तां

तेन जीव, बृहस्पतेः प्राणः स ते प्राणं दत्तात्तेन जीव ॥ ( मण्डपदिक्षु रक्षोघ्नमंत्रैस्तिलार्धक्षेपणं । ) [ पूर्वे ] ये देवाः पुरःसदोऽग्निनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा ॥ [ दक्षिणे ] ये देवा दक्षिणात्सदो यमनेत्रा रक्षोह० ॥ [ पश्चिमे ] ये देवाः पश्चात्सदो मरुन्नेत्रा रक्षोह० ॥ [ उत्तरे ] ये देवा उत्तरात्सदो मित्रावरुणनेत्रा रक्षो० ॥ ( ऊर्ध्वे ) ये देवा उपरिषदः सोमनेत्रा अवस्वदन्तो रक्षोहण० ॥ [ आग्नेये ] इदमहं रक्षोभिः समूहाम्यग्ने सन्दह रक्षः सन्दग्धं रक्षोग्नये पुरःसदे रक्षोघ्ने स्वाहा ॥ ( नैर्ऋते ) यमाय दक्षिणात्सदे रक्षोघ्ने स्वाहा ॥ (वायवे) मरुद्भ्यः पश्चात्सद्भ्यो रक्षोहभ्यः स्वाहा ॥ [ ईशाने ] मित्रावरुणाभ्यामुत्तरात्सद्भ्यां रक्षोहभ्यां स्वाहा ॥ [ अधः ] सोमायोपरिषदे वस्वदते रक्षोघ्ने स्वाहा ॥ ( द्रव्यशुद्ध्यर्थं प्रणीतपात्रजलालोडनम् ) रथः पञ्चवाही दक्षिणा ॥ [ तद्विष्टरेण जलेशुद्धिः ] अपो हि ष्ठा मयो भुवस्ता न ऊर्जे दधातन, महे रणाय चक्षसे ॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥ [ अर्घे ] आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य सङ्गथे ( पुष्पे ) पुष्पवतीः प्रसुमतीः फलिनीरफला उत । अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः [ गन्धे ] गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां

तामिहोपह्वये श्रियम् [ दर्भे ] कर्मणे वां वानस्पत्यमसिप्रत्युष्टं रक्षः प्रत्युष्टारातिः श्रियमागाद्विषणाम् । बर्हिरच्छ मनुनाकृता स्वधयावितष्टा उर्वन्तरिक्षं वीहि ( धूपे ) धूरसि धूर्व धूर्वन्तं योऽस्मान्धूर्वति तं धूर्वय वयं धूर्वामस्तं च धूर्व । देवानामसि वह्नितमं सस्नितमं पप्रितमं जुष्टतमं देवहूतमम् । विष्णोः क्रमोऽसि अह्रुतमसि हविर्धानं दृंहस्व मा ह्वार्मित्रस्य त्वा चक्षुषा प्रेक्ष उरु त्वा वाताय । वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाङ्गिरस्वत्, रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वत्, आदित्यास्त्वा धूपयन्तु जागतेन छन्दसाङ्गिरस्वत्, विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन छन्दसाङ्गिरस्वत् । इन्द्रस्त्वा धूपयतु, वरुणस्त्वा धूपयतु, विष्णुस्त्वा धूपयतु ( सूर्ये ) उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् [ दीपे ] तेजोऽसि शुक्रमसि ज्योतिरसि धामासि प्रियं देवानामनाधृष्टं देवयजनं देवताभ्यस्त्वा देवताभ्यो गृह्णामि यज्ञेभ्यस्त्वायज्ञेभ्योगृह्णामि ( स्वललाटे तिलकं ) अध्वर्योऽयं यज्ञो अस्तु देवा ओषधीभ्यः पशुभ्यो मे धनाय । विश्वस्मै भूताय ध्रुवो अस्तु देवाः स पिन्वस्व घृतवद्देव यज्ञ ( अर्घपुष्पौ ) इहैवैधि मापच्योष्ठा पर्वता इवाविचाचलित् । इन्द्र इवेह ध्रुवस्तिष्ठेह यज्ञमुदाराय [ स्वासने दर्भद्वयम् ] इममिन्द्रो अदीधरद्ध्रुवं ध्रुवेण हविषा हविः । तस्मै सोमो अधि ब्रुवत्तस्मा

उ ब्रह्मणस्पतिः [ भूमौ आसनम् ] ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे । ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामसि [ गन्धार्घपुष्पाणि ] मही द्यौ पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ( आकाशे गन्धादि ) बळित्था पर्वतानां क्षेत्रं बिभर्षि पृथिवि । प्रया भूमिं प्रवत्वति मह्ना जिनोषि महिनि ॥ होमविषये "समिदऽन्नाऽज्यभागः" ॥ निषुसीद इत्यादि-ऐन्द्राग्नं तावद्धुनेत् ॥ तत्रादौ समिद्विचारः ॥ संक्रान्तौ रविवारे च जन्माहे पितृयज्ञके । प्रायश्चित्ते विष्णुश्राद्धे मातृकेष्टे न कारयेत् ॥ अन्येषामेव होमानां समिदादौ विधीयते ॥ समिद्विशीर्णाद्विदला वक्रास्थूला कृशा द्विधा ॥ क्रिमिदुष्टा च दीर्घा च निस्त्वचा परिवर्जयेत् । सक्षीरा नाधिकन्यूना समिद्धे सर्वकामदा ॥ आर्द्रत्वचा समिच्छेद्या तर्जन्यङ्गुलवर्तुला । ईदृशीं होमयेद्वेद्वे घृतोक्तेहविषिबुधः ॥ द्वादशाङ्गुलमाणेन शतषट्केन चाहरेत् । विनाहोमेन समिधां सर्वं भवति निष्फलम् ॥ स्वाहाकारं न कुर्वीत कर्म चात्र विलुप्यते ॥ वैश्वानरं स्थितं ध्यायेत्समिद्धोमेषु दैशिकः । शयानमाऽज्यहोमेषु निषण्णं शेषकर्मसु ॥ ( 'वायवे' महागणपतये गन्धादि ) निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कविनाम् । न ऋते त्वत्क्रियते किञ्चनारे महामर्कं मघवञ्चित्रमर्च ( 'नैर्ऋते' कुमाराय ) कुमारं माता युवतिः समुब्धं गुहा बिभर्ति न ददाति पित्रे । अनीकमस्य नमिमज्जनासः पुरा पश्यन्ति निहितमरुतौ ( 'ईशान्ये' श्रियै ) अश्व-

पूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् । श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ( 'मध्ये' सरस्वत्यै ) इयं शुष्मेभिर्बिसखा इवारुजत्सानु गिरीणां तविषेभिरूर्मिभिः । पारावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमा विवासेम धीतिभिः ( 'मध्ये' लक्ष्म्यै च ) कांस्यस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् । पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ['आग्नये' विश्वकर्मणे] विश्वकर्मा विश्वदेवो विश्वजिद्विश्वदर्शितः । ते त्वा घृतस्य धारया श्रैष्ठ्याय समसृषत ( अष्टदलस्थकुम्भे ) ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् । श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन् ॥ प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरोगिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वऽधिक्षियन्ति भुवनानि विश्वा ॥ यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पतिषु । यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु देवाः ॥ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्, होतारं रत्नधातमम् । इषे त्वोर्जे त्वा वायवः स्थो पायवः स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे ॥ अग्न आ याहि वीतये गृणानो हव्यदातये । निहोता सत्सि बर्हिषि ॥ शन्नो देवीरभीष्टय आपो भवन्तु पीतये । शंय्योरभि स्रवन्तु नः ॥ अहं पितॄन् सु विदत्रां अवित्सि नपातं च विक्रमणं च विष्णोः । बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त

इहागमिष्ठाः ॥ वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥ ऋतपतये नारायणायनमः । दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणदेवताभ्यः ( स्वेष्टदेवप्रधानानि । ) तद्विष्णोः परमं० । वासुदेवायनमः ८ । योरुद्रो अग्नौ । भवायदेवाय ८ । गणनान्त्वा । विनायकाय । ८ चित्रन्देवानां । ह्रांह्रींसः सूर्याय ८ । जातवेदसे । अमायैनमः । ८ विष्णुपञ्चायतनदेवताभ्योनमः । यत इन्द्र भयामहे० अभयङ्करीदेव्यैनमः क्षेमङ्करीयभवान्यै । सर्वशत्रुघातिन्यै इहराष्ट्राधिपतये अमुकभैरवायनमः ॥ ( ग्रहाणां स्थापने द्वेद्वे दिगीशांमेकमेककम् । जातीफलैरऽक्षोटैर्वा पञ्चबीजैः फलैरपि ॥ ) ( पूर्वादितो दिक्पालानां गन्धादि ।) ( पूर्वे ) इन्द्रापर्वता बृहता रथेन वामीरिष आवहतं सुवीराः । वीतं हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिळया मदन्ताम् ( आग्नेये ) अग्निः सप्तिं वाजम्भरं ददात्यग्निर्वीरं श्रुत्यं कर्मनिष्ठम् । अग्नी रोदसी विचरत्समञ्जन्नग्निर्नारीं वीरकुक्षिं पुरन्धिम् ॥ ( दक्षिणे ) यमो दधार पृथिवीं यमो द्यामुत सूर्यम् । यमाय सर्वमित्तस्थे यत्प्राणाद्वायुरक्षितम् ॥ ( नैर्ऋते ) यं ते देवी निर्ऋतिराबबन्ध पाशं ग्रीवास्वविचर्त्यम् । तन्ते विष्याम्यायुषो नु मध्येथा विषितः पित्तमऽद्धिप्रमुक्तः ॥ (पश्चिमे)उदुत्तमं वरुण पाशमस्मदऽवाधमं विमध्यमं श्रथाय । अथा

वयमदित्य व्रते तवानागसो अदितये स्याम ॥ ( वायवे ) वाय-
वायाहि दर्शतेमे सोमा अरंकृताः । तेषां पाहि श्रुधी हवम् ॥
( उत्तरे ) सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं
ददाति । साधन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाश तस्मै ॥
राजाधिराजाय प्रसह्य साधने नमो वयं वैश्रवणाय कुर्महे । स
मे कामान्कामकामाय मह्यं कामेश्वरो वैश्रवणो ददातु कुवेराय
वैश्रवणाय महाराजाय वै नमो नमः ॥ ( ईशाने ) ईशानं त्वा
शुश्रुमा वयं धनानां धनपते गोमदग्ने अश्ववद्भूरिपुष्टं हिरण्य-
वदन्नवद्धेहि मह्यम् ॥ दुहान्ते द्यौः पृथिवी पयो जगरस्त्वा
सोदको विसर्पतु । प्रजापतिनात्मानमाप्रीणेऽरिक्तो म आत्मा ॥
यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पतिषु । यो रुद्रो
विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु देवाः ॥ ( ऊर्ध्वं )
ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः । सबु-
ध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ (अधः)
वषट्ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् ।
वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥
( कलशे ईशानतः कोणेषु ) नमो अस्तु सर्पेभ्यो ये के च पृथि-
व्यामधि । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥
( आग्नेये ) येषु वा यातुधाना ये वा वनस्पतीरनु । येऽवटेषु
शेरते तेभ्यः ।० ॥ (नैर्ऋते) ये वाधो रोचने दिवोये वा सूर्यस

रश्मिषु । येऽप्सु सदांसि चक्रिरे तेभ्यः० ॥ ( वायवे ) धनुना गा धनुनाऽऽजिं जयेम धनुना तीव्राः समदो जयेम । धनुः शत्रो-रपकामं कृणोति धनुना सर्वाः प्रदिशो जयेम ॥ (मध्ये चक्रस्थाऽ-क्षोटयोः ) अग्निस्तुविश्रवस्तमं तुविब्रह्माणमुत्तमम् । अतूर्तं श्राव-यत्पतिं पुत्रं ददाति दाशुषे ॥ आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेन देवो याति भुवनानि पश्यन् ॥ ( अन्तराग्नेय्यां चक्रस्थाक्षोटयोः ) एवा वन्दस्व वरुणं बृहन्तं नमस्या धीरममृतस्य गोपाम् । स नः शर्म त्रिवरूथं वयं सत्पातं नो द्यावापृथिवी उपस्थे ॥ या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु । तेभिर्नो विश्वैः सुमना अहेळन्राजन्सोम प्रति हव्या गृभाय ॥ ( दक्षिणे चतुष्कोण-स्थयोः ) तं युवां देवावश्विनौ कुमारं साहदेव्यम्, दीर्घायुषं कृणो-तन ॥ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्, अपां रेतांसि जिन्वति ॥ [ ईशाने त्रिकोणस्थयोः ] वषट्ते विष्ण आस आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥ बोधास्व मे मघवन्वाचमेमां यां ते वसिष्ठो अर्चति प्रशस्तिम्, इमा ब्रह्म साधमादे जुषस्व ॥ ( उत्तरे त्रिकोणस्थयोः ) त्रातारमिन्द्रमवि-तारमिन्द्रं हवे हवे सुहवं शूरमिन्द्रम् । ह्वयामि शक्रं पुरुहूत-मिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः ॥ बृहस्पते अति यदर्यो

अर्हद्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवसर्तप्रजात तद-स्मासु द्रविणं देहि चित्रम् ॥ ( पूर्वे चतुष्कोणस्थयोः ) सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमने । सरस्वतीं सुकृतो आह्वयन्ते सरस्वती दाशुषे वार्यं धात् ॥ अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिवत्क्षत्रम् । ऋतेन सत्यमिन्द्रियं विपानं शुक्रम-न्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ [ पश्चिमे जालस्थयोः ] प्रजापते न हि त्वदन्य एता विश्वा जातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥ शन्नो देवीरभीष्टय आपो भवन्तु पीतये, शं य्योरभि स्रवन्तु नः ॥ ( नैर्ऋते यवाकारस्थयोः ) गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥ कया नश्चित्र आभुव-दूती सदा वृधः सखा, कया शचिष्ठया वृता ॥ [ वायवे पताका-स्थयोः ] आ वो राजानमध्वरस्य रुद्रं होतारं देवयजं रोदस्योः । अग्निं पुरा तनयित्नुरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥ केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे, समुषद्भिरजायथाः ॥ [ उत्तरे पक्षिस्थयोः ] को अद्य युङ्क्ते धुरि गा ऋतस्य शिमिवतो भामिनो दुर्हृणायून् । आसन्निषून्हृत्स्वसोमयो भून्य एषां भृत्यामृण-वत्स जीवात् ॥ ध्रुवाद्यौर्ध्रुवा पृथिवीध्रुवासः पर्वता इमे । ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामसि ॥ ( पक्षिणे कुम्भस्थयोः )

आदित्यं गर्भं पयसा समञ्जन्सहस्रस्य प्रतिमां विश्वरूपम् । परिवृङ्गधि हरसा माभिसंस्थाः शतायुषं कृणुहि चीयमानः ॥ अगस्त्यः खनमानः खनित्रैः प्रजामपत्यं बलमिच्छमानः । उभौ वर्णावृषिरुग्रः पुपोष सत्या देवेष्वाशिषो जगाम ॥ [ कलशे ] अमीवहा वास्तोष्पते विश्वा रूपाण्याविशत्, सखा सुशेव एधि नः ॥ वास्तोष्पते प्रति जानीह्यस्मान्स्वावेशो अनमीवो भवा नः । यत्त्वेमहि प्रतितन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे ॥ वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो । अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति नो जुषस्व ॥ वास्तोष्पते शग्मया शं सदा ते सक्षीमहि रण्वया गातुमत्या । पाहि क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिः सदा नः ॥ ( क्षेत्रपालयोः ) क्षेत्रस्य पतिना वयं हितेनेव जयामसि । गामश्वं पोषयित्वा स नो मृळातीदृशे ॥ क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व । मधुश्चुतं घृतमिव सु पूतमृतस्य नः पतयो मृळयन्तु ॥ मधुमतीरोषधीर्द्याव आपो मधुमान्नो भवन्त्वन्तरिक्षम् । क्षेत्रस्य पतिर्मधुमान्नो अस्त्वरिष्यन्तो अन्वेनं चरेम ॥ ( कलशे सर्वदेवस्थापनम् ) भूतो भूतेषु चरति प्रविष्टः स भूतानामधिपतिर्बभूव । तस्य मृत्युश्चरति राजसूयं स राजा राज्यमनुमन्यतामिदम् ॥ उर्वीरोधसी वरिवः कृणोतु क्षेत्रस्य पतीरधिवोचतं नः । तौ मे द्यावापृथिवीनाथितो जोहवीमि तेनो

भ्रुक्षतंमहसः॥यो ह वै देवान्साध्यान्वेद सिध्यत्यसादेमिमाव-
लोकाः। देवाः साध्याः सिद्धं ह्यस्मै सिद्धमस्मै सिद्धममुष्मै य
एवं वेद सिध्यत्यस्मै ॥ यो विश्वचक्षुरुत विश्वतो मुखो विश्व-
तो हस्त उत विश्वतस्पात्। संबाहुभ्यां नमते संयजत्रैर्द्यावा-
पृथिवी जनयन्देव एकः॥ यस्य व्रतमुप तिष्ठन्त आपो यस्य
व्रते पशवो यन्ति सर्वे। यस्य व्रते पुष्टिपतिर्निविष्टस्तं सरस्व-
न्तमवसे जोहवीमि॥ गौरीर्मिमाय सलिलानि तक्षत्येकपदी
द्विपदी सा चतुष्पदी। अष्टापदी नवपदी बभूवुषी सहस्राक्षरा
परमे व्योमन्॥ दिव्यं सुपर्णं वायसं बृहन्तमपां गर्भं दर्शत-
मोषधीनाम्। अभीपतो वृष्टिभिस्तर्पयन्तं सरस्वन्तमवसे जोह-
वीमि॥ सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने।
सरस्वतीं सुकृतो आह्वयन्ते सरस्वती दाशुषे वार्यं धात्॥सरस्व-
त्यभि नो नेषि वस्योमापस्फरी पयसः मा न आधक्। जुषस्व
नः सख्या वेश्या च मा त्वत्क्षेत्राण्यरणानि गन्म॥ पावका नः
सरस्वती वाजीभिर्वाजिनीवती, यज्ञं वष्टु धिया वसुः॥ चोद-
यत्री सूनृतानां चेतन्ती सुमतीनाम्, यज्ञं दधे सरस्वती॥ महो
अर्णः सरस्वती प्रचेतयति केतुना, धियो विश्वा विराजति॥
जातवेदसे सुनवाम सोममरातियतो निदहाति वेदः। स नः
पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः॥ त्र्यम्बकं
यजामहे सुगन्धिं रयिपोषणम्। उर्वारुकमिव बन्धनान्मृत्योर्मु-

क्षीय माऽमृतात्[14] ॥ यत इन्द्र भयावहे ततो नो अभयं कृधि ।
मघवञ्छग्धि तव तन्न ऊतिभिर्विद्विषो विमृधो जहि[15] ॥ ये
देवा दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ । अप्सुषदो
महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम्[16] ॥ स सुष्टुभा
स ऋक्वता गणेन वलं रुरोज फलिगं रवेण । बृहस्पतिरुस्रिया
हव्यसूदः कनिक्रदद्वावशतीरुदाजत्[17] ॥ एवा पित्रे विश्वदेवाय
वृष्णे यज्ञैर्विधेम नमसा हविर्भिः । बृहस्पते सुप्रजा वीरवन्तो
वयं स्याम पतयो रयीणाम्[18] ॥ ये के च ज्मा महिनो अहिमाया
दिवो जज्ञिरे अपां सधस्थे । ते अस्मभ्यमिषये विश्वमायुः क्षप
उस्रा वरिवस्यन्तु देवाः[19] ॥ रक्षोहणं वाजिनमाजिघर्मि मित्रं
प्रथिष्ठमुपयामि शर्म । शिशानो अग्निः क्रतुभिः समिद्धः स
नो दिवा सरिषः पातु नक्तम्[20] ॥ प्रत्यग्ने हरसा हरः शृणीहि
विश्वतः प्रति । यातुधानस्य रक्षसो बलं वीरुज वीर्यम्[21] ॥ अन्वि-
दनुमते त्वमन्यासै शं च नस्कृधि । इषं तोकाय नो दधत्प्राण
आयूंषि तारिषः[22] ॥ यत्ते नाम सुहवं सु प्रणीतेऽनुमतेऽनुमतं
सदा नु । तेन त्वं सुमतिर्देव्यसै इषं पिन्व विश्ववारां सुवी-
राम्[23] ॥ राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु
त्मना । सीव्यत्वपः सूच्याऽच्छिद्यमानया ददातु वीरं शतदाय-
मुक्थ्यम्[24] ॥ यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे
वसूनि । ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे ररा-

णों[25] ॥ सिनीवालि पृथुष्टुके या देवानामसि स्वसा । जुषस्व ह-
व्यमाहुतं प्रजान्देवि दिदिड्ढि नः[26] ॥ या सुबाहुः स्वङ्गुरिः सुषूमा
बाहुसूवरी । तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतन[27] ॥ या
कुहूर्या सिनीवाली या राका या सरस्वती । इन्द्राणीमह्व ऊतये
वरुणानीं स्वस्तये[28] ॥ इन्द्राणीमासु नारिषु सुपत्नीमहमश्रवम् ।
नह्यस्या अपरं च न जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः[29] ॥
नाहमिन्द्राणी रारण सख्युर्वृषाकपेर्ऋते । यस्येदमप्यं हविः
प्रियं देवेषु गच्छति, विश्वस्मादिन्द्र उत्तरः[30] ॥ कुहूमहं सुकृतं
विद्मनापसमस्मिन्यज्ञे सुहवां जुहवीमि । या नो ददाति श्रवणं
पितॄणां तस्यै ते देवि हविषा विधेम[31] ॥ कुहूर्देवानाममृतस्य पत्नी
हव्या नो अस्य हविषः शृणोतु । स्वसा देवानां महयन्त्यस्मे
रायस्पोषं चिकितुषे दधातु[32] ॥ धाता दधातु नो रयिमीशानो
जगतस्पतिः । स नः पूर्णेन वावनत्[33] ॥ प्रजापतीरमयतु प्रजा
इह धाता दधातु सुमनस्यमानः । संवत्सर ऋतुभिश्चाक्लृपानो
मयि पुष्टिं पुष्टिपतिर्दधातु[34] ॥ ( देवासुराणाम् ) तव श्रिये व्यजि-
हीत पर्वतो गवां गोत्रमुदसृजो यदङ्गिरः । इन्द्रेण युजः तमसः
परिवृतं बृहस्पते निरपामौजो अर्णवम्[1] ॥ बृहस्पते अति यदर्यो
अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवसर्तप्रजात तद-
स्मासु द्रविणं धेहि चित्रम्[2] ॥ बृहस्पतिः समजयद्वसूनि महोव्र-
जान्गोमतो देव एषः । अपः सिषासन्स्वरप्रतीतो बृहस्पति-

हँन्त्यमित्रम[3]ँर्कैः ॥ यमो दाधार पृथिवीं यमो द्यामुत सूर्यम् । यमाय सर्वमित्तस्थे यत्प्राणाद्वायुरक्षितम् । यथा पञ्च यथा षड्यथा पञ्चदशर्षयः । यमं यो विद्यात्स ब्रूयाद्यथैकर्षिर्विजानते ॥ त्रिकद्रुकेभिः पतति षडुर्वीरेकमिद्बृहत् । गायत्री त्रिष्टुप्छन्दसि सर्वास्ता यम आहिता[6] ॥ मृळा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेमते । यच्छं च योश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु ॥ अश्याम ते सुमतिं देवयज्यया क्षयद्वीरस्य तव रुद्र मीळः । सुम्नायन्नऽद्विषो अस्माकमा चरारिष्टवीरा जुहवाम ते हविः ॥ त्वेषं वयं रुद्रं यज्ञसाधनं वंकुं कविमवसे निह्वयामहे । आरे अस्मद्दैव्यं हेळो अस्यतु सुमतिमिद्वयमस्या वृणीम[9]हे ॥ अव ते हेळो वरुण नमोभिरवयज्ञेभिरीमहे हविर्भिः । क्षयमस्मभ्यमसुरप्रचेतो राजन्नेनांसि शिश्रथः कृत[3]ँानि ॥ उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय । अथा वयमादित्यव्रते तवानागसो अदितये स्याम[11] ॥ इमं मे वरुण श्रुधी हवमद्या च मृळय त्वामवस्युराचके । तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो [12]हविर्भिः ॥ अहेळमानो वरुणेह बोध्युरुशंसमान आयुः [13]प्रमोषीः ॥ ॐभूर्लोकाय स्वाहा[14] । ॐभुवर्लोकाय[15]० ॐस्वर्लोकाय[16]० ॐभूर्भुवः स्वर्लोकाय स्वाहा[17] ॥ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्याः अयम्, अपां रेतांसि जि[18]न्वति ॥ उभा वामिन्द्राग्नी आहुवध्या उभा राधसः

सह मादयध्वै । उभा दातारायिषां रयीणामुभा वाजस्य सातये
हुवे वाम् [१९] ॥ अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्व-
रेष्वीड्यः ॥ यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभुं विशे
विशे [२०] ॥ अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तं
जानन्नग्न आरोह ततो नो वर्धया रयिम् [२१] ॥ ( स्तोमो देवानाम् )
उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वते [२२] ॥
अस्य प्रत्नामनु द्युतं शुक्रं दुदुहे अह्रयः, पयः सहस्रसामृषिम् [२३] ॥
[ अरुणेः ] कदाचनस्तरीरसि नेन्द्रसश्चसि दाशुषे । उपोपेन्नु
मघवन्भूय इन्नु ते दानं देवस्य पृच्यते [२४] ॥ परि ते दूळभो रथोऽस्मा
अश्नोतु विश्वतः । येन रक्षसि दाशुषः [२५] ॥ ॥ यौ ते श्वानौ यम
रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ । ताभ्यामेनं परि देहि
राजन्स्वस्ति चास्मा अनमीवं च धेहि ॥ यत्र वेत्थ वनस्पते
देवानां गुह्या नामानि, तत्र हव्यानि गन्तय ॥ मुञ्चामि त्वा ह-
विषा जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात् । ग्राहिर्जग्राह यदि
वैतदेनं तस्या इन्द्राग्नी प्रमुमुक्तमेनम् ॥ अङ्गादङ्गाल्लोम्नोलोम्नो
जातं पर्वणि पर्वणि । यक्ष्मं सर्वस्मादात्मनस्तमिमं विवृधामि
ते ॥ ॐभूर्भुवः स्व० ३ । ॐतद्विष्णोः परमं० ॥ ऐन्द्राग्नं वर्म
बहुलं यदुग्रं विश्वे देवा नातिविध्यन्ति शूराः । तन्नस्त्रायतां
तन्वः सर्वतो महदायुष्मन्तो जरामुपगच्छेम जीवाः ॥ [ अथ
नैवेद्यम् ] अमृतेशमुद्रयाऽमृतीकृत्याऽमृतमस्तु अमृतायतां नैवेद्यम् ।

सावित्राणि सावित्रस्य देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ॥ महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः । प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चतुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणयागदेवताभ्यः॥ (स्वेष्टदेवताभ्यः)भगवते वासुदेवाय० ८ । भवाय देवाय० ८ विनायकाय० ८ । क्लींक्रांकुमाराय० ८ । ह्रांह्रींसः सूर्याय० ८ । भगवत्यै अम्बायै० । अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इह राष्ट्राधिपतये असुकभैरवाय ॥ इन्द्रायवज्रहस्ताय, अग्नयेशक्तिहस्ताय, यमायदण्डह०,नैर्ऋतये खड्गह०, वरुणाय पाशह०,वायवे ध्वजह०,कुबेराय गदाह०, ईशानाय त्रिशूलह०,ब्रह्मणे पद्मह०, विष्णवे चक्रह०,अनन्तादिभ्यः अष्टाभ्यः कुलनागदेवताभ्यः ॥ अग्न्यादित्याभ्यां वरुणचन्द्रमोभ्यां कुमारभौमाभ्यां विष्णुबुधाभ्यां इन्द्राबृहस्पतिभ्यां सरस्वतीशुक्राभ्यां प्रजापतिशनैश्चराभ्यां गणपतिराहुभ्यां रुद्रकेतुभ्यां ब्रह्मध्रुवाभ्यां अनन्तागस्त्याभ्यां ॥ ब्रह्मणे कूर्माय ध्रुवाय अनन्ताय हरये लक्ष्म्यै कमलायै शिख्यादिभ्यः पञ्चचत्वारिंशद्वास्तोष्पतियागदेवताभ्यः ॥ ब्रह्म्यादिभ्योमातृभ्यः, गौर्यादिभ्योमातृभ्यः, ललितादिभ्योमातृभ्यः, दुर्गाक्षेत्रगणेश्वरदेवताभ्यः, राकादेवताभ्यः,

त्रिकादे०, सिनीवालीदे०, यामीदे०, कुहूदे०, रौद्रीदे०, ऐन्द्रीदे०, वारुणीदे०, बार्हस्पत्यदे०, ॐभूर्दे० ॐभुवर्दे०, ॐस्वर्दे०, ॐभूर्भुवःस्वर्दे०,अखण्डब्रह्माण्डयागदे०,धूर्भ्यः, उपधूर्भ्यः, महागायत्र्यै,सावित्र्यै,सरस्वत्यै,हेरुकादिभ्यो बटुकादिभ्यः तिलतण्डुलमात्रं दधिमधुपर्कं ॐनमोनैवेद्यं निवेदयामि नमः ॥ [ कलशे पुष्पं । ] हिरण्यगर्भः० । यः प्राणतो० । य ओजोदा० । येन द्यौ०। य इमे द्यावा०। यस्येमे विश्वे०। आपो ह यन्० । आनः प्रजां जनयतु० ॥ अर्चन्तस्त्वा हवामहेऽर्चन्तः समिधीमहि । अग्ने अर्चत ऊतये, अर्चत प्रार्चत प्रियमेधासो अर्चत । अर्चन्तु पुत्रका उत पुरं न धृष्णुमर्चत ३ ॥ इति ऋचकं समाप्तम् ।२६॥

## अथैकचक्रम् ॥ २७ ॥

अग्निर्हिरण्यं, सोमो हिरण्यमितिचतुर्गृहीतेनोत्तरादक्षिणाघारावाज्यभागौ ॥ ॐअग्निर्हिरण्यममृतं हिरण्यमग्निरवरोचनं चित्रभानुः । अग्निर्गरुत्मानपतत्पतत्र्यग्निः पतङ्गमनुकृष्णवर्त्मा स्वाहा १ सोमो हिरण्यममृतं हि सोमः सोममपः सोममद्रिरभ्यङ्गः । सोमो गरुत्मानपतत्पतत्री सोमः पतङ्गमनु शुक्लवर्त्मा स्वाहा २ एकचक्रमुदयादित्यष्टादशभिः समिधामन्नस्याज्यस्य च जुहोति ॥ एकचक्रमुदयाद्भ्राजमानं देवस्तोमं ददृशे सूर्यमेकम् । हरिद्रुक्मं विश्वमेजत्सचन्तं तस्मै नो देवाः परिधत्त सूर्याय ॥ एकविंशं पञ्चभिर्योतयन्तं षड्भिः सूर्यं प्रवता चोद्वता च । त्रिधा

वर्धयन्तं भुवनस्य नाभिं यज्ञे सूर्यं शुक्रहुतं पुरस्तात् ॥ श्वेतः शुक्रो वृषभश्चर्षणीनां मूर्धा उतन्तूत्वा सुमतिं करिष्ठः । स नो रयिं मे गृहेषु दधात्वानु वीरो वर्धतां द्योतमानः ॥ अपां गर्भो विदथस्य प्रसादनमूर्वो तिष्ठत्सिन्धूनामनीके । सशेवृधमधिधावत्वन्तरिक्षं शुक्रः शिशुर्दीर्घमायुर्निधत्ताम् ॥ ब्रह्माधिकः प्रथमो जातवेदा बृहस्पतिर्भारतो देवतानाम् । अस्मिन्यज्ञे बर्हिषि मोदमानो हिरण्यवाशीरिषिरः स्वर्षः ॥ शुचिर्देवानामृषभः प्रजानामृभुर्वसूनाममृतस्य नाभिः । अस्मिन्यज्ञे बर्हिषि मोदमानो हिरण्यरेता अभयं कृणोतु ॥ बुधः सौम्यो अमृतत्वं बभूवाऽमृतन्देवानामायुः प्रजासु । अस्मिन्यज्ञे सोमशिशुर्युवानः शन्नो भव पयसाप्यायमानः ॥ बोधास्व मे मघवन्वाचमेमां बोधास्व मे विश्वभृतो जनित्री । बोधास्व मे मातरिश्वा वचोभिर्बोधास्व मे ब्रह्मणा संशिशाधि ॥ अग्निर्मूर्धा दिवः ककुत्पतिः० ॥ चित्रो हन्ता रोहिदश्वः प्रजानामस्मिन्यज्ञे हविषा मान एतु । स नो वक्रीरभयं कृणोतु विश्वेत्स वामादधते त्वोतः ॥ शनैश्चरान्मावधीरश्मिवीरान्मानो गृहान्पशून्मा न आयुः । मा नो यूनो भविता नो रथेन मा नः शिशून्गर्भमानः किञ्चन ॥ शन्नो भव ऋतुभिः शं समासैः शमर्धमासैः शमुषा अहोभिः । शन्नः काष्ठाः प्रदिशो दिशश्च शं चन्द्रसूर्या ज्योतिषि शं चे ॥ मक्षूधाता मातरिश्वा वचोभिश्चन्द्रो अमृताद्वर्धते जायमानः । आयुः

प्रजाममृतं हि सौभगत्वं प्रचन्द्रमास्थिरते दीर्घमायुः[१३] ॥ भूयो जातो हविषश्चन्द्रमसात्पूर्णः पुरस्तात्पयसो हविर्भिः । पयो गर्भो देवताः पिन्वमानश्चन्द्रो अमृतत्वमभयं कृणोतु[१४] ॥ धनुना गा धनुनाजिं जयेम[१५]० ॥ उग्रं तमो विश्वरूपं महन्तं स्वर्भानुरजरं महस्वत् । महद्भयात्तमसो मृत्युपाशाद्विमुञ्च राहुरभयं कृणोतु[१६] ॥ केतुं कृण्वन्न केतवे[१७]० ॥ यज्ञस्य केतुं प्रथमं पुरोहितमग्निर्नरस्त्रि-षधस्थे समीधिरे । इन्द्रेण देवैः सरथं स बर्हिषि सीदन्निहोता यजथाय सुक्रतुः[१८] ॥ (इति समिदन्नाज्येन हुत्वा ॥ अथ स्रुवेणाज्येन चोपहोमान्) । आदित्य इति । आदित्यस्तेजस्वी तेजोऽस्मिन्यज्ञे यजमाने दधातु स्वाहा[१] । शुक्रो भ्राजस्वी भ्राजोऽस्मिन्यज्ञे[२]० । बृह-स्पतिर्वाक्पतिर्वाच्योऽस्मि[३]० । बुधो बुद्धिमान्बुद्धिमस्मि[४]० । आरो यशस्वी यशोऽस्मि[५]० । सौरः सुरभिः सुरभिमस्मि[६]० । चन्द्रमा आयुष्मानायुरस्मि[७]० । राहुरभय्यऽभयमस्मि[८]० । केतुरनुपरोध्यऽ-नुपरोधमस्मि[९]० । ध्रुवो धैर्यवान्धैर्यमस्मि[१०]० । अगस्त्यो वीर्यवा-न्वीर्यमस्मि[११]० । प्रद्धो अग्ने दीदिहि पुरो नो यत्र देवाः पूर्वे पुराणाः । यत्रासो वैश्वानरः स्तोकातिथिस्तत्रेमं यज्ञं यजमानं च देहि[१२] ॥ इमो अग्ने वीततमानि हव्या प्रेदं हविः प्राष्ट्रमा-न्स्तोकान् । स्तोकातिथिः स्तोका जूतिः पतन्त्यथा ह्यग्ने अमृतत्वं च देहि[१३] ॥ ध्रुवं ते राजा वरुणो[१४]० ॥ ध्रुवं ध्रुवेन हविषाभि सोमं मृशामसि । अथोऽत इन्द्र केवलीर्विशो बलिहृतस्करत्[१५] ॥ अगस्त्यः खनमानः खनित्रैः प्रजामपत्यं[१६]० । इत्येकचक्रम् ॥२७॥

## अथ ग्रहेष्टब्राह्मणम् ॥ २८॥

(स्रुवेणाज्यहोमः) यजुः ॥ आदित्या रुद्रा वसवो जुषन्त्यसा आदित्यो यदादित्यमुपतो य इच्छते दंष्ट्रं क्रियमाणं नवीया नवग्रहणे नवीया न यजते, गृण्वन्तो नो दिव्या वा आदित्यो यदादित्या वनीयमुपयान्त्यर्थं वानां पार्थिवानां यजते, सुगो-जायद्गोजायता तर्हि यज्ञियाम इति, यज्ञिया वृद्ध्यंते, येन देवानां यज्ञिया यज्ञियानां वा अनावा तद्ब्रह्मवर्चस्वी तवन्य-ष्टता ऋतज्ञ इत अमृता ऋद्ध्यंते, तेनेरासन्तमुरुगायमद्य आदित्यो नवग्रहीतव्यनवो ग्रही स्या यजेत यूयं पात स्वस्तिभिः सदा न, इति यजमानो वा आयव्यो वृद्ध्यते यत ऋद्ध्यते, यजमानाय वृद्ध्यते प्रजया ऋद्ध्यते य एवं वेद । देवाश्च वा असुराश्च समावदेवा यज्ञं कुर्वत यदेव देवा अकुर्वत तदासुरा अकुर्वत, ते देवा एतानि ग्रहहवींष्यऽपश्यँस्तैरिन्द्रमयाजंस्तद-सुरानऽन्ववायंस्ततो देवा अभवन्पुरासुरा अभवन्य एवं विद्वाने-तानि ग्रहहवींषि यजति भ्रातृव्यस्याऽनन्ववायाय भवति आत्मना परस्य भ्रातृव्यो भवति, आदित्याय घृते चरुं निर्वपेत्तेजस्तेन परिक्रीणाति, शौक्रं चरुं निर्वपेत्, ब्रह्मवर्चसं तेन परिक्रीणाति, बृहस्पतये नैवारं पयसे चरुं निर्वपेत् वाक्पत्यं तेन०, बुधाय नवकपालं चरुं निर्वपेद्बुद्धिं तेन०, भौमायैककपालं चरुं निर्वपेत् यशस्तेन० सौराय पललमिश्रं घृते चरुं निर्वपेत्सुरभिं तेन परिक्री-

णाति, चन्द्रमसे पञ्चदशकपालं चरुं निर्वपेदायुस्तेन०, राहवे चरुं निर्वपेदऽभयं तेन०, केतवे चरुं निर्वपेदऽनुपरोधं तेन परि०, ध्रुवाय चरुं निर्वपेत् धैर्यं तेन परिक्रीणाति, १ अगस्त्याय चरुं निर्वपेद्वीर्यं तेन परिक्रीणाति, इत्येतान्येव सर्वाणि भवन्ति य एवं विद्वानेतया यजेत आज्येनोपहोमाञ्जुहोति आशिषामवरुद्ध्या एतया यजेत, यः कामयेत तेजस्वी भ्राजस्वी वाक्पतिर्बुद्धिमान्यशस्वी सुरभिरायुष्मानऽभयऽनुपरोधी धैर्यवान् वीर्यवान् स्यामित्येकचक्रमुदयाद्भ्राजमानमित्यष्टादशयाज्यावाक्यो भवति, सरूपत्वायाग्निर्हिरण्यं सोमो हिरण्यमित्याज्यभागौ, प्रद्धो अग्ने, इमौ अग्ने इति संयाज्ये उच्चैर्यजत्येषां वा वाच उत्तममायुरुच्चैरुत्तमः समानानां भवति, आदित्यस्तेजस्वीत्युपहोमाञ्जुहोति, सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै य एवं विद्वानेतया यजेत राजसूयः सवितर्त्वप्रसवानां सविता दित्यौ सद्यो देवासुरौ राजर्षीणाम् । स्वयमवसन्नाया अश्वत्थशाखाया पत्रं भवति श्वेतां श्वेतवत्सां दुह्यन्ति तत्स्वयमर्कति स्वयं मथ्यति स्वयं व्ययत्यथ मैत्रा बार्हस्पत्यं चरुं शृतं कुर्वन्ति, तत्स्वयं तण्डुलान्विभजति ये क्षोदीयां सप्तमायादाशृतो भवत्यथ तत्पत्रमाश्वत्थमपिधायापवित्रं वत्याजमानायति तत्स्थवीयस्व आवपति, समात्रं चरुं स्वयं शृतं भवत्यर्धं वेत्यः कुर्वन्त्यर्धं स्वयं कृतमर्धं बर्हिषो दन्त्यार्धं स्वयं दिनमर्धमिध्मं

कुर्वन्त्यर्धं स्वयं कृतं शितिपृष्ठो बार्हस्पत्यस्य दक्षिणाश्वो मित्रस्य मावैवश्वेताश्वेतवागग्नये ग्रहपतय आशूनामष्टाकपालः । सावित्रे प्रसवित्रे मतीनामऽष्टकपालः, सोमाय वनस्पतये श्यामाकचरुं, बृहस्पतये वाचस्पतये नैवारश्चरुरिन्द्राय ज्यैष्ठयाय हायनानामेकादशकपालो, मित्राय सत्यस्य पतये । अम्बानां चरुं, वरुणाय धर्माणाम्पतयेऽयनमस्त्रयोदशकपालो, रुद्राय पशुपतये गवीधुकश्चरुः सविताद्वा प्रसवेनां सवितारमग्निर्गार्हस्पत्यानां सोमो वनस्पतीनां बृहस्पतीनां वाचमिन्द्रो ज्येष्ठानां मित्रः सत्यानां वरुणो धर्माणां रुद्रः पशूनां ते देवानामऽसपत्रमिमां स्ववध्वं, महते क्षेत्राय महते ज्यैष्ठयाय महते राजाय महते जानराजाय महते विश्वस्य भुवनस्याधिपतये (ते०) आगस्त्यसैतत्सूक्तं कयाशुभीयंतस्य सामिधेनीष्वऽप्यनुब्रूयात्तस्य याज्यानुवाक्या स्यातामगस्त्यो वै मरुद्ध्यः शतमुक्ष्णः पृश्नीः प्रौक्षत्तानिन्द्रायालभेत तं मारुतः क्रुद्धा वज्रमुद्धृत्याभ्यपतत्स एतत्सूक्तमपश्यंस्तेनैनानशमयद्यदेतदनूच्यते शान्त्यै ॥ इति ग्रहेष्टब्राह्मणं ॥ २८ ॥

## अथ नक्षत्रयज्ञः ॥ २९ ॥

अग्नेर्देवा इहावह जज्ञानो वृक्तु बर्हिषि, असि होता न ईड्यः[1] ॥
अगन्म महो नमसा यविष्ठं यो दीदाय, समिद्धः सुदुरोणे[2] ॥
चित्रभानुं रोदसी अन्तरुर्वीं स्वाहुतम्, विश्वतः प्रत्यहुतम्[3] ॥

मेधाकारं विदथस्य प्रसाधनमग्निं होतारं, परिभूतमम्मतिम्ँ ॥ त्वामर्भस्य हविषा समानमित्त्वा महो वृणते नान्यं त्वत्ँ ॥ मनुष्यत्वा निधीमहि मनुष्यत्समिधीमहि । अग्ने मनुष्यदग्निरो देवान्देवायते यजँ ॥ अग्निर्हि वाजिनं विशे ददाति विश्वचर्षणिः । अग्नेराये स्वाभुवं स प्रीतो याहिमिषं स्तोतृभ्य आभरँ ( यजुः ) अग्निर्देवता कृत्तिकानक्षत्रं, प्रजापतिर्देवता रोहिणीनक्षत्रं, मरुतो देवता इण्वकानक्षत्रं, रुद्रो देवता बाहुर्नक्षत्रं, अदितिर्देवता पुनर्वसुर्नक्षत्रं, बृहस्पतिर्देवता तिष्योनक्षत्रं, सर्पो देवता आश्लेषानक्षत्रं, पितरो देवता मघानक्षत्रं, भगो देवता पूर्वफाल्गुनीनक्षत्रं, अर्यमा देवता उत्तरफाल्गुनीनक्षत्रं, सविता देवता हस्तो नक्षत्रं, त्वष्टा देवता चित्रानक्षत्रं, वायुर्देवता धनिष्ठानक्षत्रं, इन्द्राग्नीदेवता विशाखानक्षत्रं, मित्रोदेवताऽनूराधानक्षत्रं, इन्द्रोदेवता ज्येष्ठानक्षत्रं, निर्ऋतिर्देवता मूलं नक्षत्रं, आपो देवता पूर्वाषाढानक्षत्रं, विश्वेदेवा देवता उत्तराषाढानक्षत्रं, ब्रह्मा देवता अभिजिन्नक्षत्रं, विष्णुर्देवता अश्वत्थोनक्षत्रं, वसवो देवता श्रविष्ठानक्षत्रं, वरुणो देवता शतभिषङ्नक्षत्रं, अजैकपाद्देवता पूर्वप्रोष्ठपदानक्षत्रं, अहिर्बुध्न्योदेवता उत्तरप्रोष्ठपदानक्षत्रं, पूषादेवता रेवतीनक्षत्रं, अश्विनौदेवता अश्विनीनक्षत्रं, यमोदेवता अपभरणी नक्षत्रं ( ते० ) अग्नेरुचः स्थ प्रजापतेः सोमस्य धातुर्भूयासं प्रजनिषीय तेन । ब्रह्मणा

तेन च्छन्दसा तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदत स्वाहा ॥ (अथ नक्षत्रदेवानामृचः) ॥ कृ। अग्निर्मूर्धा०। रो। हिरण्यगर्भः०। मृ। मरुतो यद्ध वो दिवः सुम्नायन्तो हवामहे, अतून् उपगन्तन। आ। मृळानो रुद्रो तन्नो०। पुं। सुत्रामाणं पृथिवीं द्यामनीहसा सुशर्माणमदितिं सुप्रणीतिम्। दैवीं नावं सुरित्रामनागसमस्रवन्तीमारुहेमा स्वस्तये। ति। तव श्रियेऽग्यजिही०। अश्ले। नमो अस्तु सर्पेभ्यो०। म। अहं पितॄन्०। पूफा। सदा सुगः पित्तमां अस्तु पन्थामध्वा देवो ओषधीः संपिपृक्त। भगो मे अग्ने सख्येनाऽसमृद्ध्या तद्रायो अस्यां सदनं पुरुक्षोः। उफा। यत्ते अर्यमन्बहवो देवयानाः०। ह। तत्सवितुर्वृणीमहे वयं देवस्य भोजनम्। श्रेष्ठांसन्नधातमं तुरं भगस्य धीमहि। चि। य इमे द्यावापृथिवी जनित्री रूपैरपिंशुद्भुवनानि विश्वा। तमद्यहोतरिषितो यजीयान्देवं त्वष्टारमुत यक्षिविश्वान्। स्वा। वायुरग्रेगा यज्ञप्रीस्साकं गर्मनसा यज्ञम्। शिवोनियुद्भिः शिवाभिः। वि। इन्द्राग्नी रोचना दिवः परिवाजेषु भूषथः। तद्वाञ्चेति प्रवीर्यम्। अनू। मित्रो जनन्यातयति प्रजानां मित्रो दधार पृथिवीमुत द्याम्। मित्रः कृष्टीरनिमिषाभिचष्टे मित्राय हव्यं घृतवद्विधेम। ज्ये। इन्द्रः सुत्रामा सुवा अयोभिः सम्मृळीको भवतु विश्ववेदाः। बाधतान्द्वेषो अभयं कृणोतु सुवीर्यस्य पतयः स्याम। मू। यन्ते देवे निर्ऋति०। पूषा। शन्नो देवी०। उषा।

विश्वे देवा ऋता वृधा ऋतुभिर्हवनश्रुतः । जुषन्तां युज्यम्पयः । अभि । ब्रह्म जज्ञानं० । श्र । वषट् ते विष्ण० । ध । आ मे ग्रहा भवन्त्वा प्रजा म, आ मा यज्ञो विशतु वीर्यवान् । आपो देवीर्यज्ञिया मा विशन्तु सहस्रस्य माभूमा माप्रहासीत् । शत । इमं मे वरुण श्रुधी० । पूभा । उप प्रागाच्छमानं वाज्यर्वा देवद्रीचा मनसा दीध्यानः । अजः पुरो नीयते नाभिरस्यानु पश्चात्कवयो यन्ति रेभाः । उभा । अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिम्परिबाधमानः । हस्तघ्नो विश्वावयनानि विद्वान्पुमान्पुमांसं परिपातु विश्वतः । रे । पूषा गा अन्वेतु नः पूषा रक्षन्त्वर्वतः । पूषा वाजं सनेतु नः । अश्वि । प्र वदास्याग्रश्विना अवोचमस्य पतिः स्यां सुगवः सुवीरः । उत पश्यन्नश्नुवन्दीर्घमायुष्मांस्तमिवेज्जनिमानञ्जिगम्याम् । भ । यमो दाधार० ॥ इति नक्षत्रयज्ञः ॥ इति समिदन्नाज्यभागः प्रथमः ॥ २९ ॥

## अथ यवतण्डुलभागः ३० ॥

( गायत्रीब्राह्मणमऽनु ) अध्वर्योयं यज्ञो० ॥ धनुनागा० इत्यन्तं (हुत्वा)तर्पणं अनेन० महागणपतिः । कुमारः, श्रीः, सरस्वती, लक्ष्मीः, विश्वकर्मा, द्वार्देवताः प्रजापतिः ब्रह्मा, कलशदेवताः, ब्रह्मविष्णुमहेश्वरदेवताः, चातुर्वेदेश्वराः, सानुचराः, ऋतुपतिर्नारायणः । दुर्गा, त्र्यम्बकः, वरुणः यज्ञपुरुषः, अग्निष्वात्तादयः पितृगणयागदेवताः । (प्रधानदेवताक्रमेण) भगवान्वासुदेवः ८ भवोदेवः ८ विनायकः ८ क्लींकांकुमारः

८ ह्रांह्रींसः सूर्यः ८ भगवती अमा ८ अभयंकरी देवी० इह राष्ट्राधिपतिरमुकभैरवः । इन्द्रो वज्रहस्तः, अग्निः शक्तिहस्तः, यमो दण्डहस्तः, नैर्ऋतिः खड्गहस्तः, वरुणः पाशहस्तः, वायुर्ध्वजहस्तः, कुबेरो गदाहस्तः, ईशानस्त्रिशूलहस्तः, ब्रह्मा पद्महस्तः, विष्णुश्चक्रहस्तः, अनन्तादयोऽष्टौ कुलनागदेवताः प्रीयन्तां प्रीताः सन्तु ॥ ३० ॥

## अथ सूक्तानि ॥ ३१ ॥

तत्रादौ अग्न्यादित्यसूक्तम् ॥ अग्निस्तुविश्रवस्तमं तुविब्रह्माणमुत्तमम् । अतूर्तं श्रावयत्पतिं पुत्रं ददाति दाशुषे ॥ आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेन देवो याति भुवनानि पश्यन् ॥ "एकोऽनेकः सुसूक्ष्मः सकलजनहृदामन्तरस्थः परोक्षः स्थूलोऽसौ पञ्चवक्त्रो वरशुकवहनः शक्तिहस्तस्त्रिनेत्रः । सप्तार्चिः सप्तजिह्वस्त्रिभुवनजननस्थानसंहारकारी दीप्तः प्रत्यक्षदेवः स भवतु हुतभुक्सर्वकामप्रदो नः" ॥ ( अग्निर्नवमधुच्छन्दा वैश्वामित्रो, वायो वायव्यैन्द्रवायव,मैत्रावरुणस्तृचा, अश्विना द्वादशा,ऽश्विनैन्द्रवैश्वदेवसारस्वताः सप्तैताः प्रउगदेवताः सर्वप्रकृतिनो दश ॥ ) अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्, होतारं रत्नधातमम् ॥१॥ अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत, स देवाँ एह वक्षति ।२। अग्निना रयिमश्नवत्पोषमेव दिवे दिवे, यशसं वीरवत्तमम् ॥३॥ अग्नेयं यज्ञमध्वरं, विश्वतः परिभूरसि, स इद्देवेषु गच्छति

॥ ४ ॥ अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः, देवो देवे-
भिरागमत् ॥ ५ यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि, तवे-
त्तत्सत्यमङ्गिरः ॥ ६ ॥ उप त्वाग्ने दिवे दिवे दोषावस्तर्धिया
वयम्, नमो भरन्त एमसि ॥ ७ ॥ राजन्तमऽध्वराणां गोपा-
मृतस्य दीदिविम्, वर्धमानं स्वे दमे ॥ ८ ॥ स नः पितेव
सूनवेऽग्ने सूपायनो भव, सचस्वा नः स्वस्तये ॥ ९ ॥ वायवाऽ-
याहि दर्शते मे सोमो अरं कृताः, तेषां पाहि श्रुधी हवम् ॥१०॥
वाय उक्थेभिर्जरन्ते त्वामच्छा जरितारः, सुतसोमा अहर्विदः
॥ ११ ॥ वायो तव प्रपृञ्चती धेना जिगाति दाशुषे, उरूची
सोमपीतये ॥ १२ ॥ इन्द्रवायू इमे सुता उपप्रयोभिरागतम्,
इन्द्रवो वामुशन्ति हि ॥ १३ ॥ वायविन्द्रश्च चेतथः सुतानां
वाजिनीवसू, तावा यातमुपद्रवत् ॥ १४ ॥ वायविन्द्रश्च
सुन्वत आयातमुप निष्कृतम्, मक्ष्वित्था धिया नरा ॥ १५ ॥
मित्रं हुवे पूतदक्षं वरुणं च रिशादसम्, धियं घृताचीं साध-
र्ता ॥ १६ ॥ ऋतेन मित्रावरुणावृतावृधावृतस्पृशा । क्रतुं बृह-
न्तमाशाथे ॥१७॥ कवीनो मित्रावरुणा तुविजाता उरुक्षया,
दक्षन्दधाते अपसम् ॥ १८ ॥ अश्विना यज्वरीरिषो द्रवत्पाणी
शुभस्पती, पुरुभुजा चनस्यतम् ॥ १९ ॥ अश्विना पुरुदंससा
नराशं वीरया धिया, धिष्ण्यावनतङ्गिरः ॥ २० ॥ दस्रा युवा-
कवा सुता नासत्या वृक्तबर्हिषा, आयातं रुद्रवर्तिनी ॥२१॥

इन्द्राऽयाहि चित्रभानो सुता इमे त्वायवः, अण्वीभिस्तना पूतासः ॥ २२ ॥ इन्द्राऽयाहि धियेषितो विप्रजूतः सुतावतः, उप ब्रह्माणि वाघतः ॥ २३ ॥ इन्द्राऽयाहि तूतुजान उप ब्रह्माणि हरिवः, सुते दधिष्व नश्चनः ॥२४॥ ओमासश्चर्षणी-धृतो विश्वे देवास आगत, दाश्वांसो दाशुषः सुतम् ॥ २५ ॥ विश्वेदेवासो अप्तुरः सुतमागन्त तूर्णयः । उस्रा इवासुसराणि ॥ २६ ॥ विश्वे देवासो अस्रिध एहि मायासो अद्रुहः, मेधं जुषन्त वह्नयः ॥ २७ ॥ पावका नः सरस्वती वाजेभिर्वाजि-नीवती, यज्ञं वष्टुधियां वसुः ॥ २८ ॥ चोदयत्री सूनृतानां चेतन्ती सुमतीनां, यज्ञन्दधे सरस्वती ॥ २९ ॥ महो अर्णः सरस्वती प्रचेतयति केतुना, धियो विश्वा विराजति ॥ ३० ॥

( इत्यृग्वेदेऽग्निसूक्तं ॥ अथ यजुषि, अग्निसूक्तं) ॥ ("ईळे अग्नि-मित्याङ्गिरसाधाय्या आग्नेयं गायत्रम्)"ईळे अग्निं विपश्चितं गिरा यज्ञस्य साधनम्, श्रुष्टीवानं धितावानम् । अग्ने शकेम ते वयं यमं देवस्य वाजिनः, अतिद्वेषांसि तरेम । पृथुपाजा अमर्त्यो घृतनिर्णिक्स्वाहुतः, अग्निर्यज्ञस्य हव्यवाट् । तं सबाधो यत-स्रुच इत्था धिया यज्ञवन्तः, आ चक्रुरग्निमूतये । नवं नूस्तो-ममग्नये दिवः श्येनाय जीजनत्, वस्वः कुविद्वनाति नः । स्पार्हा यस्य श्रियो दृशे रयिर्वीरवतो यथा, अग्ने यज्ञस्य चेततः । उप त्वा रण्वसन्दृशं प्रयस्वन्तः सहस्कृत, अग्ने संसृज्महे गिरः ।

उप छायामिव घृणेरगन्म शर्मते वयम्, अग्ने हिरण्यसन्दृशः। अग्ने मृळ महाँ असि य ईमा देवयुञ्जनम्, इयेथ बर्हिरासदम्। स मानुषीषु दूळभो विक्षु प्रावीरमर्त्यः, दूतो विश्वेषां भुवत्। और्वभृगवच्छुचिमप्नवानवदा हुवे, अग्निं समुद्रवाससम्। आसवं सवितुर्यथा भगस्येव भुजिं हुवे, अग्निं०। हुवे वातस्वनं कविं पर्जन्यक्रन्द्यं सहः, अग्निं०। उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः, वायोरनीके अस्थिरन्। यस्य त्रिधात्ववृतं बर्हिस्तस्थावसन्दिनम्, आपश्चिन्निदधा पदम्। अग्निर्मूर्धा। उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते, तव ज्योतींष्यर्चयः। ईशिषे वार्यस्य हि दात्रस्याग्ने स्वर्पतिः, स्तोता स्यां तव शर्मणि। त्वामग्ने मनीषिणस्त्वां हिन्वन्ति चित्तिभिः, त्वां वर्धन्तु नो गिरः। अदब्धस्य सुधावतो दूतस्य रेभतः सदा, अग्ने सख्यं वृणीमहे। अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिःकविः, शुची रोचत आहुतः॥ (इति यजुषि, अग्निसूक्तं॥ अथ ऋग्वेदे सूर्यसूक्तं) प्रत्यक्षदेवं विषदं सहस्रमरीचिभिः शोभितभूमिदेशम्। सप्ताश्वगं सद्ध्वजहस्तमाद्यं देवं भजेऽहं मिहिरं हृदब्जे॥ ( उदुत्यं सप्तोना सौर्य नवाद्या गायत्र्योऽन्त्यस्तृचो रोगघ्नोऽन्त्योऽर्धर्चो द्विषद्द्वेष उपनिषत् ) उदुत्यं जातवेदसं देवं वहन्ति केतवः, दृशे विश्वाय सूर्यम् ॥ १ ॥ अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः, सूराय विश्वचक्षुसे ॥ २ ॥ अदृश्रनस्य केतवो विरश्मयो जनां अनु,

भ्राजन्तो अग्नयो यथा ॥ ३ ॥ तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य, विश्वमाभासि रोचनम् ॥४॥ प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान्, प्रत्यङ्विश्वं स्वान्दृशे ॥५॥ येना पावक चक्षसाभूरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि ॥ ६ ॥ विद्यामेषि रजस्पृथ्वहा मिमानो अक्तुभिः, पश्यञ्जन्मानि सूर्य ॥७॥ सप्त त्वा हरितो रथे वहन्ति देव सूर्य, शोचिष्केशं विचक्षण ॥ ८ ॥ अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः, ताभिर्याति स्वयुक्तिभिः ॥ ९ ॥ उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ १० ॥ उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् । हृद्रोगं मम सूर्य हरिमाणं च नाशय ॥११॥ शुकेषु मे हरिमाणं रोपणाकासु दध्मसि । अथो हारिद्रवेषु मे हरिमाणं निदध्मसि ॥ १२ ॥ उदगादयमादित्यो विश्वेन सहसा सह । द्विषन्तं मह्यं रन्धयन्मो अहं द्विषतेरधम् । ॥ १३ ॥ समैक्षिषोर्ध्वमहसा आदित्येन महीयसा । अहं स्यशस्विनां यशो विश्वा रूपाण्यादधे ॥१४॥ उद्यन्नद्यविनोभज पिता पुत्रेभ्यो यथा । दीर्घायुत्वस्य हेषिषे तस्य नो धेहि सूर्य ॥ १५ ॥ उद्यन्तं त्वा मित्रमह आरोहन्तं विचक्षण । पश्येम शरदः शतं जीवेम शरदः शतम् ॥ १६ ॥ (इत्यृग्वेदे सूर्यसूक्तं) । अथ यजुषि । अच्छिन्नाहुतिर्देया ॥ उदुत्यमिति, षडर्चमादित्यस्यायं नोऽग्नेर्ब्रह्मणः ॥ उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे

विश्वाय सूर्यम् ॥ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुण-
स्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्त-
स्थुषश्च ॥ द्यां गच्छ स्वर्गच्छ रूपो वो रूपेणाभ्यागां वयसा
वयस्तुथो वो विश्ववेदा विभजतु वर्षिष्ठेऽधिनाके एतत्ते अग्ने
राध एति सोमच्युतं तन्मित्रस्य पथा नयर्तस्य पथा प्रेत चन्द्र-
दक्षिणा ब्राह्मणमद्यर्ध्यासं पितृमन्तं पैतृमत्यमृषिमार्षेयँ सुधा-
तुदक्षिणम् ॥ अयं नो अग्निर्वरिवस्कृणोत्वयं मृधः पुर एतु
प्रभिन्दन्, अयं शत्रूञ्जयतु जर्हृषाणोऽयं वाजञ्जयतु वाजसातौ॥
वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पयो अघ्न्यासु । हृत्सु क्रतुं
वरुणो विक्ष्वग्निं दिवि सूर्यमदधात्सोममद्रौ ॥ वि स्वः पश्य
व्यन्तरिक्षं यतस्व सदस्यैरस्मद्राता मधुमती देवत्रा गच्छ प्रदा-
तारमाविशानवहायास्मान्देवि दक्षिणे देवयानेन पथायती
सुकृतांल्लोके सीदतन्नौ संस्कृतम् ॥ कदाचन स्तरीरसि नेन्द्र
सश्चसि दाशुषे । उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य
पृच्यते, उपयाम गृहीतोस्यादित्येभ्यस्त्वा ॥ १ ॥ कदाचन प्रयुच्छ-
स्युभे निपासि जन्मनी, तुरीयादित्यसवनं त इन्द्रियमातस्था-
वमृतं दिवि, उपयाम गृही० ॥ २ ॥ यज्ञो देवानां प्रत्येति सुम्न-
मादित्यासो भवता मृळयन्तः । आवोऽर्वाची सुमतिर्ववृत्या-
दँहोश्चिद्या वरिवो वित्तरासत्, उपयाम गृ० ॥ ३ ॥ विवस्वान्ना-
दित्यैष ते सोमपीथस्तस्मिन्मन्दस्व या दिव्या वृष्टिस्तया त्वा

श्रीणामि । अदब्धेभिः सवितः पायुभिष्ट्वँ शिवेभिरद्य परिपाहि नो गयम् । हिरण्यजिह्वः सुविताय नव्यसे रक्षा माकिर्नो अघशँस ईशत, उपयाम गृहीतोऽसि देवाय त्वा सवित्रे उपयाम गृहीतोसि सुशर्मासि सुप्रतिष्ठानो बृहदुक्षे नम एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ ॥ ॐनम आदित्याय, शिवचर्याधराय, सहस्रकिरणाय, कमलबान्धवाय, ग्रहाधिपतये, यजमानवरप्रदाय स्वाहा ॥ ( तर्पणं ) उदयंस्तु महाभानुस्तेजसा चाभयंकरः । सहस्ररश्मिदीप्तश्च ह्यादित्यः प्रीयतां मम ॥ अनेन मंत्रहोमेन० अग्न्यादित्यौ सानुचरौ प्रीयेतां प्रीतौ मे भवेताम् ॥ इत्यग्न्यादित्यसूक्तं ॥ ३१ ॥

अथ वरुणचन्द्रमःसूक्तम् ॥ ३२ ॥

एवा वन्दस्व वरुणं बृहन्तं नमस्या धीरममृतस्य गोपाम् । स नः शर्म त्रिवरूथं वयं सत्पातं नो द्यावापृथिवी उपस्थे ॥ या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु । तेभिर्नो विश्वैः सुमना अहेळन्राजन्सोम प्रति हव्या गृभाय ॥ श्यामं सौम्यरुचिं महामुनिनुतं यादोगणैः संस्तुतं, पाशं दण्डवरं दधानममलं दोर्भ्यां गजस्थं विभुम् । आशापाशशतघ्नमञ्चितदृशं मानोन्नतं यादसां राजानं प्रमदान्वितं त्वभयदं देवं भजेहं सदा ॥ ॥ शङ्खप्रभमेणप्रियं शशाङ्कमीशानमौलिस्थितमीड्यरूपम् । तमोपतिमम्बुजयुग्महस्तं ध्याये हृदब्जे शशिनं ग्रहेशम् ॥ स्वादो पञ्चोनाः प्रगाथः सौम्यं त्रैष्टुभं

पञ्चमी जगती ॥ ॥ स्वादोरभक्षि वयसः सुमेधाः स्वाध्यो वरिवोवित्तरस्य । विश्वेयं देवा उत मर्त्यासो मधु ब्रुवन्तो अभि सञ्चरन्ति ॥ १ ॥ अन्तश्च प्रागा अदितिर्भवास्यवयाता हरसो दैव्यस्य । इन्दविन्द्रस्य सख्यं जुषाणः श्रौष्टीव धुरमनु राय ऋध्याः २ अपाम सोमममृता अभूमाऽगन्म ज्योतिरविदाम देवान् । किं नूनमस्मान्कृणवदरातिः किमु धूर्तिरमृतमर्त्यस्य ३ शन्नोभवहृद आपीत इन्द्रो पितेव सोम सूनवे सुशेवः । सख्येव सख्य उरुशँस धीरः प्राण आयुर्जीवसे सोम तारीः ॥ ४ ॥ इमे मा पीता यशसा उरुष्यवो रथं न गावः सुमनाह पर्वसु । ते मा रक्षन्तु विस्रासश्चरित्रादुत मा स्रामाद्याऽवयन्त्विन्दवः ॥ ५ ॥ अग्निर्नमा मथितं सन्दिदीपः प्रचक्षय कृण्वहि वस्यसोनः । अथा हिते मद आ सोम मन्ये रेवाँ इव प्रचरा पुष्टिमच्छा ॥ ६ ॥ इषिरेण ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव रायः । सोम राजन्प्राण आयूँषि तारीरहानीव सूर्यो वासराणि ॥ ७ ॥ सोम राजन्मृळयानः स्वस्ति तव स्मसि व्रत्यास्तस्य विद्धि । अलर्ति दक्ष उत मन्युरिन्दो मा नो अर्यो अनुकामं परा दाः ॥ ८ ॥ त्वं हि नस्तन्वः सोम गोपा गात्रे गात्रे नृषुसत्था नृचक्षाः । यत्ते वयं प्रमिनाम व्रतानि स नो मृळास्वषाया देववस्याः ॥ ९ ॥ ऋदूदरेण सख्या सचेययो मा न रिष्येद्धर्यश्वपीतः । अयं यः सोमो न्यधाय्यस्मै तस्मा इन्द्रं प्रतिरमेम्यायुः

॥ १० ॥ अपत्या अस्थुरनिरा अमीवा निरत्रसन्तमिषीचीरभैषुः । आ सोमो असाँ अरुहद्विहाया अगन्म यत्र प्रतिरन्त आयुः ॥ ११ ॥ यो न इन्दुः पितरो हृत्सु पीतोऽमर्त्यो मर्त्याँ आविवेश । तस्मै सोमाय हविषा विधेम मृळीके अस्य सुमतौ स्याम ॥ १२ ॥ त्वं सोम पितृभिः संविदानोऽनु द्यावापृथिवी आततन्थ । तस्मै त इन्दो हविषा विधेम वयं स्याम पतयो रयीणाम् ॥ १३ ॥ त्रातारो देवा अधि वोचता नो मा नो निद्रा ईशत मोत जल्पिः । वयं सोमस्य विश्वाह प्रियासः सुवीरसो विदथमा विदेम ॥ १४ ॥ त्वं नः सोम विश्वतो वयोधास्त्वं स्वर्विदा विशा नृचक्षाः । त्वं न इन्द ऊतिभिः सजोषाः पाहि पश्चात्तादुतवा पुरस्तात् ॥ १५ ॥ इत्यृचि ॥ अथ यजुषि ॥ ( प्रवेदसे इति वेदसो वन्दारोर्वैष्णवस्य शेषस्तिस्रः पाप्मापहस्य ) प्रवेदसे कवये वेद्याय वचो वन्दारु वृषभाय वृष्णे । यतोभयमभयं तन्नो अस्त्वव देवानां यजेहेड्यानि ॥ समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन्हव्या जुहोतन ॥ उदग्ने तव तद्घृतादर्चीरोचत आहुतम्, निंसानं जुह्वो मुखे ॥ उप त्वा जुह्वो मम घृताचीर्यन्तु हर्यत, अग्ने हव्या जुषस्व नः ॥ प्रजा अग्ने संवासयाशाश्च पशुभिः सह । राष्ट्राण्यस्मा आधेहि यान्यासन्सवितुः सवे ॥ संव्वः सृजामि हृदयं संसृष्टं मनो अस्तु वः । संसृष्टास्तन्वः सन्तु वः संसृष्टः प्राणो अस्तु वः ।

संघ्याः वः प्रियास्तन्वः सं प्रिया हृदयाणि वः । आत्मा वो अस्तु सं प्रियः सं प्रियास्तन्वो मम ॥ यो अश्वत्थः शमीगर्भ आरुरोह त्वय्यपि। तन्ते गृह्णामि यज्ञियैः केतुभिः सह ॥ मयि गृह्णाम्यहमग्ने अग्निं रायस्पोषेण सह वर्चसेह देवाः । मयि प्रजां मयि पुष्टिं दधामि मदेमशतहिमाः सुवीराः ॥ योनो अग्निः पितरो हृत्स्वन्तरा मर्त्यों मर्त्यां आविवेश । तमात्मनि परि गृह्णीमहे वयं मैषो अस्मानवहाय परागान्मा वयमेतमऽवहाय परागम ॥ मही विश्पती सदनी ऋतस्यार्वाची एतं धरुणी रयीणाम् । अन्तर्वती जन्यं जातवेदसमध्वराणां जनयन्तं पुरोगाम् ॥ उत्समुद्राँ मधुमाँ ऊर्मिरागात्साम्राज्याय प्रतरन्दधानः। अमी च ये मघवानो वयं चेषमूर्जं मधुमत्सम्भरेम ॥ इयत्यग्र आसीरदो देवि प्रथमाना पृथग्यत् । देवैर्नुत्ता व्यसर्पो महित्वा अदृंहथाः शर्कराभिस्त्रिविष्टपि ॥ अजयो लोकान्प्रदिशश्चतस्रः । उदेह्यग्ने अधि मातुः पृथिव्या विश आविश महतः सधस्थात् । आशुन्त्वाजौ दधिरे देवयन्तो हव्यवाहं भुवनस्य गोपाम् ॥ यदीदं दिवो यदि वा पृथिव्याः सम्बभूव सुकृतो रराणयोः । तयोः पृष्टे सीदतु जातवेदाः प्रजामस्मभ्यं जनयन्रयिं च ॥ चन्द्रमग्निं चन्द्ररथँ हरिव्रतं वैश्वानरमप्सुषदँ स्वर्विदम् । विगाहं तूर्णिं तविषीभिरावृतं तूर्णिं देवा स इह सुश्रियन्दधुः ॥ यत्पृथिव्या अनामृतं सम्बभूवत्वे सचा । तदग्निरग्नयेददत्तस्मिन्नाधी-

यतामयम् ॥ यदन्तरिक्षस्य यद्दिवो अनामृतँ सम्बभूवत्वेसचा । तदग्निरग्नये ददत्तस्मि०॥ ॐ नमः सोमाय, उमाचर्याधराय, षोडशकलाधिपतये, नक्षत्राधिपतये, कुमुदबान्धवाय, परमामृतधारिणे, यजमानवरप्रदाय स्वाहा ( तर्पणं ) द्विजराजो महापुण्यस्तारापतिर्विशेषतः । ओषधीनां च यो राजा स सोमः प्रीयतां मम ॥ अनेन मंत्रहोमेन० वरुणचन्द्रमसौ सानुचरौ प्रीयेतां प्रीतौ मे भवेताम् ॥ इति वरुणचन्द्रमःसूक्तम् ॥ ३२ ॥

## अथ कुमारभौमसूक्तम् ॥ ३३ ॥

तँ युवन्देवावश्विनौ कुमारं साहदेव्यम्, दीर्घायुषं कृणोतन ॥ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्, अपां रेतांसि जिन्वति ॥ २ ॥ षड्वक्रं दीर्घबाहुं सुरवरनमितं पार्वतीनन्दनं तं दोर्भ्यां शक्तिं वहन्तं ध्वजमपि च सदा दिव्यरूपं कुमारम् । नृत्यन्मत्तमयूरवाहनगतं दैत्यान्तकं सिद्धिदं नानारत्नविभूषितं हरसुतं होमे भजेऽहं सदा ॥ ॥ प्रतप्तगाङ्गेयनिभं ग्रहेशं सिंहासनस्थं कमलासिहस्तम् । सुरासुरैः पूजितपादपद्मं भौमं दयालुं हृदये स्मरामि ॥ अग्निर्होता दशगायत्रं ऋषिर्बोधद्यदाभ्यां सोमकं साहदेव्यमभ्यवदत्पराभ्यामस्याश्विनावाऽयुरयाचत ॥ अग्निर्होता नो अध्वरे वाजी सन्परिणीयते, देवो देवेषु यज्ञियः ॥ १ ॥ परि त्रिविष्ट्यध्वरं यात्यग्नी रथीरिव, आ देवेषु प्रियो दधत् ॥ २ ॥ परि वाजः पतिः कविरग्निर्हव्यान्यक्रमीत्, दधद्रत्नानि दाशुषे

॥ ३ ॥ अयं यः सृञ्जये पुरो दैववाते समिध्यते, द्युमाँ अमि-
त्रदंभनः ॥ ४ ॥ अस्य गा वीर ईवतोऽग्नेरीशीत मर्त्यः,
तिग्मजम्भस्य मीळ्हुषः ॥ ५ ॥ तमर्वन्तं न सानसिमरुषं न
दिवः शिशुम्, मर्मृज्यन्ते दिवे दिवे ॥ ६ ॥ बोधद्यन्मा हरि-
भ्यां कुमारः साहदेव्यः, अच्छानहूत उदरम् ॥ ७ ॥ उत त्या
यजता हरी कुमारात्साहदेव्यात्, प्रयता सद्य आददे ॥ ८ ॥
एष वां देवावश्विना कुमारः साहदेव्याः, दीर्घायुरस्तु सोमकः
॥ ९ ॥ तं युवं देवावश्विना कुमारंसाहदेव्यम्, दीर्घायुषं
कृणोतन ॥ १० ॥ इति ऋग्वेदे ॥ अथ यजुषि ( जुष्टो दमूना
इत्यनूच्यमानो ब्रह्मणः ) जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञ-
मुप याहि विद्वान् । विश्वा अग्ने अभियुजो विहत्या शत्रूय-
तामाभरा भोजनानि ॥ अग्ने शर्ध महते सौभगाय तव द्युम्ना-
न्युत्तमानि सन्तु । संजास्पत्यं सुयममाकृणुष्व शत्रूयतामभि
तिष्ठा महाँसि ॥ सँसमिद्युवसे वृषन्नग्ने वीश्वान्यर्य आ । इळ-
स्पदे समिध्यसे सनो वसून्या भर ॥ सखायः सं वः सम्य-
ञ्चमिषँ स्तोमं चाग्नये । वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सरस्वते ॥
अग्निस्तुविश्रवस्तमं तुविब्राह्मणमुत्तमम् । अतूर्तं श्रावयत्पतिं
पुत्रं ददाति दाशुषे । अग्निर्ददाति सत्पतिं सासाह योयुधा
नृभिः । अग्निरत्यँ रघुष्यदं जेतारमपराजितम् ॥ भद्रो अग्ने
इमो अग्ने ॥ उत नो ब्रह्मन्नविष उक्थेषु देवहूतमः । शं न

शोचा मरुद्वृधोऽग्ने सहस्रं सातमः ॥ नूनोराम्व सहस्रवत्तो-
कवत्पुष्टिमद्वसु । द्युमदग्ने सुवीर्यम् ॥ वर्षिष्ठमनुपक्षितं त्वां
चित्रः श्रवस्तमम् । त्वामग्ने हविष्मन्तो विपाजसा ॥ भवानो
अग्ने वितोत गोपा भवावयस्कृदुत नो वयोधाः । रास्वा च नः
सुमहो हव्यदातिं त्रास्वोचनस्तन्वो अप्रयच्छन् ॥ हव्यत्राहम-
भिमातिषाहँ रक्षोहनं पृतनासु जिष्णुम् । ज्योतिष्मन्तं दीद्यतं
पुरन्धिमग्निं स्विष्टकृतमाहुवेम ॥ ॥ स्विष्टमऽग्ने अभितद्गृणीहि
विश्वाश्च देव पृतना अभिष्याः । सुगं नु पन्थां प्रदिशन्निभाहि
ज्योतिष्मद्धेह्यजरं न आयुः ॥ सोमस्य मा तवसंवक्ष्यग्ने वह्निं
चकर्थ विदथे यजध्यै । देवाँ अच्छा दीद्यद्युञ्जे अग्निं शमाये
अग्ने तन्वँ जुषस्व ॥ श्रीणामुदारः । यच्चिद्धिते पुरुषत्रा यवि-
ष्ठाचित्तिभिश्चकृमा कच्चिदागः । कृधीष्वस्माँ अदितेरनागान्व्ये
नाँसि शिश्रथो विष्वगग्ने ॥ महश्चिदग्न एनसो अभीक ऊर्वा-
द्देवानामुत मर्त्यानाम् । मा ते सखायः सदमिद्रिषाम यच्छा
तोकाय तनयाय शं योः ॥ ॥ यं त्वा देवापिः शुशुचानो
अग्न आर्ष्टिषेणो मनुष्यः समीधे । विश्वेभिर्देवैरनुमद्यमानः प्र
पर्जन्यमीरया वृष्टिमन्तम् ॥ अग्ने बाधस्व वि मृधो वि दुर्गहा-
पामीवामप रक्षांसि सेध । अस्मात्समुद्राद्बृहतो दिवो नोऽपां
भूमानमुप नः सृजेह ॥ यथा ह त्यद्वसवो गौर्यं चित्पदि
षिताममुञ्चता यजत्राः । एवोष्वस्मन्मुञ्चता व्यँहः प्रतार्यग्ने

प्रतरं न आयुः ॥ त्रीण्यायूँषि तव जातवेदस्तिस्र आजानीरुषसस्ते अग्ने । ताभिर्देवानामवो यक्षि विद्वानथा भव यजमानाय शं योः ॥ पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँ ऋतुपते यजेह । ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतॄणामस्या यजिष्ठः ॥ आ देवानामपि पन्थामगन्म यच्छक्नवाम तदनु प्रवोढुम् । अग्निर्विद्वान्स यजात्सेदु होता सो अध्वरान्त्स ऋतून्कल्पयाति ॥ वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा । प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे ॥ स्वाध्वीमकर्देववीतिं नो अद्य यज्ञस्य जिह्वामविदाम गुह्याम् । स आयुरागात्सुरभिर्वसानो भद्रामकर्देवहूतिं नो अद्य ॥ अग्निर्होता न्यसीदद्यजीयानुपस्थे मातुः सुरभा उ लोके । युवा कविः पुरुनिष्ठ ऋतावा धर्ता कृष्टीनामुत मध्य इद्धः ॥ अग्निं दूतं पुरो दधे हव्यवाहमुप ब्रुवे । देवाँ आसादयादिह ॥ अग्निर्होता पुरोहितोऽध्वरस्य विचर्षणिः । स वेद यज्ञमानुषक् ॥ ॐनमोऽङ्गारकाय, कुमारव्रतधारिणे, महोग्रतेजसे, तीक्ष्णकिरणाय, धरासुताय शत्रुक्षयङ्कराय, रुद्रतनूजाय, यजमानवरप्रदाय स्वाहा ॥ ( तर्पणं ) येनार्जिता जगत्कीर्तिर्भूमिपुत्रेण शाश्वती । शत्रवश्च हता येन भौमेन महितात्मना । स प्रीयतां तु भौमोऽद्य तुष्टो भूयात्सदा मम ॥ अनेन मंत्रहोमेन० कुमारभौमौ सानुचरौ प्रीयेतां प्रीतौ मे भवेताम् ॥ इति कुमारभौमसूक्तम् ॥ ३३ ॥

## अथ विष्णुबुधसूक्तम् ॥३४॥

वषट् ते विष्ण आस आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥ बोधास्व मे मघवन्वाचमेमां यां ते वसिष्ठो अर्चति प्रशस्तिम्, इमा ब्रह्म साधमादे जुषस्व ॥ विष्णुं सर्वजनाश्रयं सुमुकुटं हारादिभूषान्वितं शान्तं श्यामवराननं सुरुचिरं दोर्भिश्चतुर्भिर्युतम् । शङ्खं चक्रमथारविन्दयुगलं कौमोदकीं बिभ्रतं देवं तं गरुडाश्रयं सुनयनं दिव्याङ्गभूषं भजे ॥ सोमात्मजं हंसगतं द्विबाहुं शङ्खेन्दुरूपमसिपाशहस्तम् । दयानिधिं भूषणभूषिताङ्गं बुधं स्मरे मानसपङ्कजेऽहम् ॥ विष्णोः षड्वैष्णवं हि प्रवोजागतं त्वैन्द्रश्चाद्यस्तृचो भव पञ्चाबोधि षडाश्विनं त्वन्ते त्रिष्टुभौ ॥ विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि । यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ १ ॥ प्रतद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ २ ॥ प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे । य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित्पदेभिः ॥३॥ यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति । य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ॥४॥ तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति । उरुक्रमस्य स हि बन्धुरित्था

विष्णोः पदे परमे मध्व उत्सः ॥ ५ ॥ ता वाँ वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि ॥६॥ प्र वः पातुमन्धसो धिया यते महे शूराय विष्णवे चार्चत । या सानूनि पर्वतानामदाभ्या महस्तस्थतुरर्वतेव साध्वना ॥ ७ ॥ त्वेषमित्था समरणं शिमीवतोरिन्द्राविष्णू सुतपा वामुरुष्यति । या मर्त्याय प्रतिधीयमानमित्कृशानोरस्तु रशनामुरुष्यथः ॥ ८ ॥ ता ईं वर्धन्ति मह्यस्य पौंस्यं नि मातरा नयति रेतसे भुजे । दधाति पुत्रोऽवरं परं पितुर्नाम तृतीयमधिरोचने दिवः ॥९॥ तत्तदिदस्य पौंस्यं गृणीमसीनस्य त्रातुरवृकस्य मीढुषः । यः पार्थिवानि त्रिभिरिद्विगामभिरुरुक्रमिष्टोरुगायाय जीवसे ॥१०॥ द्वे इदस्य क्रमणे स्वर्दृशोऽभिख्याय मर्त्यो भुरण्यति । तृतीयमस्य नकिरा दधर्षति वयश्चन पतयन्तः पतत्रिणः ॥११॥ चतुर्भिः साकं नवतिं च नवभिश्चक्रं न वृत्तँ वृतींरवीविपत् । बृहच्छरीरो विमिमान ऋक्वभिर्युवा कुमारः प्रत्येत्याहवम् ॥ १२ ॥ भद्रा मित्रो न शेव्यो घृतासुतिर्विभूतद्युम्न एवया उ सप्रथाः । अधा ते विष्णो विदुषा चिदर्ध्यः स्तोमो यज्ञश्च राध्यो हविष्मता ॥ १३ ॥ यः पूर्व्याय वेधसे नवीयसे सुमज्जानये विष्णवे ददाशति । यो जातमस्य महतो महि ब्रवत्सेदु श्रवोभिर्युज्यं चिदभ्यसत् ॥१४॥ तमुस्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्तन ।

आस्यजानन्तो नाम चिद्विवक्तनमहस्ते विष्णो सुमतिं भजा-
महे ॥ १५ ॥ तमस्य राजा वरुणस्तमश्विना क्रतुं सचन्त मारु-
तस्य वेधसः । दाधार दक्षमुत्तममहर्विदं व्रजं च विष्णुः सखिवाँ
अपोर्णुते ॥ १६ ॥ आ यो विवाय सचथाय दैव्य इन्द्राय
विष्णुः सुकृते सुकृत्तरः । वेधा अजिन्वत्त्रिषधस्थ आर्यमृतस्य
भागे यजमानमाभजत् ॥ १७ ॥ अबोध्यग्निर्ज्म उदेति सूर्यो
व्यूषाश्चन्द्रा मह्यावो अर्चिषा । आयुक्षातामश्विना यातवे रथँ
प्रासावीद्देवः सविता जगत्पृथक् ॥ १८ ॥ यद्युञ्जाथे वृषणम-
श्विना रथँ घृतेन नो मधुना क्षत्रमुक्षतम् । अस्माकं ब्रह्म पृत-
नासु जिन्वतं वयं धना शूरसाता भजेमहि ॥ १९ ॥ अर्वा-
ङ्त्रिचक्रो मधुवाहनो रथो जीराश्वो अश्विनोर्यातु सुष्टुतः ।
त्रिवन्धुरो मघवा विश्वसौभगः शंन आवक्षद्द्विपदे चतुष्पदे
॥ २० ॥ आ न ऊर्जं वहतमश्विना युवं मधुमत्या नः कशया
मिमिक्षतम् । प्रायुस्तारिष्टं नीरपांसि मृक्षतं सेधतं द्वेषो
भवत सचाभुवा ॥ २१ ॥ युवं ह गर्भं जगतीषु धत्थो युवं
विश्वेषु भुवनेष्वऽन्तः । युवमग्निं च वृषणावपश्च वनस्पती
रश्विनावैरयेथाम् ॥ २२ ॥ युवं हस्थो भिषजा भेषजेभिरथो
ह स्थो रथ्या रथ्येभिः । अथो ह क्षत्रमधि धत्थ उग्रा यो वां
हविष्मान्मनसा ददाश ॥ २३ ॥ इति ऋग्वेदे ॥ अथ यजुर्वेदे
( रथन्तरं रथेन वैष्णवं सर्वे वाजपेयमन्त्राः देवानामार्षम् ) रथन्तरँ

साम भवत्याशीय उज्जित्या इयं वै रथन्तरमस्यामेवाध्यभिषिच्यते, वियोनिर्वै वाजपेयो निरुक्तः सम्प्राजायत्यो निरुक्तसामा तेन वियोनिर्यदनिरुक्ताः प्रातःसवास्तेन स योनिरनिरुक्ताः प्रातःसवा अनिरुक्तः प्रजापतिः प्रजापतिमेवाप्नोति, वाजवतीभिर्मध्यन्दिने स्तुवन्त्यन्नं वै वाजोऽन्नाद्यस्यावरुद्ध्यै चित्रवतीभिरार्भवे पावमाने स्वर्गस्य लोकस्य समष्ट्या । आष्ट्रदंष्ट्रमुत्तमम्रुक्तानां भवत्युत्तरे एव स्तोत्रे अभिसन्तनोति, बृहत्साम भवति यद्वा अतिरिच्यतेऽमुन्तंल्लोकमभ्यतिरिच्यते, बृहत्त्वा अमुँल्लोकमाप्तुमर्हतीन्द्रियं वीर्यं बृहदिन्द्रियं एव वीर्ये प्रतितिष्ठति वैष्णवीषु शिपिविष्टवतीषु, स्तुवन्त्येषा वै प्रजापतेः पशुष्टास्तनूर्या शिपिविष्टवती, तस्माच्छिपिविष्टवतीषु स्तुवन्त्यतिरिक्तं वा एतदतिरिक्तं शिपिविष्टमतिरिक्तेनैवातिरिक्तमाप्नोति ॥ ॐ नमोबुधाय विष्णुव्रतधारिणे, रूपाधिपतये, महाबुद्धिशरीराय, सोमवंशजाय, यजमानवरप्रदाय, स्वाहा। तर्पणम् ) बुधो बुद्धिप्रदाता च सोमपुत्रो महाद्युतिः। आदित्यस्य रथे तिष्ठन्स बुधः प्रीयतां मम ॥ अनेन मंत्रहोमेन० विष्णुबुधौ सानुचरौ प्रीयेतां प्रीतौ मे भवेताम् ॥ इति विष्णुबुधसूक्तम् ॥ ३४ ॥

## अथ इन्द्राबृहस्पतिसूक्तम् ॥ ३५ ॥

त्रातारमिंद्रमवितारमिन्द्रं हवे हवे सुहवं शूरमिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः ॥ बृह-

स्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदय-
च्छवसर्तप्रजात तदस्मासु द्रविणं देहि चित्रम् ॥ उद्यत्सूर्या
युतरुचिनिभं मौलिरत्नांशुदीप्तं देवं पद्मासनिकरमजं नेत्रसाहस्ररम्यम् ।
हारानर्घ्यस्फुरदुरुमणिव्याप्तवक्षःस्थलं तं ध्याये देवैः प्रणमितपदं पूर्व-
दिक्पालमिन्द्रम् ॥ तेजोमयं शक्तित्रिशूलहस्तं सुरेन्द्रज्येष्ठस्तुतपाद-
पद्मम् । मेधानिधिं मत्स्यगतं द्विबाहुं गुरुं स्मरे मानसपङ्कजेऽहम् ॥
बृहस्पते बृहस्पतिर्ज्ञानं तुष्टाव नवमी जगती ॥ बृहस्पते प्रथमं वाचो अग्रं
यत्प्रैरत नाम धेयं दधानाः । यदेषां श्रेष्ठं यदरिप्रमासीत्प्रेणा
तदेषां निहितं गुहाविः ॥ १ ॥ सक्तुमिव तितउना पुनन्तो
यत्र धीरा मनसा वाचमक्रत । अत्रा सखायः सख्यानि जानते
भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥ २ ॥ यज्ञेन वाचः पदवीय
मायन्तामन्वविन्दन्नृषिषु प्रविष्टाम् । तामाभृत्याव्यदधुः पुरुत्रा
तां सप्त रेभा अभि सन्नवन्ते ॥ ३ ॥ उत त्वः पश्यन्न ददर्श
वाचमुत त्वः शृण्वन्न शृणोत्येनाम् । उत त्वस्मै तन्वं विसस्त्रे
जायेव पत्ये उषती सुवासाः ॥ ४ ॥ उत त्वं सख्ये स्थिरपी-
तमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु । अधेन्वा चरति माययैष वाचं
शुश्रुवामफलामपुष्पाम् ॥ ५ ॥ यस्तित्याज सचिविदं सखायं
न तस्य वाच्यपि भागो अस्ति । यदीं शृणोत्यलीकं शृणोति नहि
प्रवेद सुकृतस्य पन्थाम् ॥ ६ ॥ अक्षण्वन्तः कर्णवन्तः सखायो
मनोजवेष्वसमा बभूवुः । आदघ्नास उपकक्षास उ त्वे ह्रदा इव

स्नात्वा उ त्वे ददृश्रे ॥ ७ ॥ हृदा तष्टेषु मनसो जवेषु यद्ब्राह्मणाः संयजन्ते सखायः । अत्राह त्वं विजहुर्वेद्याभिरोहब्रह्माणो विचरन्त्यु त्वे ॥ ८ ॥ इमे ये नार्वाङ्न परश्चरन्ति न ब्राह्मणासो नसुतेकिरासः । त एते वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वते अप्रजज्ञयः ॥ ९ ॥ सर्वे नन्दन्ति यशसागतेन सभासाहेन सख्या सखायः । किल्बिषस्पृत्पितुषणिर्ह्येषामरं हितो भवति वाजिनाय ॥ १० ॥ ऋचां त्वः पोषमास्ते पुपुष्वान्गायत्रं त्वो गायति शक्करीषु । ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः ॥ ११ ॥ इति ऋग्वेदे ॥ अथ यजुषि ( इन्द्राय वाचं वदतेन्द्रस्य जगतो, दैवी वाचं प्रत्याज्यशीर्षमानस्यासुरेभ्य, आयुर्यज्ञेन कल्पतामित्यनुवाकद्वयं यावत्पुरुषस्य नारायणस्यार्षम् ) ॥ इन्द्राय वाचं वदतेन्द्राय वाचँ संवदतेन्द्रं वाजं जापयतेन्द्रं वाजं जय । आ मा वाजस्य प्रसवो जगम्यादा मा द्यावापृथिवी विश्वरूपे । आ मा गन्तां पितरा मातरा चा मा सोमो अमृतत्वेन गम्यात् ॥ एषा वः सा सत्या सं वागभूद्यामिन्द्रेण समदध्वम् । अजीजपत वनस्पतय इन्द्रं वाजं विमुच्यध्वम् ॥ वाजिनौ वाजिजितौ वाजं जित्वा बृहस्पतेर्भागमवजिघ्रतां वाजिनो वाजिजितो वाजं जिगीवांसो बृहस्पतेर्भागे निमृजतां पत्नी ॥ स्वोरोहावीहि स्वोरोहावेहि स्वोरोहाव स्वोरोहाव स्वोरोहौ ॥ आयुर्यज्ञेन कल्पतां, मनो यज्ञे०, प्राणो य०, चक्षुर्य०,

श्रोत्रं य०, वाग्यज्ञेन कल्पतां, आत्मा यज्ञेन०, ब्रह्मा य०, पृष्टं य०, यज्ञो यज्ञेन कल्पतां, स्वर्देवा अगन्म प्राजापतेः प्रजा अभूवन्नमृता अभूम ॥ वाजाय स्वाहा, प्रसवाय स्वाहा, पिजाय स्वाहा, क्रतवे स्वाहा, वाक्पतये स्वाहा, वसवे स्वाहा, स्वर्मौर्ध्नाय स्वाहा, मूर्ध्ने वैयशनाय स्वाहा, व्यश्नन आन्त्याय स्वाहा, अन्त्याय भौवनाय स्वाहा, भुवनस्य पतये स्वाहा, प्रजातये स्वाहा, अधिपतये स्वाहा, अन्नाय त्वा, वाजाय त्वा, वाजजित्यै त्वा ॥ ॐ नमो बृहस्पतये, ब्रह्मचर्याधराय, प्रजापालपतये, देवराज-पुरोहिताय, देवगुरवे, सुरमन्त्रिणे यजमानवरप्रदाय स्वाहा ॥ तर्पणं ॥ मेरुमूर्ध्नि समाक्रान्तो देवराजपुरोहितः। ज्ञाता यः सर्वशास्त्राणां स गुरुः प्रीयतां मम। अनेन मंत्रहोमेन० इन्द्राबृहस्पती सानुचरौ प्रीयेतां प्रीतौ मे भवेताम् ॥ इति इन्द्राबृहस्पतिसूक्तम् ॥ ३५ ॥

## अथ सरस्वतीशुक्रसूक्तम् ॥ ३६ ॥

सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमने। सरस्वतीं सुकृतो आह्वयन्ते सरस्वतीदाशुषे वार्यं धात् ॥ अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिवत्क्षत्रम्। ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ उद्यच्चन्द्रसहस्रकोटिसदृशीं पद्मानननां हंसगां वाग्देवीं सुमनोहरैर्भुजयुगैर्वीणां तथा पुस्तकम्। पद्मं चामृतपूर्णरत्नचषकं दिव्याम्बरैर्भूषितां सन्धार्य वरदां मनोहरतनुं वाग्देवतां चिन्तये ॥ १ ॥ सन्तप्तकाञ्च-

ननिभं द्विभुजं दयालुं पीताम्बरं धृतसरोरुहद्वन्द्वशूलम् । क्रौञ्चासनमसुरसेवितपादपद्मं शुक्रं स्मरे द्विनयनं हृदयाम्बुजेऽहम् ॥ २ ॥ इयं षड्भिना सारस्वतं त्रिजगत्यादिजगती त्रिष्टुबन्तम् ॥ इयमददाद्रभसमृणच्युतं दिवोदासं वध्र्यश्वाय दाशुषे । या शश्वन्तमाचखादावसं पणिं ताते दात्राणि तविषा सरस्वति ॥ १ ॥ इयं शुष्मेभिर्बिसखा इवारुजत्सानु गिरीणां तविषेभिरूर्मिभिः । पारावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमा विवासेम धीतिभिः ॥ २ ॥ सरस्वति देवनिदो निबर्हय प्रजां विश्वस्य बृसयस्य मायिनः । उत क्षितिभ्योऽवनीरविन्दो विषमेभ्यो अस्रवो वाजिनीवति ॥ ३ ॥ प्रणो देवी सरस्वती वाजेभिर्वाजिनीवति, धीनामवित्र्यवतु ॥ ४ ॥ यस्त्वा देवि सरस्वत्युपब्रूते धने हिते, इन्द्रं न वृत्रतूर्ये ॥ ५ ॥ त्वं देवि सरस्वत्यवा वाजेषु वाजिनी, रदा पूषेव नः सनिम् ॥ ६ ॥ उत स्या नः सरस्वती घोरा हिरण्यवर्तनिः, वृत्रघ्नी वष्टि सुष्टुतिम् ॥७॥ यस्या अनन्तो अह्रुतस्त्वेषश्चरिष्णुरर्णवः, अमश्चरति रोरुवत् ॥ ८ ॥ सा नो विश्वा अति द्विषः स्वसृरन्या ऋतावरी, अतन्नहेव सूर्यः ॥ ९ ॥ उत नः प्रिया प्रियासु सप्तस्वसा सुजुष्टा, सरस्वती स्तोम्याभूत् ॥ १० ॥ आपप्रुषी पार्थिवान्युरु रजो अन्तरिक्षम्, सरस्वती निदस्पातु ॥ ११ ॥ त्रिषधस्था सप्तधातुः पञ्चजाता वर्धयन्ती, वाजे वाजे हव्या भूत् ॥ १२ ॥ प्रया

महिम्ना महिनाशुचिकिते द्युम्नेभिरन्या अपसामपस्तमा । रथ
इव बृहती विभ्वने कृतोपस्तुत्या चिकितुषा सरस्वती ॥ १३ ॥
सरस्वत्यभि नो नेषि वस्यो माप स्फरीः पयसामान आधक् ।
जुषस्व नः सख्या वेश्या च मा त्वत्क्षेत्राण्यरणानि गन्म ॥१४॥
इति ऋचि ॥ अथ यजुषि ॥ सोमो राज इति द्वावनुवाकौ क्रौञ्चा
आङ्गिरसस्य । सुरावन्तमिति मृत्योः सांपरायणस्य ॥ सोमो राजामृतँ
सुत ऋजीषेणाजहान्मृत्युम् । ऋतेन सत्यमिन्द्रियं विपानं
शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ १ ॥ सोममद्भ्यो
व्यपिबच्छन्दसा हंसाः शुचिषत् । ऋतेन० ॥ २ ॥ अद्भ्यः
क्षीरं व्यपिबत्क्रुङ्ङाङ्गिरसो धिया । ऋतेन० ॥ ३ ॥ अन्नात्प-
रिस्रुतो रसं ब्रह्मणा व्यपिबत्क्षत्रम् । ऋतेन० ॥ ४ ॥ रेतो
मूत्रं विजहाति योनिं प्रविशदिन्द्रियम् । गर्भो जरायुणावृत
उल्वं जहाति जन्मना । ऋतेन०॥ ५ ॥ वेदेन रूपे व्यपिबत्सु-
तासुतौ प्रजापतिः । ऋतेन० ॥६॥ दृष्ट्वा रूपे व्याकरोत्सत्यानृते
प्रजापतिः । अश्रद्धामनृते दधच्छ्रद्धां सत्ये प्रजापतिः । ऋतेन०
॥ ७ ॥ दृष्ट्वा परिस्रुतो रसं शुक्रेण शुक्रं व्यपिबत्, पयः सोमं
प्रजापतिः । ऋतेन० ॥८॥ सुरावन्तं बर्हिषदं सुवीरं यज्ञं हिन्व-
न्ति महिषा नमोभिः । दधानाः सोमं दिवि देवतासु मदेमेन्द्रं
यजमानाः स्वर्काः ॥ यस्ते रसः सम्भृत ओषधीषु सोमस्य शुष्मः
सुरया सुतस्य । तेन जिन्व यजमानं मदेम सरस्वतीमश्विना-

विन्द्रमग्निम् ॥ यमश्विना नमुचेरासुरादधि सरस्वत्यसुनोदिन्द्रियाय । इमं ते शुक्रं मधुमन्तमिन्द्रं सोमं राजानमिह भक्षयामि ॥ यदत्र रिप्तं रसिनः सुतस्य यदिन्द्रो अपिबच्छचीभिः। अहं तदस्य मनसा शिवेन सोमं राजानमिह भक्षयामि ॥ ॐनमः शुक्राय, इन्दुचर्याधराय, सप्तकिरणाय, मायाधिपतये, असुरगुरवे, यजमानवरप्रदाय स्वाहा ॥ तर्पणं । सोमतुल्या प्रभा यस्य योऽसुराणां गुरुस्तथा । जेता यः सर्वशत्रूणां स काव्यः प्रीयतां मम ॥ अनेन मन्त्रहोमेन० सरस्वतीशुक्रौ सानुचरौ प्रीयेतां प्रीतौ मे भवेताम् । इति सरस्वतीशुक्रसूक्तम् ॥ ३६ ॥

## अथ प्रजापतिशनैश्चरसूक्तम् ॥ ३७ ॥

प्रजापते नहि त्वदन्य एता विश्वा जातानि परिता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥ शन्नो देवीरभीष्टय आपो भवन्तु पीतये, शँ य्योरभि स्रवन्तु नः ॥ २ ॥ ब्रह्माणं रक्तवर्णं सुरवरनमितं बाहुभिर्धारयन्तं रक्ताक्षमक्षमालाममृतपरिमितं रक्तपात्रं सुशोभम् । गायत्र्या सन्नियुक्तं समुनिश्रुतिगणैर्वेष्टितं वामभागे नानाभूषासुभूषं प्रहसितवदनं होमकाले भजेऽहम् ॥ नीलाञ्जनाभं मिहिरेष्टपुत्रं ग्रहेश्वरं पाशभुजङ्गपाणिम् । सुरासुराणां भयदं द्विबाहुं शनिं स्मरे मानसपङ्कजेऽहम् ॥ शंवतीः षट्छान्तिरानुष्टुभं पञ्चम्यादि बृहतीजगत्यौ शन्न पञ्चोना शान्तिः ॥ शंवतीः पारयन्त्येतेदं पृच्छस्व वचो यथा। अभ्यारन्तं समाकेतं

य एवेदमिति ब्रवत् ॥ १ ॥ जायाकेतुं परिस्रुतं भारती ब्रह्मवादिनी । सञ्ज्ञानाना मही जाता य एवेदमिति ब्रवत् ॥ २ ॥ इन्द्रस्तङ्किं विभुं प्रभुं भानुनायं जुजोषति । तेन सूर्यमरोचयद्येनेमे रोदसी उभे ॥ ३ ॥ जुषस्वाग्ने अङ्गिरः काण्वं मेधातिथिम् । मा त्वा सोमस्य बर्बृहत्सुतस्य मधुमत्तमः ॥ ४ ॥ त्वमग्ने अङ्गिरः शोचस्व देववीतमः । आशन्तमशन्तमाभिरभिष्टिभिः शान्तिं स्वस्तिमङ्कुर्वंत ॥ ५ ॥ शं नः कनिक्रदद्देवः पर्जन्यो अभिवर्षत्योषधयः संप्रवर्धन्ताम् । शं नो द्यावापृथिवी शं प्रजाभ्यः शं नो अस्तु द्विपदे शं चतुष्पदे (।६।व) शं न इन्द्राग्नी भवतामवोभिः शन्न इन्द्रा वरुणा रातहव्या । शमिन्द्रासोमा सुविताय शँ योः शं न इन्द्रापूषणा वाजसातौ ॥ ७ ॥ शन्नो भगः शमु नः शंसो अस्तु शन्नः पुरन्धिः शमु सन्तु रायः । शन्नः सत्यस्य सुयमस्य शंसः शं नो अर्यमा पुरुजातो अस्तु ॥ ८ ॥ शन्नो धाता शमु धर्ता नो अस्तु शन्न ऊरूची भवतु स्वधाभिः । शं रोदसी बृहती शन्नो अद्रिः शन्नो देवानां सुहवानि सन्तु ॥ ९ ॥ शन्नो अग्निर्ज्योतिरनीको अस्तु शन्नो मित्रावरुणावश्विना शम् । शन्नः सुकृतां सुकृतानि सन्तु शन्न इषिरो अभिवातु वातः ॥ १० ॥ शन्नो द्यावापृथिवी पूर्वहूतौ शमन्तरिक्षं दृषये नो अस्तु । शन्न ओषधीर्वनिनो भवन्तु शन्नो रजसस्पतिरस्तु जिष्णुः ॥११॥(व)

शन्न इन्द्रो वसुभिर्देवो अस्तु शमादित्येभिर्वरुणः सुशंसः । शन्नो रुद्रो रुद्रेभिर्जलाषः शन्नस्त्वष्टाग्नाभिरिह शृणोतु ॥ १२॥ शन्नः सोमो भवतु ब्रह्म शन्नः शन्नो ग्रावाणः शमु सन्तु यज्ञाः। शन्नः स्वरूणां मितयो भवन्तु शन्नः प्रस्वः शम्वऽस्तु वेदिः ॥ १३ ॥ शन्नः सूर्य उरुचक्षा उदेतु शन्नश्चतस्रः प्रदिशो भवन्तु । शन्नः पर्वता ध्रुवयो भवन्तु शन्नः सिन्धवः शमु सन्त्वापः ॥ १४ ॥ शन्नो अदितिर्भवतु व्रतेभिः शन्नो भवन्तु मरुतः स्वर्काः। शन्नो विष्णुः शमु पूषा णो अस्तु शन्नो भवित्रं शम्वस्तु वायुः ॥ १५ ॥ शन्नो देवः सविता त्रायमाणः शन्नो भवन्तूषसो विभातीः ॥ शन्नः पर्जन्यो भवतु प्रजाभ्यः शन्नः क्षेत्रस्य पतिरस्तु शम्भुः ॥ १६ ॥ शन्नो देवा विश्वदेवा भवन्तु शं सरस्वती सह धीभिरस्तु। शमभिषाचः शमु रातिषाचः शन्नो दिव्याः पार्थिवाः शन्नो अप्याः ॥ १७ ॥ शन्नः सत्यस्य पतयो भवन्तु शन्नो अर्वन्तः शमु सन्तु गावः । शन्न ऋभवः सुकृतः सुहस्ताः शन्नो भवन्तु पितरो हवेषु ॥ १८ ॥ शन्नो अज एकपाद्देवो अस्तु शन्नोऽहिर्बुध्न्यः शं समुद्रः । शन्नो अपां नपात्पेरुरस्तु शन्नः पृश्निर्भवतु देवगोपाः ॥ १९ ॥ आदित्या रुद्रा वसवो जुषन्तेदं ब्रह्म क्रियमाणं नवीयः । शृण्वन्तु नो दिव्याः पार्थिवासो गोजाता उत ये यज्ञियासः ॥ २० ॥ ये देवानां यज्ञिया यज्ञियानां मनुर्यजत्रा अमृता ऋतज्ञाः । ते

नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ॥२१॥ (इति ऋचि) ॥ अथ यजुषि ॥ शन्नो देवीरिति ब्रह्मणः ॥ शन्नो देवीरभीष्टय आपो भवन्तु पीतये, शं योरभिस्रवन्तु नः ॥ एवे दूने युवतयो नमन्त यदीमुशन्नुशतीरेत्यच्छ । सं जानते मनसा संचिकित्रेऽध्वर्यवो धिषणापश्च देवीः ॥ ओषधीरिति मातरः, या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा । मनै नु बभ्रूणामहं शतं धामानि सप्त च ॥ गावो भगो गाव इन्द्रो मे अच्छान्गावः सोमस्य प्रथमस्य भक्षः । इमा या गावः स जनास इन्द्र इच्छामीद्धृदा मनसा चिदिन्द्रम् ॥ न ता अर्वा रेणुककटो अश्नुते न संस्कृतत्रमुप यन्ति ता अभि । उरुगायमभयं तस्य ता अनु गावो मर्तस्य विचरन्ति यज्वनः ॥ रात्री व्यख्यदायती पुरुत्रा देव्यक्षभिः, विश्वा अधिश्रियोऽधित ॥ उप ते गा इवाकरं वृणीष्व दुहितर्दिवः, रात्रिः स्तोमं न जिग्युषे ॥ उदुत्यञ्चित्रन्देवानाम्, अन्विदनुमते त्वं मन्यासै शञ्चनस्कृधि । इषन्तोकायनोदधः प्राण आयूँषि तारिषः ॥ यत्ते नाम सुहवं सु प्रणीतेऽनुमतेऽनुमतँ सदा नु । तेन त्वं सुमतिं दिव्यसे इषं पिन्वं विश्ववारं सुवीराम् ॥ राकामहं सुहवाँ सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना । सीव्यत्वपः सूच्या च्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ॥ यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि ।

ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥ सिनीवालि पृथुष्टुके या देवानामसि स्वसा, जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः । या सुबाहुः स्वङ्गुरिः सुषूमा बहुसूवरी । तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतन ॥ कुहूमहं सुकृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि । या नो ददाति द्रविणं पितॄणां तस्यै ते देवि हविषा विधेम ॥ कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषः शृणोतु । स्वसा देवानां महयन्त्यस्मे रायस्पोषं चिकितुषे दधातु ॥ धाता दधातु नो रयिमीशानो जगतस्पतिः, स नः पूर्णेन वावनत् ॥ प्रजापतीरमयतु प्रजा इह धाता दधातु सुमनस्यमानः । संवत्सर ऋतुभिश्चाक्लृपानो मयि पुष्टिं पुष्टिपतिर्दधातु ॥ ॐनमः शनैश्चराय यमचर्याधराय, कालराज्याधिपतये कृष्णशरीराय, छायासुताय, महामृत्युकिरणाय, यजमानवरप्रदाय स्वाहा ॥ तर्पणम् ॥ कृष्णवर्णः कृशाङ्गश्च कृष्णजीमूतसन्निभः । शनैश्चरः सूर्यपुत्रः न सौरः प्रीयतां मम ॥ अनेन मन्त्रपाठेन० प्रजापतिशनैश्चरौ सानुचरौ प्रीयेतां प्रीतौ मे भवेताम् ॥ इति प्रजापतिशनैश्चरसूक्तम् ॥ ३७॥

## अथ गणपतिराहुसूक्तम् ॥ ३८ ॥

गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥ कया नश्चित्र आभुवदूती सदा वृधः सखा, कया

शचिष्ठया वृता ॥ ध्याये देवं गणेशं गिरितनयसुतं रक्तवर्णं त्रिनेत्रं मालां दन्तं वहन्तं सततमपि वरैर्दक्षिणैर्बाहुभिः स्वैः । वामैः शुभ्रं कुठारं सकलभयहरं मोदकानां च पात्रं सिंहस्कन्धे स्थितं तं प्रथितगुणनिधिं विघ्नराजं महेशम् ॥ शीतांशुमित्रान्तकमीड्य-रूपं घोरं च वैडूर्यनिभमबाहुम् । त्रैलोक्यरक्षापरमिष्टदं च राहुं ग्रहेन्द्रं हृदये भजेऽहम् । आ याहि नव त्र्युष्णि-गाद्यन्तानुष्टुप्मध्ये च सा सौरी तदादीतिहासस्तुति कर्मत्वादत्रिदेव एव ॥ अयाह्यद्रिभिः सुतं सोमं सोमपते पिब । वृषन्निन्द्र वृषभिर्वृत्र हन्तम ॥ १ ॥ वृषा ग्रावा वृषा मदो वृषा सोमो अयं सुतः । वृषन्निन्द्र० ॥ २ ॥ वृषा त्वा वृषणं हुवे वज्रि-श्चित्राभिरूतिभिः । वृषन्निन्द्र० ॥ ३ ॥ ऋजीषी वज्री वृषभ-स्तुराषाट् छुष्मी राजा वृत्रहा सोमपावा । युक्त्वा हरिभ्यामुप यासदर्वाङ्माध्यन्दिने सवने मत्सदिन्द्रः ॥ ४ ॥ यत्त्वा सूर्य स्वर्भानुस्तमसाविध्यदासुरः । अक्षेत्रविद्यथा मुग्धो भुवनान्य-दीधयुः॥५॥स्वर्भानोरधयदिन्द्र माया अवो दिवो वर्तमान अवा-हन् । गूढं सूर्यं तमसापव्रतेन तुरीयेण ब्रह्मणाविन्ददत्रिः ॥ ६ ॥ मा मामिमं तव सन्तमत्र इरस्या द्रुग्धो भियसानि गारीत् । त्वं मित्रो असि सत्यराधास्तौ मेहावतं वरुणश्च राजा ॥ ७ ॥ ग्राव्णो ब्रह्मा युयुजानः सपर्यन्कीरिणा देवान्नमसोपशिक्षन् । अत्रिः सूर्यस्य दिवि चक्षुराधात्स्वर्भानोरप माया अघुक्षत् ॥८॥

यं वै सूर्यं स्वर्भानुस्तमसा विध्यदासुरः । अत्र यस्तमन्वविन्द-न्नह्यन्ये अशक्नुवन् ॥ ९ ॥ इति ऋचि ॥ (अथ यजुषि) ॥ प्रयो-जज्ञेति रजनस्य कौणेयस्य ॥ प्रयोजज्ञे विद्वाँ अस्य बन्धुं विश्वा-देवानां जनिमा विवक्ति । ब्रह्म ब्रह्मण उज्जभार मध्यान्नीचादुच्चा स्वधायाभि प्रतस्थौ ॥ महान्मही अस्कभायद्विजातोद्याँ द्विता पार्थिवांश्च रजः । सबुध्नादाष्ट जनुषाभ्यग्रं बृहस्पतिर्देवता तस्य सम्राट् ॥ गणानां त्वा गणपतिं हवामहे कविं कवीनामुपम-श्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥ स सुष्टुभा स ऋक्वता गणेन वलं रुरोज बलिगं रवेण । बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद्वावशतीरुदाजत् ॥ अग्निरुक्ते पुरोहितो ग्रावाणो बर्हिरध्वरे । ऋचायामि मरुतो ब्रह्मणस्पतिर्देवाँ अवोवरेण्यम् ॥ उत्तिष्ठ ब्रह्मणस्पते देवायन्त-स्त्वेमहे । उप प्रयन्तु मारुतः सुदानव इन्द्र प्राशूर्भवा सचा ॥ अर्यमायातु वृषभस्तुविष्मान्यन्ता वसूनि विधत्ते तनूपाः । सहस्राक्षो गोत्रभिद्वज्रबाहुरस्मासु देवो द्रविणं दधातु ॥ ये ते अर्यमन्बहवो देवयानाः पन्थानो राजन्दिव आचरन्ति । तेभिर्नो अद्य पथिभिः सुगेभीरक्षा च नो अधि च ब्रूहि देव ॥ अस्मे इन्द्राबृहस्पती रयिं रत्ते शतग्विनम्, अश्वावन्तं सहस्रि-णम् ॥ बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः । इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु ॥

हिरण्यगर्भो, यः प्राणतः, उदुत्यञ्चित्रन्देवानाम्, तरणिर्विश्व-दर्शतो ज्योतिष्कृदसि सूर्य, विश्वमाभासि रोचनम् ॥ दिवो रुक्म उरुचक्षा उदेति दूरे अर्थस्तरणिर्भ्राजमानः । नूनं जनाः सूर्येण प्रसूता अयन्नर्थानि कृणवन्नपांसि । ॐनमो राहवे, कालचर्याधराय, अष्टसहस्रकिरणाय, गन्धर्वाधिपतये, सिंहिकागर्भसम्भूताय, यजमानवरप्रदाय स्वाहा ॥ ( तर्पणम् ) रक्ताक्षो धूम्रवर्णाभो विजितारिर्महाबलः । अबाहुश्चान्तरिक्षस्थः स राहुः प्रीयतां मम ॥ अनेन मन्त्रहोमेन० गणपतिराहू सानुचरौ प्रीयेतां प्रीतौ मे भवेताम् । इति गणपतिराहुसूक्तम् ॥ ३८ ॥

अथ रुद्रकेतुसूक्तम् ॥ ३९ ॥

आ वो राजानमध्वरस्य रुद्रं होतारं देवयजं रोदस्योः । अग्निं पुरा तनयित्नुरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥ केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे, समुषद्भिरजायथाः ॥ शान्तं पद्मवरासनं शशिधरं केयूरहारान्वितं गौरीभूषितवामभागममलं सिद्धैः सदा सेवितम् । नागेन्द्रेण विराजितं जपवटीं शूलं कपालं वरं बिभ्रन्तं त्रिजगत्पतिं सुरवरं रुद्रं भजेऽहं सदा ॥ लाङ्गूलयुक्तं भयदं जनानां कृष्णाम्बुभृत्सन्निभमेकवीरम् । कृष्णाम्बरं शक्तित्रिशूलहस्तं केतुं भजे मानसपङ्कजेऽहम् ॥ कद्रुद्राय नव रौद्रं तृतीया मैत्रावरुणी चान्त्यस्तृचः सौम्योन्त्यानुष्टुप् ॥ कद्रुद्राय प्रचेतसे मीळ्हुष्टमाय तव्यसे, वोचेम शन्तमं हृदे ॥ १ ॥ यथा नो

अदितिः करत्पश्वे नृभ्यो यथा गवे, यथा तोकाय रुद्रियम् ॥ २ ॥ यथा नो मित्रो वरुणो यथा रुद्रश्चिकेतति, यथा विश्वे सजोषसः ॥ ३ ॥ गाथपतिं मेधपतिं रुद्रं जलाषभेषजम्, तच्छं योः सुम्नमीमहे ॥ ४ ॥ यः शुक्र इव सूर्यो हिरण्यमिव रोचते, श्रेष्ठो देवानां वसुः ॥ ५ ॥ शन्नः करत्यर्वते सुगं मेषाय मेष्ये, नृभ्यो नारिभ्यो गवे ॥ ६ ॥ अस्मे सोम श्रियमधि निधेहि शतस्य नृणाम्, महि श्रवस्तुविनृम्णम् ॥ ७ ॥ मा नः सोम परिबाधो मारातयो जुहुरन्त, आ न इन्दो वाजे भज ॥ ८ ॥ यास्ते प्रजा अमृतस्य परस्मिन्धामन्नृतस्य । मूर्धा नाभा सोम वेन आभूषन्तीः सोम वेदः ॥ ९ ॥ इत्यृचि । (अथ यजुषि) ।

रुद्राखुन्तेति सुभेषजस्य परायणस्य रुद्रैष अवाम्बपतिर्भेषजं पुरस्ताद्बृहती त्र्यम्बकं मृत्युनाशनी अनुष्टुब्भागो भगस्य चापूपा एष भयनाशनं सर्वो रुद्रः ॥ रुद्राखुं ते पशुं करोमि तेन त्वा पशुभ्यो निरवदय । एष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व स्वाहा ॥ अवाम्ब रुद्रमऽदिमह्यव देवं त्र्यम्बकम् । यथा नो वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो व्यवसाययात् ॥ भेषजं गवेऽश्वाय पुरुषाय सुगं मेषाय मेष्यै । अथो अस्मभ्यं भेषजं सुभेषजं यथाऽसति ॥ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् । भगस्थ भगस्य वो लप्सी येष ते रुद्र भागस्तेनावसेन परो मूजवतोऽतीहि कृत्ति-

वासाः पिनाकहस्तोऽवततधन्वा । एधोऽस्येधिषीमहि समिदसि समेधिषीमहि तेजोसि तेजोमयि धेहि ॥ ओं नमः केतवे, अग्निचर्याधराय, सन्ध्यागर्भसम्भूताय, पुच्छवते, धूम्रवर्णाय, महोग्रतेजसे, यजमानवरप्रदाय स्वाहा (तर्पणम्)॥ अग्निपुत्रो महातेजाः केतुः सर्वग्रहान्तकः। क्षोभयन्यः प्रजाः सर्वाः स केतुः प्रीयतां मम ॥ अनेन मन्त्रहोमेन० रुद्रकेतू सानुचरौ प्रीयेतां प्रीतौ मे भवेताम् ॥ इति रुद्रकेतुसूक्तम् ॥ ३९ ॥

## अथ ब्रह्मध्रुवसूक्तम् ॥ ४० ॥

को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृनायून् । आसन्निषून्हृत्स्वसो मयो भून्य एषां भृत्यामृणवत्स जीवात् ॥ ध्रुवाद्यौर्ध्रुवा पृथ्वी ध्रुवासः पर्वता इमे । ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामसिं ॥ ब्रह्माणं रक्तवस्त्रममरमुनिगणैः सेवितं हंसवाहं दिव्यां रुद्राक्षमालां शुभकनकयुतां धारयन्तं सुरेशम्। आस्यैर्वेदान्वदन्तममृतद्रवमुचं गायत्रीप्राणनाथं वन्दे शान्तं सुरूपं सकलभयहरं सर्वलोकैर्नमस्यम् ॥ ऋषिप्रवीरं धृतपक्षिरूपमधोदृशं त्र्यम्बकमित्रदिक्स्थम् । महौजसं चाञ्जनवर्णप्रख्यं ध्रुवं भजे मानसपङ्कजेऽहम् ॥ आ त्वा षड्ध्रुवो राज्ञः स्तुतिस्त्वानुष्टुप् ॥ आ त्वाहर्षमन्तरेधि ध्रुवस्तिष्ठाऽविचाचलिः । विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधि भ्रशत् ॥ १ ॥ इहैवैधि माप च्योष्ठाः पर्वत इवाविचाचलिः । इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमु धारय

॥ २ ॥ इममिन्द्रो अदीधरद्ध्रुवं ध्रुवेण हविषा हविः । तस्मै सोमो अधिब्रवत्तस्मा उ ब्रह्मणस्पतिः ॥ ३ ॥ ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे । ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामयम् ॥ ४ ॥ ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः । ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम् ॥ ५ ॥ ध्रुवं ध्रुवेण हविषाभिसोमं मृशामसि । अथोत इन्द्रः केवलीर्विशो बलिहृतस्करत् ॥ ६ ॥ इत्यृचि । अथ यजुषि ॥ हिरण्यवर्णानां शकुनीनां समववृत्रं प्रतित्यं ज्योतिष्मतीं हंस इति प्रजापतेः, इन्द्रस्येति प्रजापतेर्वासिष्ठस्य ब्रह्मणो ध्रुवस्य ॥ इन्द्रस्य वज्रोसि वाजसास्त्वयायं वाजं सेन्मित्रावरुणयोस्त्वां प्रशास्त्रोः प्रशिषा युनज्मि विष्णोः क्रमोऽसि मरुतां प्रसवे जयाप्तं मनः समिन्द्रियेणैष वज्रो वाजसा तमस्तेन नौ पुत्रो वाजं सेदियदस्यायुरस्यायुर्मे धेह्युर्जस्यूर्जम्मे धेहि युङ्ङसि वर्चोसि वर्चो मे धेहि मित्रोसि वरुणोसि संविश्वैर्देवैर्नमो मात्रे पृथिव्यै प्रतित्यं नाम राज्यमधायि स्वान्तन्वं वरुणो सुषोत्, शुचेर्मित्रस्य व्रत्या अभूम मन्महि महद्दतस्य नाम सर्वे व्रता वरुणस्याभूवन्नेमित्रयुररतीनतारीत्, अशूशुभन्त यज्ञिया ऋतेन नित्रितो नौ जरिमाणमानट्, स्योनासि सुषदासि स्योनामासीद सुषदामासीद ॥ निषसाद धृतव्रतो वरुणः पास्त्यास्वा, साम्राज्याय सुक्रतुः, अग्नये गृहपतये स्वाहा, सोमाय वनस्पतये स्वाहा, इन्द्रस्य बलाय स्वाहा, मरु-

तामोजसे स्वाहा ॥ हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥ ब्रह्मँस्त्वं ब्रह्मासि सवितासि सत्यसवो, ब्रह्मँस्त्वं ब्रह्मासि मित्रोऽसि सुशेवो, ब्रह्मँस्त्वं ब्रह्मासीन्द्रोसि सत्यौजा, ब्रह्मँस्त्वं ब्रह्मासि वरुणोसि विश्वौजा, एष वज्रस्तेन मे रध्य दिशो अभ्यभूदयन् ॥ प्रजापते न हि त्वदन्य एता विश्वा जातानि परिता बभूव, यत्कामास्ते जुहुमस्तन्नो अस्तु, असौ अमुष्य पुत्रोऽमुष्यासौ पुत्रो वयं स्याम पतयो रयीणाम् ॥ अपां नप्त्रे स्वाहा, ऊर्जो नप्त्रे स्वाहा, अग्नये गृहपतये स्वाहा ॥ ॐनमो ध्रुवाय, नरकारिचयाधराय, ऋषिप्रवराय, पक्षिरूपाय, भूर्भुवःस्वर्धात्रे, उत्तराशाधिपतये, यजमानवरप्रदाय स्वाहा ॥ तर्पणम् ॥ ध्रुवराजो महापुण्य ऋषीणां प्रवरो दिशि । उत्तरस्यां स्थितो नित्यं स ध्रुवः प्रीयतां मम । अनेन मन्त्रहोमेन ब्रह्मध्रुवौ सानुचरौ प्रीयेतां प्रीतौ मे भवेताम् ॥ इति ब्रह्मध्रुवसूक्तम् ॥ ४० ॥

## अथानन्तागस्त्यसूक्तम् ॥ ४१ ॥

आदित्यं गर्भं पयसा समञ्जन्सहस्रस्य प्रतिमां विश्वरूपम् । परिवृङ्ग्धि हरसा माभिसंस्थाः शतायुषं कृणुहि चीयमानः ॥ अगस्त्यः खनमानः खनित्रैः प्रजामपत्यं बलमिच्छमानः । उभौ वर्णावृषिरुग्रः पुपोष सत्या देवेष्वाशिषो जगाम ॥ पातालसंस्थं भुजगैः स्तुतं च सहस्रशीर्षं मुदितं द्विनेत्रम् । पीताम्बरं

रत्नविभूषितं च भजाम्यनन्तं हृदि देवदेवम् ॥ दिवाकरापत्यककुब्निवासं वातापिशत्रुं विनिगीर्णवारिधिम् । शिवाकृतिं विन्ध्यरिपुं त्वगस्त्यं ध्याये हृदब्जे घटजं ग्रहेशम् ॥ पूर्वीः षड्भ्यापत्योर्लोपामुद्राया अगस्त्यस्य च द्व्यृचाभ्यां रत्यर्थं संवादं श्रुत्वा अन्तेवासी ब्रह्मचार्यन्तं बृहत्याद्यमपश्यत् ॥ पूर्वीरहं शरदः शश्रमाणा दोषा वस्तोरुषसो जरयन्तीः । मिनाति श्रियं जरिमा तनूनामप्यू नु पत्नीर्वृषणो जगम्युः ॥ १ ॥ ये चिद्धि पूर्व ऋतसाप आसन् साकं देवेभिरवदन्नृतानि । ते चिदवासुर्नह्यन्तमापुः समनु पत्नीर्वृषभिर्जगम्युः ॥ २ ॥ न मृषा श्रान्तं यदवन्ति देवा विश्वा इत्स्पृधो अभ्यश्नवाव । जयावेदत्र शतनीथमाजिं यत्सम्यञ्चा मिथुनावभ्यजाव ॥ ३ ॥ नदस्य मा रुधतः काम आगन्नित आजातो अमुतः कुतश्चित् । लोपामुद्रा वृषणं नीरिणाति धीरमधीरा धयति श्वसन्तम् ॥ ४ ॥ इमं नु सोममन्तितो हृत्सु पीतमुपब्रुवे । यत्सीमागश्चकृमा तत्सुमृळतु पुलुकामो हि मर्त्यः ॥ ५ ॥ अगस्त्यः खनमानः खनित्रैः प्रजामपत्यं बलमिच्छमानः । उभौ वर्णावृषिरुग्रः पुपोष सत्या देवेष्वाशिषो जगाम ॥ ६ ॥ इत्यृचि । (अथ यजुषि) ॥ प्रियमिति देवर्षीणां ब्राह्मणानाम् ॥ प्रियवत्यानुवाक्या श्रीवतीयाज्या यत्प्रियवती प्रियमेवैनं सजातानां करोति यच्छ्रीवती श्रियमेवैनं गमयति द्विपदानुवाक्या चतुष्पदायाज्या द्विपदश्चैव चतुष्पदश्च पशूनऽवरुन्ध ऐन्द्रमेका-

दशकपालं निर्वपेन्मारुतं श्रैय्यङ्गवं चरुं तं पश्चाच्छृतं कुर्युर्यस्मा-
त्क्षत्रियाद्विळभ्यर्धश्चरेत्क्षत्रं वा इन्द्रो विण्मारुतः क्षत्रायैव
विशमनुनियुनक्ति तमनूच्यमाने पश्चात्प्राञ्चमुदाहरन्ति विश-
मेवास्मै पश्चादुपदधात्यसंसर्गाय मारुतं सप्तकपालं निर्वपेदैन्द्र-
मेकादशकपालम्। यः कामयेत विशे च क्षत्राय च समदं कुर्या-
मिति क्षत्रं वा इन्द्रो विण्मारुतो भागधेय एवैभ्यः समदं करो-
ति मारुतस्य मारुतीमनूच्यैन्द्र्चा यजेदैन्द्रस्यैन्द्रीमनूच्य मारुत्या
यजेत्क्षत्रमेव विशः परिहायादते विट्क्षत्रस्य ते अन्यान्या-
न्निर्णयत उभयतः पुरोळाशस्यावद्येद्यतरान्कामयेत पराजयेरन्नि-
त्युभयत एव विशमुपदीपयति ताजकपराजयन्त एतामेव निर्व-
पेत्। यदा कामयेत कल्पेरन्निति तस्याः प्रसूतिं यजेद्भागधेये-
नैवैनान्कल्पयति, मारुतं सप्तकपालं निर्वपेद्यः क्षत्रियो विशो
ज्यान्या बिभीयाद्ब्राह्मणो वा विड्वै मारुतो भागधेयेनैवैनाञ्छ-
मयत्यऽगस्त्यस्यैतत्सूक्तं कयाशुभीयं तस्य सामिधेनीष्वनुब्रूया-
त्तस्य याज्यानुवाक्ये स्यातामगस्त्यो वै मरुद्भ्यः शतमुक्ष्णः
पृश्नीन्प्रौक्षत्तानिन्द्रायालभत तं मारुतः क्रुद्धा वज्रमुद्धृत्याभ्य-
पतत्स एतत्सूक्तमऽपश्यत्तेनैनानशमयद्यदेतदनूच्यते शान्त्यै ॥
ॐनमो अगस्त्याय, कुम्भयोनये, वातापिशत्रवे, दक्षिणाशापतये,
पीतजलनिधये, विन्ध्यारये, यजमानवरप्रदाय स्वाहा ॥ तर्पणम्।
अगस्त्यः कलशोद्भूतो दक्षिणस्यां दिशि स्थितः। समुद्रं जीर्ण-

वान्योऽसौ विन्ध्यारिः प्रीयतां मम । अनेन० अनन्तागस्त्यौ सानुचरौ प्रीयेतां० ॥ इत्यनन्तागस्त्यसूक्तम् ॥ ४१ ॥

## अथ वास्तोष्पतिसूक्तम् ॥ ४२ ॥

अमीवहा वास्तोष्पते विश्वा रूपाण्याविशत्, सखा सुशेव एधि नः ॥ वास्तोष्पते प्रति जानीह्यस्मान्स्वावेशो अनमीवो भवा नः । यत्त्वेमहि प्रतितन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे ॥ वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो । अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति नो जुषस्व ॥ वास्तोष्पते शग्मया शं सदा ते सक्षीमहि रण्वया गातुमत्या । पाहि क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिः सदा नः ॥ सितं त्र्यक्षं सौम्यमुखं द्विभुजं वास्तुपूरुषम् । अक्षसूत्रशूलकरं चिन्तये विघ्ननाशनम् ॥ श्वेताम्बरः सकलदेवसमाश्रिताङ्गः काकालिमेचकतनुर्द्विभुजो गदाभृत् । सद्रत्नपात्रवरभूषितबाहुदण्डो दिश्यात्स वास्तुपुरुषो हृदयेप्सितं नः ॥ वास्तोष्पत्यममीवाहाष्टौ वास्तोष्पत्यमाद्या गायत्री शिष्टाः प्रस्तापिन्य उपनिषदुपाद्यास्तिस्र उपरिष्टाद्बृहत्यः शेषमानुष्टुभम् ॥ वास्तोष्पते प्रति जानीह्यस्मान्स्वावेशो अनमीवो भवा नः । यत्त्वेमहे प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पते ॥ १ ॥ वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो । अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति नो जुषस्व ॥ २ ॥ वास्तोष्पते शग्मया शं सदा ते

सक्षीमहि रण्वया गातुमत्या । पाहि क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिः सदा नः ॥ ३ ॥ अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन्, सखा सुशेव एधि नः ॥ ४ ॥ यदर्जुन सारमेतदतः पिशङ्ग यच्छसे । वीविभ्राजन्त ऋष्टय उप स्रक्केषु बप्सतो निषुस्वप ॥ ५ ॥ स्तेनं राय सारमेय तस्करं वा पुरः सरः स्तोतृनिन्द्रस्य रायसि किमस्मान्दुच्छुनायसे निषुस्वप ॥६॥ त्वं सूकरस्य दर्दहि तव दर्दर्तु सूकरः । स्तोतृनिन्द्रस्य रायसि किमस्मान्दुच्छुनायसे निषुस्वप ॥ ७ ॥ सस्तु माता सस्तु पिता सस्तु श्वा सस्तु विश्पतिः । ससस्तु सर्वे ज्ञातयः सस्त्वयमभितो जनः ॥ ८ ॥ य आस्ते यश्च चरति यश्च पश्यति नो जनः । तेषां संहन्मो अक्षाणि यथेदं हर्म्यं तथा ॥ ९ ॥ सहस्रशृङ्गो वृषभो यः समुद्रादुदाचरत् । तेना सहस्येना वयं निजनान्स्वापयामसि ॥ १० ॥ प्रोष्ठेशया वह्येशया नारीर्यास्तल्पशीवरीः । स्त्रियो याः पुण्यगन्धास्ताः सर्वाः स्वापयामसि ॥ ॐनमो ब्रह्मणे, कूर्माय, ध्रुवाय, अनन्ताय, हरये, लक्ष्म्यै, कमलायै, शिख्यादिभ्यः पञ्चचत्वारिंशद्वास्तोष्पतियागदेवताभ्यः स्वाहा ॥ तर्पणम् । अधोमुखस्थितो देवः पृथिवीं यश्च व्यापकः । शम्भोश्च वल्लभो नित्यं स वास्तुः प्रीयतां मम । अनेन मन्त्रहोमेन० शिख्यादयः पञ्चचत्वारिंशद्वास्तोष्पतिदेवताः प्रीयन्तां प्रीता मे भवन्तु ॥ इत्यृचि वास्तोष्पतिसूक्तम् ॥ ४२ ॥

## अथ क्षेत्रपालसूक्तम् ॥ ४३ ॥

क्षेत्रस्य पतिना वयं हितेनेव जयामसि । गामश्वं पोषयित्वा स नो मृळातीदृशे । क्षेत्रस्य पते मधुमन्तमूर्मिन्धेनुरिव पयो अस्मासु धुक्ष्व । मधुश्च्युतं घृतमिव सुपूतमृतस्य नः पतयो मृळयन्तु ॥ मधुमतीरोषधीर्द्याव आपो मधुमान्नो भवन्त्वन्तरिक्षम् । क्षेत्रस्य पतिर्मधुमान्नो अस्त्वरिष्यन्तो अन्वेनं चरेम ॥ आशाम्बरं वामविलोलनेत्रं चतुर्भुजं पुण्यजनैरुपेतम् । लम्बोदरं पाशधरं विलोलं तं क्षेत्रपालं प्रणतोऽस्मि नित्यम् ॥ भ्राजच्चन्द्रजटाधरं त्रिनयनं नीलाद्रितुल्यप्रभं दोर्दण्डात्तगदाकपालमरुणं स्रग्वस्त्रगन्धोज्ज्वलम् । घण्टामेखलघर्घरध्वनिमिलज्झाङ्कारभीमं विभुं वन्दे संहितसर्पकुण्डलधरं श्रीक्षेत्रपालं सदा ॥ क्षेत्रस्याष्टौ तिस्रः क्षेत्रपत्यः शुनायैका परा पुरउष्णिक्सान्त्या च शुनासीराभ्यामुपान्त्ये सीतायैते अनुष्टुप् भावाद्या चतुर्थी च ॥ क्षेत्रस्य पतिना वयं हितेनेव जयामसि । गामश्वं पोषयित्वा स नो मृळातीदृशे ॥ १ ॥ क्षेत्रस्य पते मधुमन्तमूर्मिन्धेनुरिव पयो अस्मासु धुक्ष्व । मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृळयन्तु ॥ २ ॥ मधुमतीरोषधीर्द्याव आपो मधुमान्नो भवत्वन्तरिक्षम् । क्षेत्रस्य पतिर्मधुमान्नो अस्त्वरिष्यन्तो अन्वेनं चरेम ॥ ३ ॥ शुनं वाहा शुनं नरः शुनं कृषतु लाङ्गलम् । शुनं वरत्रा बध्यन्तां शुनमष्ट्रामुदिङ्गय ॥४॥ शुनासीराविमां वाचं जुषेथां यद्दिवि चक्रथुः पयः, तेनेमामुप-

सिश्वतम् ॥ ५ ॥ अर्वाची सुभगे भव सीते वन्दामहे त्वा । यथा नः सुभगाससि यथा नः सुफलाससि ॥ ६ ॥ इन्द्रः सीतां निगृह्णातु तां पूषा नु यच्छतु । सा नः पयस्वती दुहा-मुत्तरामुत्तरां समाम् । शुनं नः फाला विकृषन्तु भूमिं शुनं कीनाशा अभियन्तु वाहैः । शुनं पर्जन्यो मधुना पयोभिः शुनासीरः शुनमस्मासु धत्तम् ॥ पूर्वे हेरकाय, आग्नेये त्रिपुरान्त-काय, दक्षिणे वेतालाय, नैर्ऋते अग्निजिह्वाय, पश्चिमे करालाय, वायवे करालिने, उत्तरे एकपादाय, ईशाने भीमरूपिणे, ऊर्ध्वे तारकाख्याय, पाताले हाटकेश्वराय, मध्ये राजराजेश्वराय हेर-कादिभ्यो बटुकादिभ्यः, इह राष्ट्राधिपतयेऽमुकभैरवाय, समस्त क्षेत्रपालयागदेवताभ्यःस्वाहा ॥ तर्पणम् । हेरकादीनि चान्यानि बटुकाश्वरिक्यादयः । भूपातालखदिग्व्याप्य क्षेत्रेशाः प्रीयंतां मम ॥ अनेन० हेरकादयः क्षेत्रेशाः प्रीयन्तां प्रीता मे भवन्तु ॥ इति ऋग्वेदे क्षेत्रपालसूक्तम् ॥ ४३ ॥

## अथ सर्वदैवतसूक्तम् ॥ ४४ ॥

भूतो भूतेषु चरति प्रविष्टः स भूतानामधिपतिर्बभूव । तस्य मृत्युश्चरति राजसूयं स राजा राज्यमनुमन्यतामिदम् ॥ उर्वीरोधसी वरिवः कृणोतु क्षेत्रस्य पत्नीरधिवोचतं नः । तौ मे द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चतमंहसः ॥ यो ह वै देवान्साध्यान्वेद सिध्यत्यस्मादेमिमावलोकाः । देवाः

साध्याः सिद्धं ह्यस्मै सिद्धमस्मै सिद्धममुष्मै य एवं वेद सिद्ध्य-
त्यस्मै ॥ यो विश्वचक्षुरुत विश्वतोमुखो विश्वतो हस्त उत
विश्वतस्पात् । संबाहुभ्यां नमते संपजत्रैर्द्यावापृथिवी जनयन्देव
एकः ॥ यस्य व्रतमुपतिष्ठन्त आपो यस्य व्रते पशवो यन्ति
सर्वे । यस्य व्रते पुष्टिपतिर्निविष्टस्तं सरस्वन्तमवसे जोहवीमि ॥
गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥ दिव्यं
सुपर्णं वायसं बृहन्तमपां गर्भं दर्शतमोषधीनाम् । अभीपतो
वृष्टिभिस्तर्पयन्तं सरस्वन्तमवसे जोहवीमि ॥ सरस्वतीं देवयन्तो
हवन्ते सरस्वतीमध्वरे तायमाने । सरस्वतीं सुकृतो आह्वयन्ते
सरस्वतीं दाशुषे वार्यं धात् ॥ सरस्वत्यभि नो नेषि वस्योमा
पस्फरी पयसः मा न आधक् । जुषस्व नः सख्या वेश्या च
मा त्वत्क्षत्राण्यरणानि गन्म ॥ पावका नः सरस्वती वाजी-
भिर्वाजिनीवती, यज्ञं वष्टु धिया वसुः ॥ चोदयत्री सूनृतानां
चेतन्ती सुमतीनाम्, यज्ञं दधे सरस्वती ॥ महो अर्णः सरस्वती
प्रचेतयति केतुना, धियो विश्वा विराजति ॥ जातवेदसे सुन-
वाम सोममरातीयतो निदहाति वेदः । स नः पर्षदति दुर्गाणि
विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥ त्र्यम्बकं यजामहे सुगन्धिं
पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥
यत इन्द्र भयामहे ततो नो अभयं कृधि । मघवञ्छग्धि तव

तन्न ऊतिभिर्विद्विषो विमृधो जहि [१५] ॥ ये देवा दिव्येकादश
स्थ पृथिव्यामध्येकादश स्थ । अप्सुषदो महिनैकादश स्थ ते
देवासो यज्ञमिमं जुषध्वम् [१६] ॥ स सुष्टुभा स ऋक्वता गणेन बलं
रुरोज वलिगं रवेण । बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद्वा-
वशतीरुदाजत् [१७] ॥ एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा
हविर्भिः । बृहस्पते सुप्रजा वीरवन्तो वयं स्याम पतयो रयी-
णाम् [१८] ॥ ये के च ज्मा महिनो अहिमाया दिवो जज्ञिरे अपां
सधस्थे । ते अस्मभ्यमिषये विश्वमायुः क्षप उस्रा वरिवस्यन्तु
देवाः [१९] ॥ रक्षोहणं वाजिनमाजिघर्मि मित्रं प्रथिष्ठमुप यामि
शर्म । शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा सरिषः
पातु नक्तम् [२०] ॥ प्रत्यग्ने हरसा हरः शृणीहि विश्वतः प्रति ।
यातुधानस्य रक्षसो बलं वीरुज वीर्यम् [२१] ॥ अन्विदनुमते त्वम-
न्यासै शं च नस्कृधि । इषं तोकाय नो दधात्प्राण आयूंषि
तारिषः [२२] ॥ यत्ते नाम सुहवं सु प्रणीतेऽनुमतेऽनुमतं सदा नु ।
तेन त्वं सुमतिर्देव्यसे इषं पिन्व विश्ववारां सुवीराम् [२३] ॥ राका-
महं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना । सीव्य-
त्वपः सूच्याऽच्छिद्यमानया दधातु वीरं शतदायमुक्थम् [२४] ॥ यास्ते
राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि । ताभिर्नो
अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा [२५] ॥ सिनीवालि
पृथुष्टुके या देवानामसि स्वसा । जुषस्व हव्यमाहुतं प्रजान्देवि

दिदिड्ढि न[26]ः ॥ या सुबाहुः स्वङ्गुरिः सुषूमा बाहुसूवरी । तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोत[27]न ॥ या कुहूर्या सिनीवाली या राका या सरस्वती । इन्द्राणीमह्व ऊतये वरुणानीं [28]स्वस्तये ॥ इन्द्राणीमासु नारिषु सुपत्नीमहमश्रवम् । नह्यस्या अपरं च न जरसा मरते पतिर्विश्वस्मादिन्द्र उत्त[29]रः ॥ नाहमिन्द्राणी रारण सख्युर्वृषाकपेर्ऋते । यस्येदमप्यं हविः प्रियं देवेषु गच्छति, विश्वस्मादिन्द्र उत्त[30]रः ॥ कुहूमहं सुकृतं विद्मनापसमस्मिन्यज्ञे सुहवां जुहवीमि । या नो ददाति श्रवणं पितृणां तस्यै ते देवि हविषा विधे[31]म ॥ कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषः शृणोतु । स्वसा देवानां महयन्त्यस्मे रायस्पोषं चिकितुषे [32]दधातु ॥ धाता दधातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन वा[33]वनत् ॥ प्रजापतीरमयतु प्रजा इह धाता दधातु सुमनस्यमानः । संवत्सर ऋतुभिश्चाक्लृपानो मयि पुष्टिं पुष्टिपतिर्द[33]धातु ॥

( ध्यानं ) ॥ सर्वे देवा विचित्रा मुनिगणसहिता ब्राह्मणाद्याश्चवर्णा नागा नद्या गजेन्द्रा हयगणसहिता विश्वरूपा भुजङ्गाः । दैत्या ग्राहा जलेशा ग्रहगणसहितास्तारका नैकसंख्याः संलीना यस्य सर्वे वपुषि स भगवान्सर्वरूपोऽवतान्नः ॥ नानावक्त्रधरा महाकृतिधराः स्रक्चन्दनालङ्कृता नानाशस्त्रधराः सिताऽसितहरिद्रक्ताम्बरधारिणः । नानाविष्टरसेविनश्च द्विचतुर्बाहून्दधानाः शुभाः सर्वे देवगणाः फलमभिमतं सन्तु श्रियं दायकाः ॥ ( हयोष्टौ प्रतिक्षेत्रेऽन्त्ये देव-

पत्न्यो द्वितीया त्रिष्टुबऽन्त्या च) ॥ हयो न विद्वाँ अयुजि स्वयं धुरि तां वहामि प्रतरणीमवस्युवम् । नास्या वश्मि विमुचं नावृतं पुनर्विद्वान्पथः पुर एत ऋजुनेषति ॥ १ ॥ अग्न इन्द्र वरुण मित्र देवाः शर्धः प्रयन्त मारुतोत विष्णो । उभा नासत्या रुद्रो अध ग्नाः पूषा भगः सरस्वती जुषन्त ॥ २ ॥ इन्द्राग्नी मित्रावरुणादितिं स्वः पृथिवीं द्यां मरुतः पर्वताँ अपः । हुवे विष्णुं पूषणं ब्रह्मणस्पतिं भगं नु शंसं सवितारमूतये ॥३॥ उत नो विष्णुरुत वातो अस्रिधो द्रविणोदा उत सोमो मयस्करत् । उत ऋभव उत राये नो अश्विनोत त्वष्टोत विद्वाँ नु मंसते ॥ ४ ॥ उत त्यन्नो मारुतं शर्ध आगमद्दिविक्षयं यजतं बर्हिरासदे । बृहस्पतिः शर्म पूषोत नो यमद्वरूथ्यं वरुणो मित्रो अर्यमा ॥ ५ ॥ उत त्येनः पर्वतासः सुशस्तयः सुदीतयो नद्यस्त्रामणे भुवन् । भगो विभक्ता शवसावसा गमदुरुव्यचा अदितिः श्रोतु मे हवम् ॥ ६ ॥ देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये । याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छत ॥ ७ ॥ उत ग्ना व्यन्तु देवपत्नीरिन्द्राण्यग्नाय्यश्विनीराट् । आरोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनाम् ॥८॥ ब्रह्म्यादिभ्यो मातृभ्यः (इत्यादि) अखण्डब्रह्माण्डयागदेवताभ्यः स्वाहा (इत्यन्तं)तर्पणम् । पृथिवीं द्यां चान्तरिक्षं समस्तभुवनानि च । अमरा येऽवतिष्ठन्ति प्रीयन्तां

ते सदा मम ॥ अनेन० सर्वे देवाः प्रीयन्तां० ॥ इति ऋग्वेदे सर्वदैवतसूक्तम् ॥ ४४ ॥

## अथ रात्रिसूक्तम् ॥४५॥

शूलाब्जपाशाङ्कुशहस्तपद्मां चतुर्भुजां धूम्रनिभां त्रिनेत्राम्। सिंहासनस्थां धृतपीतवस्त्रां ध्याये महेशीं हृदि कालरात्रीम् ॥ (रात्री कुशिकः सौभरो रात्रिर्वा भारद्वाजी रात्रिस्तवो गायत्रम्) ॥ रात्री व्यख्यदायती पुरुत्रा देव्यक्षिभिः, विश्वा अधि श्रियोधित ॥१॥ ओर्वप्रा अमर्त्या निवतो देव्युद्वतः, ज्योतिषा बाधते तमः ॥ २ ॥ निरु स्वसारमस्कृतोषसं देव्यायती, अपेदु हासते तमः ॥ ३ ॥ सा नो अद्य यस्या वयं नि ते यामन्नविक्ष्महि, वृक्षे न वसतिं वयः ॥ ४ ॥ नि ग्रामासो अविक्षत निपद्वन्तो नि पक्षिणः, निश्येनासश्चिदर्थिनः ॥ ५ ॥ यावया वृक्यंवृकं यवयस्तेनमूर्म्ये, अथा नः सुतरा भव ॥ ६ ॥ उप मा पेपिशत्तमः कृष्णं व्यक्तमस्थितः, उष ऋणेव यातय ॥ ७ ॥ उप ते गा इवाकरं वृणीष्व दुहितर्दिवः, रात्रिस्तोमं न जिग्युषे ॥ ८ ॥ आ रात्रि पार्थिवं रजः पितुरप्रायि धामभिः। दिवः सदांसि बृहती वितिष्ठस आ त्वेषं वर्तते तमः ॥ ९ ॥ ये ते रात्रीनृचक्षसो युक्तासो नवतिर्नव। अशीतिः संत्वष्टा उतोते सप्तसप्ततीः ॥ १० ॥ रात्रीं प्रपद्ये जननीं सर्वभूतनिवेशनीम् । भद्रां भगवतीं कृष्णां विश्वस्य जगतो निशाम् ॥११॥ संवेशिनीं संयमनीं

ग्रहनक्षत्रमालिनीम् । प्रपन्नोहं शिवां रात्रीं भद्रे पारमशीमहि ॥ रात्र्यैस्वाहा, कालरात्र्यै, तालरात्र्यै, शिवरात्र्यै, राण्यरात्र्यै, महारात्र्यै, रौद्र-रात्र्यै, सौख्यरात्र्यै, धूर्भ्यः उपधूर्भ्यः, महागायत्र्यै, सावित्र्यै, सरस्वत्यै ॥ शैलपुत्र्यै, १ ब्रह्मचारिण्यै २ कूष्माण्ड्यै ३ चण्डघण्टायै ४ स्कन्दमात्रे ५ सिद्धिदायै ६ महागौर्यै ७ कालरात्र्यै ८ महालक्ष्म्यै ९ नवदुर्गा-भगवत्यै ( तर्पणम् ) । भद्रा भगवती कृष्णा तारा काली च पार्वती । मङ्गला शिवरात्री च नवदुर्गा च प्रीयताम् ॥ अनेन० रात्रिदेव्यः प्रीयन्तां० ॥ इत्यृचि रात्रिसूक्तम् ॥ ४५ ॥

## अथ षड्तुसूक्तम् ॥ ४६ ॥

( चूतप्रवालरसनिर्भरमञ्जुकण्ठाः कूजन्ति कोकिलगणा गहनेषु यत्र । वैतालिका इव मनोभवबोधनाय सोऽयं वसन्तसमयः सुखदोऽस्तु मह्यम् ॥ १ ॥ वसन्ततापापगमौ सुपुष्पौ तापान्वितौ तोयभवेशयुक्तौ । हेमन्तमित्रावरुणाधिपौ ये तांश्चिन्तयामि स्वगुणातिरम्यान् ॥ २ ॥ ) स नाऽरमत स प्राद्रवत्तस्मिन्नजुहोत्तस्या आहुत्याः पुरुषोऽजायत, स नाऽरमत स प्राद्रवत्तस्मिन्नजुहोत्तस्या आहुत्या अश्वोऽजायत, तस्मात्पुरुषश्चाश्वश्च नक्तं प्रत्यञ्चौ न सु विज्ञायेते इव, स नारमत स प्राद्रवत्तस्मिन्नजुहोत्तस्या आहुत्या गौरजायताऽविरजायताऽजोऽजायत यवोऽजायत व्रीहिरजायतैताभ्यो वै सप्तभ्य आहुतिभ्यः सप्तेमे ग्राम्याः पशवोऽसृजन्त, स नारमत स प्राद्रवत्तस्मिन्नजुहोत्तस्या

आहुत्या वसन्तोऽजायत ग्रीष्मोऽजायत वर्षा अजायन्त शरद-
जायत हेमन्तोऽजायत, स त्रयोदश्यामाहुत्यामुद्यतायामबिभेत्तं
प्रत्यङ्ङुपापद्यत तं पाणितः प्राविशत्तस्मात्पाण्योर्लोम नास्त्य-
ग्निधानं ह्येतत्तस्माद्धस्ताभ्यामग्निर्मथ्यमानो जायते ॥ तस्माद्ध-
न्यमानो हस्तौ प्रति प्रगृह्णात्यग्ना इव तत्राणमिच्छतेऽग्निं वै
पशवोनूपतिष्ठन्ति, पशूनग्निः प्रैनं पशवो विशन्ति, प्र पशून्वि-
शति, य एवं वेद, तामाहुतिमप्सु प्रसिञ्चत्ततः शिशिरमजायत,
तस्मात्तत्क्रूरतमं, नहि तद्धुतान्नाहुतादजायत, साऽहुतिरपो द-
ग्धुमुपाक्रामत, तत आपोग्नये वज्रोभवँस्तस्मात्प्रोक्षन्नग्निर्न प्राप-
येद्यत्प्रापयेद्ध्येतेन यजते तामाहुतिमोषधीषु न्यदधात्तस्मादोष-
धयोऽनभ्यक्ता रेभन्त ओषधिभ्योऽधिपशवः पशुभ्योधि प्रजा-
स्तदेतच्छिशिर आज्यं श्यायत्यग्नये तस्माच्छिशिरे कक्ष उपा-
दुत्याः प्रियमेव धामाग्नये प्रादात्सोऽस्मा अन्नाद्यं प्रयच्छत्य-
न्नादो भवति य एवं वेद ॥ १ ॥ ॐवसन्तेनर्तुना देवा वसव-
स्त्रिवृताः स्तुताः, रथन्तरेण भेषजा हविरिन्द्रो वयो दधुः ॥१॥
ग्रीष्मेण ऋतुना देवा रुद्राः पञ्चदशे स्तुताः, बृहता यशसा
बलँ हविरि० ॥ २ ॥ वर्षाभिर्ऋतुनादित्याः स्तोमे सप्तदशे
स्तुताः, वैरूपेण विशौजसा हवि० ॥ ३ ॥ शारदेनर्तुना देवा
एकविंश ऋभवः स्तुताः, वैराजेन श्रिया श्रियं हवि० ॥ ४ ॥
हेमन्तेनर्तुना देवास्त्रिणवे मारुतः स्तुताः, बलेन शक्करीः सहो

हवि० ॥ ५ ॥ शैशिरेणर्तुना देवास्त्रयस्त्रिंशेऽमृता स्तुताः, सत्येन रेवतीः क्षत्रँ हवि० ॥ ६ ॥ २ ॥ अग्नये नमो गायत्र्यै नमस्त्रिवृते नमो रथन्तराय नमो वसन्ताय नमः प्राच्यै दिशे नमः प्राणाय नमो वसुभ्यो नमः ॥ १ ॥ इन्द्राय नमस्त्रिष्टुभे नमः पञ्चदशाय नमो बृहते नमो ग्रीष्माय नमो दक्षिणायै दिशे नमो व्यानाय नमो रुद्रेभ्यो नमः ॥ २ ॥ मरुद्भ्यो नमो जगत्यै नमः सप्तदशाय नमो वैरूपाय नमो वर्षाभ्यो नमः प्रतीच्यै दिशे नमोऽपानाय नम आदित्येभ्यो नमः ॥ ३ ॥ विश्वेभ्यो देवेभ्यो नमोऽनुष्टुभे नमं एकविंशाय नमो वैराजाय नमः शरदे नम उदीच्यै दिशे नमः समानाय नमश्चन्द्रमसे नमः ॥ ४ ॥ मित्रावरुणाभ्यां नमः पाङ्क्त्यौष्णिहाभ्यां नमस्त्रिणव-त्रयस्त्रिंशभ्यां नमः शाक्वररैवताभ्यां नमो हेमन्तशिशिराभ्यां नम ऊर्ध्वायै दिशे नम उदानाय नमो विष्णवे नमः ॥ ५ ॥ पृथिव्यै नमोऽग्नये नमो भूताय नमश्चक्षुषे नमोऽन्तरिक्षाय नमो वायवे नमो भव्याय नमः श्रोत्राय नमो दिवे नमः सूर्याय नमो भविष्यते नमो मनसे नमः ॥ ६ ॥ ॐवसन्ताय, ग्रीष्माय, वर्षाभ्यो, शरदे, हेमन्ताय, शिशिराय, षड्ऋतुभ्यः स्वाहा । तर्पणम् । वसन्तश्च तथा ग्रीष्णो वर्षाश्चैव शरत्तथा । हेमन्तः शिशिरश्चैव प्रीयन्तामृतवो मम ॥ अनेन० षड्ऋतवः प्रीयन्तां० ॥ इति यजुषि षड्ऋतुसूक्तम् ॥ ४६ ॥

## उपहोमः ॥ ४७ ॥

( देवासुरानाम् ) तव श्रिये व्यजिहीत पर्वतो गवां गोत्रमुदासृजो यदङ्गिरः । इन्द्रेण युजः तमसः परिवृतं बृहस्पते निरपामौजो अर्णवम् ॥ बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवसर्तप्रजात तदस्मासु द्रविणं देहि चित्रम् ॥ बृहस्पतिः समजयद्वसूनि महोव्रजान्गोमतो देव एषः । अपः सिषासन्स्वरप्रतीतो बृहस्पतिर्हन्त्यमित्रमर्कैः ॥ यमो दाधार पृथिवीं यमो द्यामुत सूर्यम् । यमाय सर्वमित्तस्थे यत्प्राणद्वायुरक्षितम् । यथा पञ्च यथा षड्यथा पञ्चदशर्षयः । यमं यो विद्यात्स ब्रूयाद्यथैकर्षिर्विजानते ॥ त्रिकद्रुकेभिः पतति षडुर्वीरेकमिद्बृहत् । गायत्री त्रिष्टुप्छन्दांसि सर्वास्ता यम आहिताः ॥ मृळा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते । यच्छं च योश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु ॥ अश्याम ते सुमतिं देवयज्यया क्षयद्वीरस्य तव रुद्र मीढ्वः । सुम्नायन्नऽद्विषो अस्माकमाचरारिष्टवीरा जुहवाम ते हविः ॥ त्वेषं वयं रुद्रं यज्ञसाधनमंकुं कविमवसे निह्वयामहे । आरे अस्मद्दैव्यं हेळो अस्यतु सुमतिमिद्वयमस्या वृणीमहे ॥ अव ते हेळो वरुण नमोभिरवयज्ञेभिरीमहे हविर्भिः । क्षयमस्मभ्यमसुरप्रचेतो राजन्नेनांसि शिश्रथः कृतानि ॥ उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय । अथा वयमादि-

त्यव्रते तवानागसो आदितये स्याम[11] ॥ इमं मे वरुण श्रुधी हमवद्या च मृळय त्वामवस्युराचके । तत्त्वायामि ब्रह्मणा वन्द-मानस्तदाशास्ते यजमानो हविर्भिः ॥ अहेळमानोवरुणेह बोध्यु-रुशंसमान आयुः प्रमोषीः[12] ॥ ॐभूर्लोकाय स्वाहा[13] । ॐभुवोलोकाय[14] स्वाहा । ॐस्वर्लोकाय स्वाहा[15] । ॐभूर्भुवः स्वर्लोकाय स्वाहा[16] ॥ अग्नि-र्मूर्धा दिवः ककुत्पतिः पृथिव्याः अयम्, अपां रेतांसि जिन्वति[17] ॥ उभा वामिन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै । उभा दातारायिषां रयीणामुभा वाजस्य सातये हुवे वाम्[18] ॥ अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्व-रेष्वीड्यः ॥ यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे विशे[19] ॥ अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तं जानन्नग्न आरोह ततो नो वर्धया रयिम्[20] ॥ ( स्तोमो देवानाम् ) उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वते[21] ॥ अस्य प्रत्नामनु द्युतं शुक्रं दुदुहे अह्रयः, पयः सहस्रसामृषिम्[22] ॥ [ अरुणेः ] कदाचनस्तरीरसि नेन्द्रसश्चसि दाशुषे । उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते[23] ॥ परि ते दूळभो रथोऽस्मा अश्नोतु विश्वतः । येन रक्षसि दाशुषः[24] ॥ ॥ यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ । ताभ्यामेनं परि देहि राजन्स्वस्ति चास्मा अनमीवं च धेहि ॥ यत्र वेत्थ वनस्पते देवानां गुह्या नामानि, तत्र हव्यानि गन्तय ॥ मुञ्चामि त्वा हविषा

जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात्। ग्राहिर्जग्राह यदि वैत-देनं तस्या इन्द्राग्नी प्रमुमुक्तमेनम् ॥ अङ्गादङ्गाल्लोम्नोलोम्नो जातं पर्वणि पर्वणि। यक्ष्मं सर्वस्मादात्मनस्तमिमं विवृधामि ते ॥ ॐगायत्र्यैनमः ॐभूर्भुवः स्व० ३। ॐतद्विष्णोः परमं० ॥ ऐन्द्राग्नं वर्म बहुलं यदुग्रं विश्वे देवा नातिविध्यन्ति शूराः। तन्नस्त्रायतां तन्वः सर्वतो महदायुष्मन्तो जरामुपगच्छेम जीवाः ॥ तर्पणम् ॥ अनेन० महागणपतिः कुमारः इत्यादि अनन्तादयोष्टौकुलनाग-देवताः ॥ उदयंस्तु महाभानुस्तेजसा चाभयङ्करः। सहस्ररश्मि दीप्तश्चह्यादित्यः प्रीयतां मम ॥ द्विजराजो महापुण्यः तारापतिर्विशे षतः। ओषधीनां च यो राजा स सोमः प्रीयतां मम ॥ येनार्जिता जगत्कीर्तिर्भूमिपुत्रेण शाश्वती। शत्रवश्च हता येन भौमेन महि-तात्मना। स प्रीयतां तु भौमोऽद्य तुष्टो भूयात्सदा मम ॥ बुधो बुद्धिप्रदाता च सोमपुत्रो महाद्युतिः। आदित्यस्य रथे तिष्ठन्स बुधः प्रीयतां मम ॥ मेरुमूर्ध्नि समाक्रान्तो देवराजपुरोहितः। ज्ञाता यः सर्वशास्त्राणां स गुरुः प्रीयतां मम ॥ सोमतुल्या प्रभा यस्य योऽसुराणां गुरुस्तथा। जेता यः सर्वशत्रूणां स काव्यः प्रीयतां मम ॥ कृष्णवर्णः कृष्णाङ्गश्च कृष्णाजीमूतसन्निभः। शनैश्चरः सूर्यपुत्रः स सौरः प्रीयतां मम ॥ रक्ताक्षो धूम्रवर्णाभो विजितारिर्महाबलः। अबाहुश्चान्तरिक्षस्थः स राहुः प्रीयतां मम ॥ अग्निपुत्रो महातेजाः केतुः सर्वग्रहान्तकः। क्षोभयन्यः प्रजाः

सर्वाः स केतुः प्रीयतां मम ॥ ध्रुवराजो महापुण्य ऋषीणां प्रवरो दिशि । उत्तरस्यां स्थितो नित्यं स ध्रुवः प्रीयतां मम ॥ अगस्त्यः कलशोद्भूतो दक्षिणस्यां दिशि स्थितः । समुद्रं जीर्णवान्योऽसौ विन्ध्यारिः प्रीयतां मम ॥ अधोमुखस्थितो देवः पृथिवीं यश्च व्यापकः । शम्भोश्च वल्लभो नित्यं स वास्तुः प्रीयतां मम ॥ हेरकादीनि चान्यानि वटुकाश्चरिकयादयः । भूपातालखदिग्व्याप्य क्षेत्रेशाः प्रीयतां मम ॥ पृथिवीं द्यां चान्तरिक्षं समस्तभुवनानि च । अमरा येऽवतिष्ठन्ति ते देवाः प्रीयन्तां मम ॥ भद्रा भगवती कृष्णा तारा काली च पार्वती । मङ्गला शिवरात्री च नवदुर्गा च प्रीयताम् ॥ वसन्तश्च तथा ग्रीष्मो वर्षा श्चैव शरत्तथा । हेमन्तः शिशिरश्चैव प्रीयन्तामृतवो मम ॥ ॥ अग्न्यादित्यौ "इत्यादि, हेरुकादयो बटुकादयः चत्वारो वेदाः साङ्गाः सोपनिषदः सायुधाः सपरिवारा यवतिलतण्डुलहोमैः प्रीयन्तां प्रीता मे सन्तु ॥ इति यवतिलतण्डुलभागो द्वितीयः ॥ ४७ ॥

## अथाज्यभागस्तृतीयः ॥

### (विष्णुपञ्चके) पुरुषसूक्तं (प्रथम् १) ॥ ४८ ॥

ॐनमो नारायणाय ॥ ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः । केयूरवान् कनककुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ १ ॥ शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं, विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् । लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं, वन्दे

विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥ २ ॥ आनुष्टुभस्य सूक्तस्य त्रिष्टुबन्तस्य देवता। विश्वात्मा पुरुषः साक्षादृषिर्नारायणः स्मृतः ॥१॥ "पुरुषमेधः पुरुषस्य नारायणस्याऽऽर्षम्" ॥ ॐसहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिं विश्वतो वृत्वाऽत्यऽतिष्ठद्दशाङ्गुलम् ॥ पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्। उताऽमृतत्वस्येशानो यदऽन्नेनाऽतिरोहति ॥ एतावानऽस्य महिमाऽतोज्यायांश्च पुरुषः। पादोऽस्य विश्वा भूतानि त्रिपादऽस्याऽमृतं दिवि ॥ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽऽस्येऽहाऽभवत्पुनः । ततो विष्वङ्व्यक्रामत्साशनानशने अभि ॥ तस्माद्विराडऽजायत विराजो अधि पुरुषः। स जातो अत्यरिच्यत पश्चाद्भूमिमऽथो पुरः ॥ यत्पुरुषेण हविषा देवा यज्ञमऽतन्वत । वसन्तो अस्याऽसीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमऽग्रतः। तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम्। पशूंस्ताँश्चक्रे वायव्यानाऽऽरण्यान्ग्राम्याँश्च ये ॥ तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ तस्मादऽश्वा अजायन्त ये के चोभयादतः। गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजाऽवयः ॥ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्। मुखं किमऽस्य कौ बाहू का ऊरू पादा उच्येते ॥ ब्राह्मणोऽस्य मुखमाऽऽसीद्बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो

[12]अंजायत ॥ चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत । मुखा-
दिन्द्रश्चाग्निश्च प्राणाद्वायुर[13]जायत ॥ नाभ्या आसीदऽन्तरिक्षं
शिर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ-
नऽ[14]कल्पयत् ॥ सप्ताऽस्याऽसन्परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं प[15]शुम् ॥ "तेजोऽसि" यज्ञेन
यज्ञमऽयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं
महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति दे[16]वाः ॥ ४८ ॥

(विष्णुपञ्चके) बृहत्पुरुषसूक्तं (द्वितीयम् २) ॥ ४८ ॥

(सहस्रशीर्षं दिव्यं तु विश्वाद्यं विश्वसम्भवम् । विश्वं नारा-
यणं देवमऽक्षरं परमं पदम् ॥ १ ॥) "पुरुषमेधः पुरुषस्य नाराय-
णस्य" ॐसहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं
सर्वतः स्पृत्वाऽत्यऽतिष्ठद्दशा[1]ङ्गुलम् ॥ पुरुष एवेदं सर्वं यद्भूतं
यच्च भव्यम् । उताऽमृतत्वस्येशानो यदऽन्नेनाऽतिरो[2]हति ॥
एतावानऽस्य महिमाऽतो ज्यायांश्च पूरुषः । पादोऽस्य सर्वा
भूतानि त्रिपादऽस्याऽ[3]मृतं दिवि ॥ त्रिपादूर्ध्व उदैत्पुरुषः
पादोऽस्येहाऽऽभवत्पुनः । ततो भूमिं व्यक्रामत्साशनाऽनशने
[4]अभि ॥ ततो विराडऽजायत विराजो अधिपुरुषः । स जातो
अतिरिच्यत पश्चाद्भूमिमऽथो [5]पुरः ॥ यत्पुरुषेण हविषा देवा
यज्ञमतन्वत । वसन्तो अस्याऽसीदाज्यं ग्रीष्म इध्मः श[6]रद्धविः ॥
तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमऽग्रतः । तेन देवा अयजन्त

साध्या ऋषयश्च ये ॥ तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम् ।
पशूँस्ताँश्चक्रिरे वायव्यानाऽऽरण्यान्ग्राम्याँश्च ये[८] ॥ तस्माद्यज्ञा-
त्सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजु-
स्तस्मादजायत[९] ॥ तस्मादश्वा अजायन्त ये च के चोभयादतः ।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः[१०] ॥ यत्पुरुषं व्यदधुः
कतिधैनमऽकल्पयत् । मुखं किमऽस्याऽसीत्कौ बाहू का ऊरू
पादा उच्येते[११] ॥ ब्राह्मणोऽस्य मुखमाऽऽसीद्बाहू राजन्यः कृतः ।
ऊरू तदऽस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत[१२] ॥ चन्द्रमा मनसो
जातश्चक्षोः सूर्योऽधिसूर्यः । नसो वायुश्च प्राणश्च मुखादऽग्नि-
रऽजायत[१३] ॥ नाभ्या आसीदऽन्तरिक्षं शीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन्[१४] ॥ सप्ताऽस्या-
ऽसन्परिधयस्त्रिः सप्त समिधः कृताः । देवा यद्यज्ञं तन्वाना
अबध्नन् पुरुषं पशुम्[१५] ॥ वेदाऽहमेतं पुरुषं महान्तमाऽऽदित्यवर्णं
तमसः परस्तात् । सर्वाणि रूपाणि विभज्य धीरो नामानि
कृत्वाऽभिवदन्यदाऽऽस्ते[१६] ॥ धाता पुरस्ताद्यमुदाजहार शक्रः प्रवि-
द्वान्प्रदिशश्चतस्रः । तमेव विदित्वाऽमृतत्वमेति नाऽन्यः पन्था
अयनाय विद्यते[१७] ॥ यज्ञेन यज्ञमऽयजन्त देवास्तानि धर्माणि
प्रथमान्यासन् । तेह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः
सन्ति देवाः[१८] ॥ "ते०" अद्भ्यः सम्भृतः पृथिव्या रसाद्विश्वक-
र्मणः समवर्तताऽधि । तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य

देवमाऽजानमऽग्रे ॥ "इति पूर्वनारायणम् । अथोत्तरनारायणम्" ॐप्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते । तस्य योनिं परिपश्यन्ति धीरास्तस्मिंस्तिष्ठन्ति भुवनानि विश्वाः ॥ वेदाऽहमेतं पुरुषं महान्तमाऽदित्यवर्णं तमसस्तु पारे । तमेव विदित्वाऽतिमृत्युमेति नाऽन्यः पन्था विद्यतेऽयनाय ॥ यो देवेभ्य आतपति यो देवानां पुरोहितः । पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥ रुचं ब्राह्मयं जनयन्तो देवा अग्रे यदऽब्रुवन् । यस्त्वेवं ब्राह्मणो विद्यात्तस्य देवा आसन्वशे ॥ श्रीश्च ते लक्ष्मीश्च ते पत्न्या अहोरात्रे पार्श्वे नक्षत्राणि रूपमऽश्विनौ व्यात्तम् । इष्णन्निषाण इषाणाऽमुं म इषाण सर्वलोकं म इषाण ॥ तदेवाऽग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः । तदेव शुक्रं तद्ब्रह्म तदापस्तत्प्रजापतिः ॥ सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादऽधि । कलाः काष्ठा मुहूर्ताश्चाऽहोरात्राणि सर्वशः ॥ अर्धमासा मासा ऋतवः परिवत्सराः । स आपः स दुघे उभे इमे अन्तरिक्षमऽथो स्वः ॥ नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभ । न तस्येशे कश्चन यस्य नाम महद्यशः ॥ न सन्दृशे तिष्ठति रूपमऽस्य, न चक्षुषा पश्यति कश्चनैनम् । हृदा मनीषा मनसाऽभिक्लृप्तो य एतद्विदुरऽमृतास्ते भवन्ति ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्रिरऽजायत ततः समुद्रो अर्णवः ॥ समुद्रादऽर्णवादऽधि संवत्सरो अजायत । अहोरात्राणि विद-

यद्विश्वस्य मिषतो वशी ॥ सूर्याचन्द्रमसौ धाता यथापूर्वमऽकल्पयत् । दिवं च पृथिवीं चाऽन्तरिक्षमऽथो स्वः ॥ "ते०" अद्भ्यः सम्भृतः पृथिव्या रसाद्विश्वकर्मणः समवर्तताग्रे । तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥ "सरिताङ्काश्यपीनां सरितो यज्ञकीर्तिमिच्छमानानाम्" ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ यः प्राणतो निमिषितश्च राजा पतिर्विश्वस्य जगतो बभूव । ईशेयो अस्य द्विपदश्चतुष्पदः कस्मै० ॥ य ओजोदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः । यस्य च्छायामृतं यस्य मृत्युः कस्मै० ॥ येन द्यौरुग्रा पृथिवी दृढा येन सुस्तम्भितं येन नाकम् । यो अन्तरिक्षं विममे वरीयः कस्मै० ॥ य इमे द्यावापृथिवी तस्तभाने आधारयद्रोधसी रेजमाने । यस्मिन्नधि विततः सूर एति कस्मै० ॥ यस्येमे विश्वे गिरयो महित्वा समुद्रं यस्य रसया सहाऽहुः । दिशो यस्य प्रदिशः पञ्चदेवी कस्मै० ॥ आपो ह यन्महतीर्विश्वमायुर्गर्भं दधाना जनयन्तीरऽग्निम् । ततो देवानां निरवर्तताऽसुरेकः कस्मै० ॥ "ते०" आ नः प्रजाञ्जनयतु प्रजापतिर्धाता दधातु सुमनस्यमानः । संवत्सर ऋतुभिश्चाक्लृपानो मयि पुष्टिं पुष्टिपतिर्दधातु ॥ "आगस्त्यस्य च" येनस्तत्पश्यद्भुवनस्य विद्वान्यत्र विश्वं भवत्येकनीडम् । यस्मिन्निदं सञ्च विचैति सर्वं स ओतः

प्रोतश्च विभुः प्रजासु ॥ प्रतद्वोचेदऽमृतन्नु विद्वान्गन्धर्वो नाम निहितङ्गुहासत् । त्रीणि पदानि निहिता गुहासु यस्तानि वेद स पितुष्पितांऽसत् ॥ सतो बन्धुर्जनिता संविधाता नामानि वेद भुवनानि विश्वा । यत्र देवा अमृतमाऽनशानास्तृतीये धामन्नऽभ्यैरयन्त ॥ परीत्य भूतानि परीत्य लोकान्परीत्य सर्वान्प्रदिशो दिशश्च । प्रजापतिः प्रथमजा ऋतस्यात्मनात्मान-भुप संविवेश ॥ परिद्यावापृथिवी वितते सद्य इत्वा परिलोका-परिदिशः परिस्वः । ऋतस्य तन्तुं विततं विधृत्य तदपश्यत्तद-भवत्तदासीत् ॥ सदसस्पतिमऽद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषम् ॥ "ते०" यस्मादऽन्यो न परोऽस्ति जातो य आविवेश भुवनानि विश्वा । प्रजापतिः प्रजया संविदान-स्त्रीणि ज्योतींषि सचते स षोडशी ॥

(विष्णुपञ्चके) लक्ष्मीसूक्तं (तृतीयम् ३) ॥ ४८ ॥

ॐपद्मद्वयवराभीष्टयुक्तपाणिचतुष्टयाम् । पद्मवर्णां भजे पद्म-शायिनीं पद्मवासिनीम् ॥ पुस्तकाक्षाऽमयाब्जाढ्यां सितवर्णां त्रिलोचनाम् । महापद्मनिषण्णां तां लक्ष्मीं गजगतां नमः ॥१॥ करयुगलगृहीतं पूर्णकुम्भं दधानां क्वचिदऽमलगजस्थां शङ्खच-क्राब्जपाणिम् । क्वचिदऽपि दयिताङ्गे चामरव्याग्रहस्तां क्वचि-दपि सृणिपाशौ बिभ्रतीं नौमि लक्ष्मीम् ॥ १ ॥ "हिरण्यवर्णा-मेकोनाश्रीर्भार्गव्या श्रीरऽलक्ष्मीघ्नं श्रेय्यामानुष्टुभं वैशकर्यन्तं हि साम्रेयी

चतुर्थी प्रस्तारपंक्तिस्त्रिष्टुभौ पञ्चदश्युपरिष्टाद्बृहती श्रीपुत्राः परिषद्" ॥
ॐहिरण्यवर्णां हरिणीं सुवर्णरजतस्रजम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममाऽवह[1] ॥ तां म आवह जातवेदो लक्ष्मी-मनपगामिनीम् । यस्यां हिरण्यं विन्देयं गामऽश्वं पुरुषानऽहम्[2] ॥ अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् । श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम्[3] ॥ कांस्यस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् । पद्मस्थितां पद्मवर्णां तामिहोपह्वये श्रियम्[4] ॥ चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देव-जुष्टामुदाराम् । तां पद्मनेमिं शरणं प्रपद्ये अलक्ष्मीर्मे नश्यतां त्वां वृणोमि[5] ॥ आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः । तस्य फलानि तपसा नुदन्तु मय्यऽन्तरायांश्च बाह्या अलक्ष्मीः[6] ॥ उपैतु मां देवसखः कीर्तिश्च मणिना सह । प्रादुर्भूतोऽस्मि[7] राष्ट्रेऽस्मिन्कीर्तिं वृद्धिं दधातु[8] मे ॥ क्षुत्पिपासा-मलां ज्येष्ठामऽलक्ष्मीं नाशयाम्यऽहम् । अभूतिमऽसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करी-षिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्[9] ॥ मनसा काममाकूतिं वाचः सत्यमऽशीमहि । पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः[10] ॥ कर्दमेन प्रजा भूता मयि सम्भव कर्दम । श्रियं वासय मे कुले मातरं पद्ममालिनीम्[11] ॥ आपः स्रवन्तु स्निग्धानि चिक्लीत वस मे गृहे । नि च देवीं मातरं श्रियं

वासय मे कुले[१२] ॥ आर्द्रां पुष्करिणीं पुष्टां पिङ्गलां पद्ममालि-
नीम् । सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो ममाऽवह[१३] ॥ आर्द्रां
पुष्करिणीं यष्टिं सुवर्णां हेममालिनीम् । चन्द्रां हिरण्मयीं लक्ष्मीं
जातवेदो ममावह[१४] ॥ तां म आवह जातवेदो लक्ष्मीमऽनपगा-
मिनीम् । यस्यां हिरण्यं प्रभूतं गावो दास्यो विन्देयं पुरुषानऽ[१५]-
हम् ॥ य आनन्दं समाविशदुपधावन्विभावसुम् । श्रियः सर्वा
उपासिष्व चिक्लीत वस[१६] मे गृहे ॥ कर्दमेन प्रजाः सृष्टाः सम्भू-
तिङ्गमयामसि । अदधादुपगादेषाङ्कामान्संसृज्महे[१७] ॥ जातवेदः
पुनीहि मां रायस्पोषञ्च धारय । अग्निर्मा तस्मादेनसो विश्वा[१८]-
न्मुञ्चत्वंहसः ‘‘तेजोऽसि’’ अच्छान्नमित्रमहो देवो देवानग्ने वोचः
सुमतिं रोदस्योः । वीहि स्वस्ति सुक्षितिं दिवो नॄन्द्विषो अहांसि
दुरिता तरेम तातरेम तवावसा[१९] तरेम ॥

## (विष्णुपञ्चके) आयुष्यसूक्तं (चतुर्थम् ४) ॥ ४८ ॥

आयुष्यं दश दाक्षायणायैकर्चाः सनकः सनन्दनः सनातनः सहसंज्ञः समः सुश्रीः सुवाक्सर्वो हिरण्यात्मस्तुतिः पञ्चम्यष्टमी नवम्यस्त्रिष्टुभः सप्तमी शक्वरी आद्या चतुर्थी च ॥ ॐ आयुष्यं वर्चस्यं रायस्पोषमौद्भिदम् । इदं हिरण्यं वर्चस्वज्जैत्रायाविशतादिमाम् ॥ उच्चैर्वाजी पृतनाषाट् सभासाहं धनञ्जयम् । सर्वाः समग्रा ऋद्धयो हिरण्येऽस्मिन्समाहिताः ॥ शुनं महां हिरण्यस्य पितुर्नामेव जग्रभ । तेनेमां सूर्यत्वचमऽकरं पुरुषप्रियम्[३] ॥ सम्राजञ्च विरा-

जश्चाभिष्टिर्या च मे ध्रुवा। लक्ष्मी राष्ट्रस्य या मुखे तया मामिन्द्र संसृँज ॥ अग्नेः प्रजातं परि यद्धिरण्यमऽमृतं जज्ञे अधि मर्त्येषु। य एनद्वेद स इदेन गर्हति जरा मृत्युर्भवति यो बिँभर्ति ॥ यद्वेद राजा वरुणो यदु देवी सरस्वती। इन्द्रो यद्वृत्रहा वेद तन्मे वर्चस्व आँयुषे ॥ न तद्रक्षांसि न पिशाचाश्चरन्ति देवानामोजः प्रथमजं ह्येतत्। यो बिभर्ति दाक्षायणा हिरण्यं स देवेषु कृणुते दीर्घमायुः, स मानुष्येषु कृणुते दीर्घमाँयुः ॥ यदाऽबध्नन्दाक्षायणा हिरण्यं शतानीकाय सुमनस्यमानाः। तन्म आबध्नामि शतशारदायाऽयुष्माञ्जरदष्टिर्यथा सँत् ॥ घृतादुल्लुप्तं मधुमत्सुपर्णन्धनञ्जयन्धरणन्धारयिष्णु। मृणन्सपत्नानऽधरांश्च कृण्वदारोह मां महते सौँभगाय ॥ "तेजोऽसि" प्रियं मां कुरु देवेषु प्रियं राजसु मां कुरु। प्रियं विश्वेषु गोप्त्रेषु मयि देहि रुचा रुँचाम् ॥

(विष्णुपञ्चके) अथ महालक्ष्मीसूक्तम् (पञ्चमं ५) ॥ ४८ ॥

( पीयूषामृतकल्लोलसुधास्वादसुलोलपाम्। आनन्दवदनां देवीं सिद्धलक्ष्मीं नमाम्यहम् ॥) "अग्निवारुणीति वैकुण्ठस्य ब्रह्मगः" ॐ अग्निवारुणीमानुड्वाहीमालभेताऽनाज्ञात यक्ष्मो गृहीतोऽनाज्ञातयक्ष्मो वा, एतां वित्तो या स्त्रीसत्यानड्वाही तस्मादेनामऽनाज्ञात यक्ष्मगृहीत आलभेताग्निः सर्वा देवता यद्देवास्य देवताभिर्निषितं, तदग्निना मुञ्चति यद्वारुणगृहीतं तद्वरुणेन यद्व-

हिनी तेनाग्नीयी यल्क्षीसती दान्ता, तेन वारुणी तस्मादाऽग्नि-वारुणी भवति, त्वाष्ट्रमांसे पदमालभेत पशुकामो मिथुनो वा एष योऽसेपात्वष्टा, मिथुनस्य प्रजनयिता तमेव भागधेयेनोपधावति, सोऽस्मा एतस्मान्मिथुनात्पशून्प्रजनयति, वरुणँ श्याम-शितिकण्ठमालभेत, यं ज्योमानं यक्ष्मो गृह्णीयाद्वारुणो वा एतं गृह्णाति, यं ज्योमानं यक्ष्मो गृह्णाति, यद्वारुणो वरुणादेवैनं मुञ्चति, पाप्मनैष गृहीतो, य आमज्यावी श्याम इव पाप्मा यच्छ्यामपाप्मानमेवापहते। यच्छितिकण्ठो वरुणपाशमेव तेन प्रमुञ्चत, आश्विनं धूम्रललाममालभेत, यो दुर्ब्राह्मणं सोमं पिपाययिषेदऽश्विनौ वै देवानामऽसोमपा आस्तां तौ पश्चा सोमपीथं प्राप्नुतामऽश्विना एतस्य देवता, यः पश्चा सोमपस्ता एव भागधेयेनोपधावति, ता एनँ सोमपीथाय परिणयतः स्तायदिव यजेत स्तायदिव हि दुर्ब्राह्मणो ब्राह्मणो वभूषति धूम्र इव वा, एष यो दुर्ब्राह्मणो यद्धूम्रो धूम्रिमाणमेवापहते। यल्ललामो मुखत एव तेन तेजो धत्ते सारस्वतीन्धेनुष्टरीमाऽलभेत यं भ्रातृव्यानीव श्वासयेरन्वाचा वा एत एनं निःश्वासयन्ति वाक्सरस्वती यत्सरस्वती वाचैवैषां वाचं प्रतिश्रीणाति। धेनुर्वा एषा सती न दुहे तस्माद्धेनुष्टर्युच्यते यद्धेनुष्टरी वाचमेवैषां स्तरीकरोति सरस्वतीं धेनुष्टरीमालभेत यमऽजग्निवांसमऽभिशंसेयुरऽशान्ता वा एनं वा गृच्छति, यमऽजग्निवांसमऽभिशंसन्ति

वाक्सरस्वती यत्सरस्वती वाचैवैषां वाचं शमयति । ॐधेनुर्वा एषा सती न दुहे तस्माद्धेनुष्टर्युच्यते यद्धेनुष्टरी वाचमेवैषां स्तरीकरोति, सावित्रं पुनरुत्सिष्टमालभेत, यः पुरा पुण्यो भूत्वा पश्चा पापीयान्स्याद्यया वा एष देवतया पुरा पुण्यो भवति, सा हि वा एतमऽनुसृजत्यऽथैष पापीयान्भवति सविता श्रियः प्रसविता तमेव भागधेयेनोपधावति स एनं पुनः श्रिये प्रसुवति, पापो वा एष पुरा भूत्वा पश्चाच्छ्रियमाप्नोति "तेजोऽसि" योऽनड्वान्भूत्वोक्षा भवति यथैव स श्रियं प्राप्नोत्येवमेवैनं श्रियं प्रापयति ॥ ॐमातर्नमामि कमले कमलायताक्षि ! श्रीविष्णुहृत्कमलवासिनि विश्वमातः । क्षीरोदजे कमलकोमलगर्भगौरि लक्ष्मीः प्रसीद सततं नमतां शरण्ये ॥ ॐरथे अक्षेषु वृषभस्य वाजे वाते पर्जन्ये वरुणस्य शुष्मे । इन्द्रं या देवी सुभगा जजान सेयमऽगाद्वर्चसा संविदाना ॥ १ ॥ या हस्तिनि द्विपिनि या हिरण्ये गोष्वऽश्वेषु पुरुषेष्वन्तः । इन्द्रं० ॥ २ ॥ सिंहे व्याघ्रे उत या पृदाकौ त्विषिरग्नौ ब्रह्मणे सूर्ये या । इन्द्रं० ॥ ३ ॥ "ते०" या राजन्ये दुन्दुभावायतायामऽश्वस्य क्रन्दे पुरुषस्य मायौ । इन्द्रं० ॥ ४ ॥ मङ्गल्यमेतत्परमं पवित्रं संसारदुःखौघविनाशकारि । सुखप्रदं धर्मविदां नराणां मनोरथावाप्तिकरं प्रदिष्टम् ॥ भगवान्देवकीपुत्रः शङ्खचक्रगदाधरः । लक्ष्मीकान्तो महाबाहुः प्रीयतां केशवः सदा ॥ "अनेन मंत्रपाठेन आत्मनो० भगवान् वासुदेवः

॥ ८ ॥ सर्वपापहरः, सर्वसिद्धिदः परब्रह्मस्वरूपः, लक्ष्मीसहितो नारायणः प्रीयतां प्रीतोऽस्तु ॥" इति विष्णुपञ्चकम् ॥ ४८ ॥

अथ (रुद्रपञ्चके) रुद्रमन्त्रसूक्तं (प्रथमम् १) ॥ ४९ ॥

ॐ प्रणतोऽस्मि महादेव प्रपन्नोऽस्मि सदाशिव । निवारय महामृत्युं मृत्युञ्जय नमोऽस्तु ते ॥ देवं सुधाकलशसोमकरं त्रिनेत्रं पद्मासनं च वरदाभयदं सुशुभ्रम् । शङ्खाभयाऽब्जवरभूषितया च देव्या वामेऽङ्कितं शमनभङ्गहरं नमामि ॥ शुद्धस्फटिकसङ्काशं त्रिनेत्रं पञ्चवक्त्रकम् । गङ्गाधरं दशभुजं सर्वाभरणभूषितम् ॥ १ ॥ नीलग्रीवं शशांकाङ्कं नागयज्ञोपवीतिनम् । व्याघ्रचर्मोत्तरीयं च वरेण्यमऽभयप्रदम् ॥ २ ॥ कमण्डल्वऽक्षसूत्राभ्यामऽन्वितं शूलपाणिकम् । ज्वलन्तं पिङ्गलजटाशिखमुद्योतकारिणम् ॥ ३ ॥ अमृतेनाप्लुतं हृष्टमुमादेहार्धधारिणम् । दिव्यसिंहासनासीनं दिव्यभोगसमन्वितम् ॥ ४ ॥ दिग्देवतासमायुक्तं सुरासुरनमस्कृतम् । नित्यं च शाश्वतं शुद्धं ध्रुवमऽक्षरमऽव्ययम् ॥ ५ ॥ सर्वव्यापिनमीशानं रुद्रं वै विश्वरूपिणम् । एवं ध्यात्वा द्विजः सम्यक्ततो यजनमाऽऽरभेत् ॥ ६ ॥ मृत्युञ्जय महादेव पाहि मां शरणागतम् । जन्ममृत्युजरारोगैः पीडितं भवबन्धनात् ॥ ७ ॥ आराधितो मनुष्यैस्त्वं सिद्धैर्देवैर्महर्षिभिः । आवाहयामि भक्त्या त्वां गृहाणार्चां महेश्वर ॥८॥ हर शम्भो महादेव विश्वेशाऽमरवल्लभ । शिव शंकर सर्वात्मन्

नीलकण्ठ नमोऽस्तुते ॥ इति विज्ञाप्य देवेशं जपेन्मन्त्रं च त्र्यम्बकम् ॥ ९ ॥ "ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् १०८" ॐ आ त्वा वहन्तु हरयः सचेतसः श्वेतैरश्वैरिह केतुमद्भिर्वाता जवेन बलमद्भिर्मनोजवा यातु शीघ्रं मम रुद्राय हव्यन्देवानां च ऋषीणां चासुराणां च पूर्वजं सहस्राक्षं विरूपाक्षं विश्वरूपं महादेवं शिवमाऽवाहयाम्यहम् ॥ (ॐ आवाहयाम्यहं देवमीश्वरं पार्वतीपतिम् । वृषभासनमाऽरूढं नागाऽभरणभूषितम् ॥ प्रीयतां यजमानस्य तुष्टो भूयाज्जगत्पतिः । शुक्लवर्णो महातेजाः शुक्लस्रग्धामभूषितः । बलिः पुष्पं चरुश्चैव दीपोऽयं प्रतिगृह्यताम्) ॥ "तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ ३॥" ॐ शतरुद्रियं देवानां रुद्रशमनं भवाय शर्वीयश्च प्रत्युत्क्रान्तानुवाकौ देवर्षी रुद्रदैवत्यस्त्रिष्टुप् छन्दः चयने विनियोगः, नमस्ते देवा रौद्रमानुष्टुभमाऽऽद्या गायत्री पंचमषष्ठ्यौ, पाङ्क्त्यान्ता महापाङ्क्तिर्मा भैरेकपदा जगत्यनुष्टुप् त्रिष्टुप् महाबृहती यवमध्या रुद्रो देवता चरमेष्टिका, अस्य रुद्रस्य प्रश्नस्य अनुष्टुप् छन्दः अघोर ऋषिः सङ्कर्षणमूर्तिः सुरूपो योऽसावादित्यः परः पुरुषः स एष देवता अग्निः क्रतुचरमायामिष्टिकायां शतरुद्रे विनियोगः, सकलस्य रुद्राध्यायस्य श्रीमहारुद्रो देवता एका गायत्री छन्दः तिस्रोऽनुष्टुभस्तिस्रः पङ्क्तयः सप्ताऽनुष्टुभो द्वे ज-

गत्यौ परमेष्ठी ऋषिः आत्मनो० समस्तपापक्षयार्थे पाठे विनियोगः ॥ ("अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यश्च । सर्वथा शर्वशर्वेभ्यो नमस्ते रुद्ररूपेभ्यः १०८") कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम् । सदा रमन्तं हृदयारविन्दे भवं भवानीसहितं नमामि ॥ ("चम" गात्रं भस्मसितं) ("रुद्र") ॐनमः शिवाय वरदाय १० ॐनमस्ते रुद्र मन्यवे बाहुभ्यामुत ते नम उत त इषवे नमः । या ते रुद्र शिवा तनूरऽघोराऽपापकाशिनी । तयानस्तन्वा शन्तमया गिरिशन्ताऽभिचाकशीहि । यामिषुङ्गिरिशन्त ! हस्ते बिभर्ष्यस्तवे, शिवां गिरित्र ताङ्कुरु मा हिंसीः पुरुषं जगत् । शिवेन वचसा त्वा गिरिशाच्छा वदामसि, यथा नः सर्वमिज्जगदाऽयक्ष्मं सुमना असत् । अध्यवोचदऽधिवक्ता प्रथमो दैव्योभिषक्, अहींश्च सर्वाञ्जम्भय सर्वांश्च यातुधान्योऽधराचीः परासुवः । असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः, ये चेमे रुद्रा अभितो दिक्षु श्रिताः सहस्राशो वैषां हेड ईमहे । असौ योऽवसर्पति नीलग्रीवो विलोहितः, उतैनं गोपा अदृश्रन्नुतैनमुदहार्यः । उतैनं विश्वा भूतानि स दृष्टो मृडयति नः, नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे । अथो य अस्य सत्त्वानोऽहन्तेभ्योऽकरं नमः, प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् । याश्च ते हस्त इषवः परास्ता भगवो वप, विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ उत ॥ १ ॥ अनेशन्नस्येषव आभु-

रस्य निषङ्गधिः, या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः। तयाऽस्मान्विश्वतस्त्वमऽयक्ष्मेण परिभुज, परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः। अथो इषुधिस्तवारे अस्मन्निधीहि तम्, नमांसि त आयुधायाऽनातताय धृष्णवे। उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने, अवतत्य धनुष्ट्वं सहस्राक्ष शतेषुधे। निशीर्य शल्यानां मुखं शिवो नः सुमना भव, या त इषुः शिवतमा शिवं बभूव ते धनुः। शिवा शरव्या या तव तया नो मृड जीवसे ॥२॥ ("शता"मनो महन्तं) ("चम" वाजश्च मे) ("रुद्र") ॐनमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो, नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो, नमः शिष्पिञ्जराय त्विषीमते पथीनाम्पतये नमो, नमो बभ्लुषाय व्याधिनेऽन्नानाम्पतये नमो, नमो हरिकेशायोपवीतिने पुष्टानां पतये नमो, नमो भवस्य हेत्यै जगतस्पतये नमो, नमो रुद्रायाऽततायिने क्षेत्राणाम्पतये नमो, नमः सूतायाहन्त्याय वनानां पतये नमो, नमो रोहिताय स्थपतये वृक्षाणां पतये नमो, नमो मन्त्रिणे वाणिज्याय कक्ष्याणां पतये नमो, नमो भुवनपये वारिवस्कृतायौषधीनां पतये नमः॥ नम आक्रन्दाय त उच्चैर्घोषाय सत्त्वानां पतये नमो, नमः कृत्संवीताय धावते पत्तीनां पतये नमः॥३॥ ("चम" ज्यैष्ठ्यं चमे) ("रुद्र") नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमो, नमो निषङ्गिणे ककुभाय स्तेनानां प-

तये नमो, नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो, नमो निचराय परिचरायाऽरण्यानां पतये नमो, नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमो, नमः सृकायिभ्यो जिघांसद्भ्यो मुष्णतां पतये नमो, नमोऽसिमद्भ्यो नक्तंचरद्भ्यः प्रकृन्तानां पतये नमो, नम-उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमो ॥ नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमो, नम इषुमद्भ्यो धन्वायिभ्यश्च वो नमो, नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो, नम आयच्छद्भ्योऽस्यद्भ्यश्च वो नमो, नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमो, नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो, नमः शयानेभ्य आसिनेभ्यश्च वो नमो, नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो, नमः सभाभ्यः सभापतिभ्यश्च वो नमो, नमोऽश्वेभ्योऽश्वपतिभ्यश्च वो नमो, ("चम" शं चमे) ("रु") नम आव्याधिनीभ्यो विविध्यद्भ्यश्च वो नमो, नम उगणाभ्यस्तृंहतीभ्यश्च वो नमो, नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो, नमो गणेभ्यो गणपतिभ्यश्च वो नमो, नमः कृच्छ्रेभ्यः कृच्छ्रपतिभ्यश्च वो नमो, नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो, नमः सेनाभ्यः सेनानीभ्यश्च वो नमो, नमोरथिभ्यो वरूथिभ्यश्च वो नमो, नमो महद्भ्योऽर्भकेभ्यश्च वो नमो, नमो युवभ्य आशिनेभ्यश्च वो नमो, नमः क्षुत्तृड्भ्यः संग्रहीतृभ्यश्च वो नमो, नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो, नमः कुलालिभ्यः कर्मारेभ्यश्च वो नमो, नमः पुञ्जिष्ठेभ्यो निषादेभ्यश्च वो नमो, नमः श्वनिभ्यो

मृगायुभ्यश्च वो नमो, नमः श्वभ्यः श्वपतिभ्यश्च वो नमो ॥ ("चम" ऊर्क्कमे "रुद्र") नमो भवाय च रुद्राय च, नमः शर्वाय च पशुपतये च, नमो नीलग्रीवाय च शितिकण्ठाय च, नमो व्युप्तकेशाय च कपर्दिने च, नमः सहस्राक्षाय च शतधन्वने च ॥ नमो गिरिशाय च शिपिविष्टाय च, नमोमीढुष्टमाय चेषुमते च, नमो ह्रस्वाय च वामनाय च, नमो बृहते च वर्षीयसे च, नमो वृद्धाय च सवृद्धने च, नमोऽग्र्याय च प्रथमाय च, नम आशवे चाऽजिराय च, नमः शीभाय च शीघ्याय च, नम ऊर्म्याय चाऽवस्वन्याय च, नमो नाद्याय च द्वीप्याय च ("चम" अश्मा चमे) ("रुद्र") नमो ज्येष्ठाय च कनिष्ठाय च, नमः पूर्वजाय चाऽपरजाय च, नमो मध्यमाय चाऽप्रगल्भाय च, नमो बुध्न्याय च जघन्याय च, नमः सोभ्याय च प्रतिसर्याय च, नम आशुषेणाय चाऽशुरथाय च॥ नमो बिल्मिने च कवचिने च, नमो वर्मिणे च वरूथिने च, नमः शूराय चावभेदिने च, नमः श्रुताय च श्रुतसेनाय च, नमो याम्याय च क्षेम्याय च, नम उर्वर्याय च खल्याय च, नमः श्लोक्याय चावसान्याय च, नमः श्रवाय च प्रतिश्रवाय च, नमो वन्याय च कक्ष्याय च, ("चम"अग्निश्चम इन्द्रश्चमे) ("रुद्र ') नमो दुन्दुभ्याय चाहनन्याय च, नमो धृष्णवे च प्रमृशाय च, नमो निषङ्गिणे चेषुधिमते च, नमस्तीक्ष्णेषवे चायुधिने च, नमः सायुधाय च सुधन्वने च ॥

नमः स्रुत्याय च पथ्याय च, नमः काट्याय च नीप्याय च, नमो नाद्याय च वैशन्ताय च, नमः कुल्याय च सरस्याय च, नमः कूप्याय चावट्याय च, नमो वर्ष्याय चाऽवर्ष्याय च, नमो मेघ्याय च विद्युत्याय च, नमो वीध्र्याय चातप्याय च, नमो वात्याय च रेष्म्याय च, नमो वास्तव्याय च वास्तुपाय च, ("चम"अंशुश्चमे) ("रुद्र") नमः सोमाय च रुद्राय च, नमस्ताम्राय चारुणाय च, नमः शङ्गवे च पशुपतये च, नम उग्राय च भीमाय च, नमो हन्त्रे च हनीयसे च, नमोऽग्रेवधाय च दूरेवधाय च, नमो वृक्षेभ्यो हरिकेशेभ्यो, नमस्ताराय, नमः शम्भवे च, मयोभवे च, नमः शङ्कराय च मयस्कराय च ॥ नमः शिवाय च शिवतराय च, नमः किंशिलाय च क्षयणाय च ("चम" इध्मा चमे) ("रुद्र") नम इरिण्याय च प्रपथ्याय च, नमः पुलस्तिने च कपर्दिने च, नमो गोष्ठ्याय च गृह्याय च, नमस्तल्प्याय च गेह्याय च, नमः पर्याय चावार्याय च, नमः प्रतरणाय चोत्तरणाय च, नमस्तीर्थ्याय च कुल्याय च, नमः फेन्याय च शिष्प्याय च, नमः सिकत्याय च प्रवाह्याय च, नमो ह्रदय्याय च निवेष्प्याय च, नमः काट्याय च गह्वरेष्ठ्याय च, नमः शुष्क्याय च हरित्याय च, नमोलोप्याय चोलप्याय च, नमः पांसव्याय च रजस्याय च, नमः सूर्म्याय चोर्म्याय च, नमः पर्ण्याय च पर्णशदाय च, नमः आखिदते च प्रखि-

दते च, नमोऽभिघ्नते चापगुल्मानाय च, नमः आखिदाय च विखिदाय च ॥ नमो वः किरिकेभ्यो, देवानां हृदयेभ्यो, नमो विचिनुत्केभ्यो, नमो विक्षीणकेभ्यो, नम आनिर्हतेभ्यः ॥ ("चम" अग्निश्च मे) ("रुद्र") द्रापे अन्धसस्पते दरिद्रनीललोहित, आसां प्रजानामेषां पुरुषाणामेषां पशूनां माभेर्मा रुङ्मानः किंचनाऽममत् । इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः । यथा नः शमऽसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥ या ते रुद्र शिवा तनूः शिवा विश्वाह भेषजीः, शिवा रुतस्य भेषजी तया नो मृड जीवसे । परिणो रुद्रस्य हेतिर्वृणक्तु परित्वेषस्य दुर्मतेरघायोः, अवस्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड । मीढुष्टम शिवतम शिवो नः सुमना भव, परमे वृक्ष आयुधन्निधाय कृत्तिं वसान उच्चर पिनाकम् । बिभ्रदुच्चर विकिरिड विलोहित नमस्ते अस्तु भगवः यास्ते सहस्रं हेतयोऽन्येऽस्मन्निव पान्तु ताः । ("चम" गर्भा च मे) ("रुद्र") सहस्रधा सहस्राणि हेतयस्तव बाह्वोः, तासामीशानो भगवः पराचीना मुखाकुरु ॥ ॐअसङ्ख्याताः सहस्राणि ये रुद्रा अधि भूम्याम्, तेषां सहस्रयोजनेऽवधन्वानि तन्मसि ॥ १ ॥ येऽस्मिन्महत्यऽर्णवेऽन्तरिक्षे भवा अधि, तेषां सहस्र० ॥ २ ॥ ये नीलग्रीवाः शितिकण्ठा दिवं रुद्रा उपाश्रिताः, तेषां० ॥ ३ ॥ ये नीलग्रीवाः शिपिकण्ठाः शर्वा अधः क्षमाचराः, तेषां० ॥४॥

ये वनेषु शिष्पिञ्जरा नीलग्रीवा विलोहिताः, तेषां० ॥ ५ ॥ येऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान्, तेषां० ॥ ६ ॥ ये भूतानामऽधिपतयो विशिखासः कपर्दिनः, तेषां० ॥ ७ ॥ ये पथीनां पथि रक्षय ऐड मृडाय व्युधः, ॥ तेषां० ॥ ८ ॥ ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः, तेषां० ॥ ९ ॥ य एतावन्तो वा भूयांसो वा दिशो रुद्रा वितष्ठिरे, तेषां० ॥१०॥ ॐनमो अस्तु रुद्रेभ्यो, ये दिवि, येषां वर्षमिषवस्तेभ्यो, दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः, तेभ्यो नमो अस्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥ १ ॥ ॐनमो अस्तु रुद्रेभ्यो येऽन्तरिक्षे येषां वात-मिषवस्तेभ्यो० ॥ २ ॥ ॐ नमो अस्तु रुद्रेभ्यो ये पृथिव्यां येषामऽन्नमिषवस्ते० ॥ ३ ॥ ("चम" एका च मे) (रुद्र "तेजोऽसि") यो रुद्रो० ॥ इति रुद्रमन्त्रसूक्तम् ॥ १ ॥

(रुद्रपंचके) चमानुवाकसूक्तं (द्वितीयम् २) ॥ ४९ ॥

("रुद्र" प्रणतोस्मि महादेवप्रपन्नोऽ ॥ "चम") गात्रं भस्मसितं सितं च हसितं हस्ते कपालं सितं, खट्वाङ्गं च सितं सितं च वृषभं कर्णे सिते कुण्डले । गङ्गाफेणसितो जटाजलसितश्चन्द्रः सितो मूर्धनि, सोऽयं सर्वसितो दधातु विभवं पापक्षयं शङ्करः ॥ "आशुः शिशान इति शुक्रज्योतिष्मानंऽशु प्रजननं सर्वाः प्रजाः कश्यपा इति कश्यपस्य वाजस्य प्रसवोऽग्नेः" ॐआशुःशिशानो

वृषभो न युध्मो, घनाघनः क्षोभणश्चर्षणीनाम् । सङ्क्रन्दनोऽनिमिष एकवीरः, शतँ सेना अजयत्साकमिन्द्रः ॥ सङ्क्रन्दनेनाऽनिमिषेण जिष्णुना, युत्कारेण दुश्च्यवनेन धृष्णुना । तदिन्द्रेण जयत तत्सहध्वं, युधो नर इषुहस्तेन वृष्णा ॥ स इषुहस्तैः सनिषङ्गिभिर्वशी सँस्रष्टः सयुध इन्द्रो गणेन । सँसृष्टजित्सोमपा बाहू, शर्ध्यूर्ध्वधन्वा प्रतिहिताभिरस्ता ॥ बृहस्पते परिधीया रथेन रक्षोहा मित्राँ अपबाधमानः । प्रभञ्जन्सेनाः प्रमृणो युधाजयन्नऽस्माकमेध्यविता रथानाम् ॥ बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः । अभिवीरो अभिषत्वा सहोजिज्जैत्रायनो रथमाऽतिष्ठ गोवित् ॥ गोत्रभिदङ्गोविदं वज्रबाहुं जयन्तमऽज्मा प्रमृणन्तमोजसा । इमँ स जाता अनुवीरयध्वमिन्द्रसखायमऽनुसंव्ययध्वम् ॥ अभिगोत्राणि सहसा गाहमानोऽदयोवीरः शतमन्युरिन्द्रः । दुश्च्यवनः पृतनाषाडऽयुध्योऽस्माकं सेना अवन्तु प्रयत्सु ॥ इन्द्र एषां नेता बृहस्पतिर्दक्षिणो यज्ञः पुर एतु सोमः । देवसेनानामऽभिभञ्जतीनां जयन्तीनां मारुतो यन्तु मध्ये ॥ इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्ध उग्रम् । महामनसां भुवनस्य वानां घोषो देवानां जयतामुदस्थात् ॥ अस्माकमिन्द्रः समृतेषु ध्वजेष्वऽस्माकं या इषवस्ता जयन्तु । अस्माकं वीरा उत्तरे भवन्त्वऽस्माँ उ देवा अवता भरेष्वा ॥ (तेजोसि० तिष्ठन्हु-

नेत्) शुक्रज्योतिश्च, चित्रज्योतिश्च, सत्यज्योतिश्च, ज्योतिष्मांश्च, सत्यश्चर्तपाश्चात्यँहा, ईदृङ्चान्यादृङ्च, सदृङ्च, प्रतिसदृङ्च, मितश्च, समितश्च, सभारा, ऋतश्च, सत्यश्च, ध्रुवश्च, धरुणश्च, धर्ताच, विधर्ताच, विधारय, ऋतजिच्च, सत्यजिच्च, सेनाजिच्च, सुषेणश्चान्तिमित्रश्च दूरे अमित्रश्च गण ईदृक्षास एतादृक्षास, ऊषुणः सदृक्षासः प्रतिसदृक्षास एतान मितासश्च, संमितासो नोअद्य, सभारसो मरुतो यज्ञे, अस्मिन्निन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानो यथेन्द्रन्दैवीर्विशो मरुतोऽनुवर्त्मानोभवन्नेवमिमं यजमानं दैवीश्च विशो मानुषीश्चानुवर्त्मानो भवन्तु ॥ ("रुद्र" ॐनमस्ते रुद्र मन्यवे ॥ "शता० क्षेपक" ( मा नो महान्तं ॥ ७ ॥ मानोस्तोके तनये० ॥ ८ ॥ ) ॐनमस्ते अस्तु भगवः परमेश्वर, विश्वेश्वर, महादेव, शिव, सशिव, सदाशिव, त्रिकालकाल, कालाग्निरुद्र, नीलकण्ठ, अमृतेश्वर, बहुरूप, अघोर, तत्पुरुष, महामृत्युञ्जयभट्टारक, ते नमो नमः ॥) (अग्नाविष्णू सजोषसा इमा वर्धन्तु वां गिरः, द्युम्नैर्वाजेभिरावृत्तम् ॥) प्रत्यऽनुवाके रुद्रमन्त्रमऽनु पठनीयं १ ॥ ("चम") वाजश्चमे, प्रसवश्चमे, प्रयतिश्चमे, प्रसृतिश्चमे, धीतिश्चमे, क्रतुश्चमे, स्वरश्चमे, श्लोकश्चमे, श्रावश्चमे, श्रुतिश्चमे, ज्योतिश्चमे, स्वश्चमे, प्राणश्चमे, व्यानश्चमे, अपानश्चमे, असुश्चमे, चित्तं चमे, आधीतं चमे, वाक्चमे, मनश्चमे, चक्षुश्चमे, श्रोत्रं चमे, दक्षश्चमे, बलं चमे, ओजश्चमे, सह-

श्चमे, आत्मा चमे, तनूश्चमे, शर्म चमे, वर्म चमे, अङ्गानिचमे, अस्थीनिचमे, परूंषिचमे, शरीराणिचमे, आयुश्चमे, जराचमे ॥ "क्षेपकं" ( यज्ञेन कल्पताम् ।) प्रत्यनुवाके चममनु पठनीयं, ("रुद्र") ॐनमो हिरण्यबाहवे० ॥ "अग्नाविष्णू०" । अनुवाकः ॥ २ ॥ ("चम") ॐज्यैष्ठ्यं चमे, आधिपत्यं चमे, मन्युश्चमे, भामश्चमे, अमश्चमे, अम्भश्चमे, जेमाचमे, महिमाचमे, वरिमाचमे, प्रथिमाचमे, वर्ष्माचमे, द्राघ्वाचमे, वृद्धंचमे, वृद्धिश्चमे, सत्यंचमे, श्रद्धाचमे, जगच्चमे, धनंचमे, क्रीडाचमे, मोदश्चमे, वशश्चमे, त्विषिश्चमे, सूक्तंचमे, सुकृतंचमे, जातंचमे, जनिष्यमाणंचमे, वित्तंचमे, वेद्यंचमे, भूतंचमे, भविष्यंचमे, सुगंचमे, सुपथंचमे, ऋद्धंचमे, ऋद्धिश्चमे, क्लृप्तंचमे, क्लृप्तिश्चमे, मतिश्चमे, सुमतिश्चमे ॥ ('यज्ञेनकल्पतां') "रुद्र" नमः सहमानायनिव्याधिने० ॥ अग्नाविष्णू०' ॥ अनु० ॥ ३ ॥ "चम") ॐशंचमे, मयश्चमे, प्रियश्चमे, अनुकामश्चमे, कामश्चमे, सौमनसश्चमे, भगश्चमे, द्रविणंचमे, भद्रंचमे, श्रेयश्चमे, वस्यश्चमे, यशश्चमे, यन्ताचमे, धर्ताचमे, क्षेमश्चमे, धृतिश्चमे, संविच्चमे, ज्ञातंचमे, विश्वंचमे, महश्चमे, सूश्चमे, प्रसूश्चमे, सीरंचमे, लायश्चमे, ऋतं चमे, अमृतंचमे, अयक्ष्मंचमे, अनामयंचमे, जीवातुश्चमे, दीर्घायुत्वंचमे, अनमित्रंचमे, अभयंचमे, सुगंचमे, शयनंचमे, सूषाश्चमे, सुदिनंचमे ॥

( 'यज्ञेन०' "रुद्र" ॐनम आव्याधिनेभ्यो विविध्यद्भ्यश्च वो नमो० ॥ 'अग्ना०' अनु० ॥४॥ "चम" ) उर्क्चमे, सूनृताचमे, पयश्चमे, रसश्चमे, घृतंचमे, मधुश्चमे, सग्धिश्चमे, सपीतिश्चमे, कृषिश्चमे, वृष्टिश्चमे, जैत्रंचमे, औद्भिदंचमे, रयिश्चमे, रायश्चमे, पुष्टंचमे, पुष्टिश्चमे, विभुश्चमे, प्रभुश्चमे, पूर्णंचमे, पूर्णतरं चमे, कुयवंचमे, क्षितिश्चमे, अन्नंचमे, इक्षुश्चमे, व्रीहयश्चमे, यवाश्चमे, माषाश्चमे, तिलाश्चमे, नीवाराश्चमे, श्यामकाश्चमे, अणवश्चमे, प्रियङ्गवश्चमे, गोधूमाश्चमे, मसूराश्चमे, मुद्गाश्चमे, खल्वाश्चमे । ( 'यज्ञे०' "रु" ॐनमो भवाय च रुद्राय च० । ('अग्ना०' । अनु० ॥ ५ ॥ "रु") ॐअश्मा चमे, मृत्तिकाचमे, गिरयश्च मे, पर्वताश्चमे, सिकताश्चमे, वनस्पतयश्चमे, हिरण्यंचमे, अयश्चमे, सीसंचमे, त्रपुश्चमे, श्यामंचमे, लोहितायसंचमे, अग्निश्चमे, आपश्चमे, वीरुधश्चमे, ओषधयश्चमे, कृष्टपच्यंचमे, अकृष्टपच्यंचमे, ग्राम्याश्चमे, पशव आरण्याश्चमे, वित्तंचमे, वित्तिश्चमे, भूतं चमे, भूतिश्चमे, वसुचमे, वसतिश्चमे, कर्म चमे, शक्तिश्चमे, अर्थश्चमे, एमश्चमे, इत्याचमे, गतिश्चमे । (यज्ञेन०' । "रुद्र" ॥ नमो ज्येष्ठाय च० । 'अग्ना०' । अनु० ॥६॥ "चम") ॐअग्निश्चम इन्द्रश्चमे, सोमश्चम इन्द्रश्चमे, सविता चम इन्द्रश्चमे, सरस्वतीचम, इन्द्रश्चमे, पूषाचम इन्द्रश्चमे, बृहस्पतिश्चम, इद्रश्चमे, मित्रश्चमइन्द्रश्चमे, वरुणश्चम इन्द्र०, धाताचम, इ०,

त्वष्टाचम इन्द्रश्चमे, मरुतश्चम इन्द्रश्चमे, विश्वेदेवाश्चम इन्द्रश्चमे, पृथिवीचम इ०, अन्तरिक्षं चम, इ०, द्यौश्चम, इ०, समाश्चम इन्द्रश्चमे, नक्षत्राणि चम,इन्द्रश्चमे, दिशश्चम इन्द्रश्चमे। ('यज्ञेन०' "रुद्र" नमो दुन्दुभ्याय च०। ('अग्ना०' अनु० ॥७॥ "चम") ॐ अंशुश्चमे, रश्मिश्चमे, दाभ्यश्चमे, अधिपतिश्चमे, उपांशुश्चमे, अन्तर्यामश्चमे, ऐन्द्रावायवश्चमे,मैत्रावरुणश्चमे, आश्विनश्चमे, प्रतिप्रस्थानश्चमे, शुक्रश्चमे, मन्थीचमे, आग्रायणश्चमे, क्षुल्लकवैश्वदेवश्चमे, ध्रुवश्चमे, वैश्वानरश्चमे, ऐन्द्राग्नश्चमे, वैश्वदेवश्चमे, मरुत्वतीयश्चमे, महेन्द्रीयश्चमे, सावित्रश्चमे, सारस्वतश्चमे, पत्नीवतश्चमे, हारियोजनश्चमे। ('यज्ञेन०' "रुद्र" नमः सोमाय च०। ('अग्ना०' अनु० ॥८॥ "चम") ॐइध्माचमे, स्रुचश्चमे, चमसश्चमे, वायव्यानिचमे, द्रोणकलशश्चमे, पूतभृच्चमे, अपूतभृच्चमे, ग्रावाणश्चमे,अधिषवणश्चमे, अवभृथश्चमे,स्वगाकारश्चमे। ('यज्ञे०' "रुद्र" नम इरिण्याय च०। ('अग्ना०' अनु ॥ ९ ॥ "चम") अग्निश्चमे, घर्मश्चमे, अर्कश्चमे, सूर्यश्चमे, प्राणाश्चमे, अश्वमेधश्चमे, पृथिवीचमे, दितिश्चमे, अदितिश्चमे, द्यौश्चमे, शक्करीरऽङ्गुलयोदिशश्चमे, यज्ञेनकल्पतां, व्रतं चर्तुश्च, संवत्सरश्च, तपश्चाहोरात्रे, ऊर्वष्ठीवे बृहद्रथन्तरश्चमे,। (यज्ञे०'। "रुद्र" द्रापे अन्धसस्पते०। ('अग्ना'। अनु०' ॥ १० ॥ "चम") ॐगर्भा चमे, वत्साचमे, त्र्यविश्चमे, त्र्यवीचमे, दित्यवाट् चमे, दित्यौही-

चमे, पञ्चाविश्चमे, पञ्चावीचमे, त्रिवत्सश्चमे, त्रिवत्साचमे, तुर्यवाट्चमे, तुर्यौहीचमे, पष्ठवाट् चमे, पष्ठौही चमे, उक्षा चमे, वशा चमे, अनुड्वाँश्चमे, धेनुश्चमे, ऋषभश्चमे, वेहश्चमे। ( 'यज्ञेन०' "रुद्र" सहस्रधा सहस्राणि० । ("अग्नावि" । अ० ॥ ११ ॥ "चम" ) ॐ एका चमे, तिस्रश्चमे, तिसृश्चमे, त्रय-स्त्रिंशश्चमे, चतुस्रश्चमे, अष्टौ चमे, अष्ट चमे, अष्टाचत्वारिंशच्चमे, वाजश्च, प्रसवश्चाऽपिजश्च, क्रतुश्च, वाक्पतिश्च, वसुश्च, स्वमौर्धो मूर्धा वैयशनो, व्यश्वाँन आन्त्योऽन्त्यो भौवनो भुवनस्य पतिः प्रजापतिरधिपतिरियन्ते राण्मित्रो यन्तासि यमन ऊर्जे त्वा वृष्टयै त्वा प्रजानां त्वाऽधिपत्याय, आयुर्यज्ञेनकल्पतां, मनो यज्ञे-न कल्पतां, प्राणो य०, चक्षुर्य०, श्रोत्रं य०, वाग्य०, आत्मा यज्ञेन कल्पतां, ब्रह्म य०, पृष्ठंय०, यज्ञो यज्ञेनकल्पताम्, ऋक्च, सामश्च स्तोमश्च यजुश्च बृहद्रथन्तरश्च, स्वर्देवा अगन्म, प्रजापतेः प्रजा अ-भूवन्नऽमृता अभूम वेट् स्वाहा। "वाजस्य नु प्रसवा इति षट्" ॐविश्वे अद्य मरुतो विश्व ऊतीर्विश्वे भवन्त्वऽग्नयः समिद्धाः। विश्वे मा देवा अवसागमन्निह विश्वमस्तु द्रविणं वाजे अस्मिन् ॥ १ ॥ आ मा वाजस्य प्रसवो जगम्यादाऽमाद्यावापृथिवी विश्वरूपे। आमा गन्तां पितरा मातरा चामा सोमो अमृत-त्वेन गम्यात् ॥ २ ॥ वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे। यस्यामिदं विश्वं भुवनमाविवेश तस्यां

नो देवः सविता धर्म साविषत् ॥ ३ ॥ वाजो मा सप्त प्रदिश-श्चतस्रो वा परावतः । वाजो मा विश्वैर्देवैर्धनसाता इहावतु ॥ ४ ॥ वाजो मे अद्य प्रसुवातिदानं वाजो देवान्हविषा वर्धयाति । वाजस्य हि प्रसवेनान्नमेति विश्वा आशा वाजपतिर्जयेयम् ॥ ५ ॥ वाजः पुरस्तादुत मध्यतो नो वाजो देवानृतुभिः कल्पयाति । वाजस्य हि प्रसवेनान्नमिति सर्वा आशा वाजपतिर्भवेयम् ॥ ६ ॥ सँमा सृजामि पयसा पृथिव्याः, सँमा सृजाम्यद्भिरोषधीभिः, सोऽहं वाजस्य नौम्यग्नेः ॥ ७ ॥ "ते०" पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे । पयोधाः पयस्वतीः प्रदिशः सन्तु मह्यम् ॥८॥ इति चमानुवाकसूक्तम् २ ।

(रुद्रपञ्चके) सौमारुद्रसूक्तं (तृतीयम् ३) ॥ ४९ ॥

ॐवन्दे रुद्रमुमापतिं सुरगुरुं वन्दे जगत्कारणं वन्दे पन्नगभूषणं शशिधरं वन्दे पशूनां पतिम् । वन्दे सूर्यशशाङ्कवह्निनयनं वन्दे मुकुन्दप्रियं वन्दे शैलसुतामनोहरतरं वन्दे शिवं शङ्करम् ॥ ॐ "सौमारुद्रमिति ईश्वरो भ्रातृव्यः, ब्राह्मणानि सुमन्तोः कश्यपस्य ब्रह्मणश्च" ॐसौमारुद्रं चरुं निर्वपेच्छुक्लानां व्रीहीणां श्वेतायाः श्वेतवत्साया आज्यं मथितँ स्यात्तस्मिन्ब्रह्मवर्चसकामः, स्वर्भानुर्वा आसुरः, सूर्यन्तमसाऽविध्यत्स न व्यरोचत, तस्मै देवाः प्रायश्चित्तिमैच्छँस्तमेतयेष्ट्या याजयँस्तयाऽस्मात्तमो-पाघ्नँस्तमसैष प्रावृतो, योऽलं ब्रह्मवर्चसाय तत्र ब्रह्मवर्चस्वी

भवति, तमएवास्मादऽपहन्ति, ब्रह्मवर्चसेनैनँ सँसृजति, श्वेतायाः श्वेतवत्सायाः आज्यं भवति, शुक्ला व्रीहय एवमिव वै, ब्रह्मवर्चसं ब्रह्मवर्चसमेव सन्ददाति ॥ घृतेन प्रोक्षन्ति, घृतेन मार्जयन्ति शान्त्यै शान्तिर्ह्यापोऽप्यस्य ताँ रात्रीमाऽपो गृहान्नावहरेयुः परिश्रिते यजेत, ब्रह्मवर्चसस्य परिगृहीत्यै, प्रादेशमात्रश्वरुरूर्ध्वो भवत्येवं तिर्यङ्केतावान्वै पुरुषो यावदऽस्य प्राणाँ अभि, यावानेवास्यात्मा तस्मात्तमोऽपहन्ति, साकं रश्मिभिः प्रचरन्त्यऽसा एवास्मादादित्य उद्यँस्तमोऽपहन्ति, तिष्यापौर्णमासे यजेत, तिष्यो वै रुद्रश्चन्द्रमाः सोमः सौमीरतः, प्राचीनमोषधयो रौद्रीः, प्रतीचीनमोषधयो रात्रीः प्रतीचीनं पुष्यन्ति, प्राचीनं शुष्यन्ति, प्रतीचीनं प्रत्यक्षमेवैना ऋध्नोतीश्वरो दुश्चर्मा भवितोर्य एतया यजेतेतीव स्वस्मादऽपहन्ति, मनोर्ऋचः सामिधीनीष्वऽप्यऽनुब्रूयान्मनुर्वा यत्किञ्चाऽवदत्तद्भेषजमाऽऽसीद्भेषजमेवास्मै करोत्यपक्षरन्ति सिन्धवो, मयोभुव इति, नराशंस्या परिददाति, शान्त्यै षट्पदा भवन्ति, षड्वा ऋतव ऋतुष्वेव परितिष्ठति ॥ ईश्वरस्तु तदऽतिदुर्चर्मैव भवितोस्तेजाँसि ह्येष प्रत्यारोहन्निति, सौमापौष्णश्चरुं पशुकामोऽनुनिर्वपेत्सोमो वै ब्राह्मणस्य, स्वा देवताः पशवः, पूषा स्वामेव देवतां, पशुभिर्व्हयते, त्वचमेव कुरुते, सौमारुद्रश्चरुं निर्वपेत्कृष्णानां व्रीहीणामभिचरन्सोमो वा आसां प्रजानामऽधिपती, रुद्रोऽग्निरऽधि-

पतिर्वध्यस्य चाऽवध्यस्य चेशेऽधिपतिमेवैनं निर्याश्य, रुद्रायाऽपिदधाति, कृष्णानां व्रीहीणां भवति, कृष्णमिव वै तमस्तमो मृत्युर्मृत्युनैवैनं ग्राहयति, शरमयं बर्हिः शीत्यै वैभीतक, इध्मो विभित्यै सौमारुद्रं चरुं निर्वपेत् ॥ भ्रातृव्यतायै वाऽद्वितीयतायै वा तस्यार्धमऽर्धं, सर्वं स्यादऽर्धं, शुक्लानां व्रीहीणाँ स्यादऽर्धं कृष्णानामऽर्धं, शरमयं बर्हिषोऽर्धं दर्भमयमऽर्धं वैभीतकमिध्मस्याऽर्धमऽन्यस्य वृक्षस्य सोमो वै ब्राह्मणस्य स्वा देवता स्वायामेवाऽस्मै देवतायां द्वितीयं जनयति, यदऽर्धमऽर्धं द्वितीयत्वायैव, तत्सौमारुद्रं चरुं निर्वपेत् पयस्यामयाविनः सौम्यो वै जीवन्नाग्नेयः प्रमीतो नैष जीवो न मृतो य आमयावी, तयोरेवैनं भागधेयेन निष्क्रीणाति ॥ पयसि भवति पयो वै पयः पयः पुरुषः, पय एतस्याऽमयति, यस्याऽमयति, पयसैवाऽस्य पयः स्पृणोति, ग्रसितं वा एष एतं सौमारुद्रयोर्निष्खिदति, यो होता भवति, स ईश्वरः प्रमीतो अनुद्वाहं तस्मै दद्यात्तं हन्यात्तस्याश्नीयात्सैव तत्र प्रायश्चित्तिः, सौमारुद्रश्चरुं निर्वपेत्, प्रजाकामो वा पशुकामो वा सोमो वै रेतोधा, रुद्रोऽग्निः स प्रजनयिता सोम एवास्मै रेतो दधात्यऽग्निः प्रजनयति, विन्दते प्रजा वा पशून्वा यतरस्मै कामाय निर्वपति ॥ "सौमारुद्रचतुष्कं भारद्वाजः सौमारुद्रः त्रिष्टुप्" ॐ सौमारुद्रा धारयेथामऽसुर्यं प्रवामिष्टयोऽरमश्नुवन्तु, दमे दमे सप्तरत्ना दधाना शं नो भूतं

द्विपदे शं चतुष्पदे ॥ १ ॥ सौमारुद्रा विवृहतं विषूचीममीवा या नो गयमाविवेश । आरे बाधेथां निर्ऋतिं पराचैरस्मे भद्रा सौश्रवसानि सन्तु ॥ २ ॥ सौमारुद्रा युवमेतान्यस्मै विश्वातनूषु भेषजानि धत्तम् । अवस्यतं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृतमेनो असत् ॥ ३ ॥ "ते" तिग्मायुधौ तिग्महेती सुशेवौ सौमारुद्राविव सुमृडतं नः । प्रनो मुञ्चतं वरुणस्य पाशाद्गोपायतं नः सुमनस्यमाना ॥४॥ "इति सौमारुद्रमंत्रसूक्तं तृतीयम् ॥

(रुद्रपञ्चके) **दीक्षामन्त्रसूक्तं** (चतुर्थम् ४) ॥४९॥

ॐ शान्तं पद्मासनस्थं शशधरमुकुटं पञ्चवक्त्रं त्रिनेत्रं शूलं वज्रं च खड्गं परशुमभयदं दक्षभागे वहन्तम् । नागं पाशं च घण्टां डमरुकसहितं साङ्कुशं वामभागे नानालङ्कारयुक्तं स्फटिकमणिनिभं नौमि दक्षं महेशम् ॥ ( "दीक्षया त्वापरिमित्येति पञ्चैते प्राजापत्यस्य येन देवा ज्योतिष्येति, संवर्तस्याऽङ्गिरसस्य यावद्ब्राह्मणः । यजुः" ) ॐ दीक्षया विराडाऽप्नोत्यस्तिस्रोरात्रीर्दीक्षितः स्यात्त्रिपदा विराड्विराजमेवाप्नोति, षड्रात्रीर्दीक्षितः स्यात्, षड्वा ऋतवः संवत्सरः, संवत्सरो विराड्वि०, दशरात्रीर्दीक्षितः स्याद्दशाक्षरा विरा०, द्वादशरात्रीर्दीक्षितः स्याद्द्वादशमासाः संवत्सरः, संवत्सरो विरा०, त्रयोदशरात्रीर्दीक्षितः स्यात्त्रयोदश मासाः संवत्सरः, संवत्सरो वि०, पञ्चदशरात्रीर्दीक्षितः स्यात्पञ्चदशार्धमासस्य रात्रयोऽर्धमासशः, संवत्सर आप्यते, संवत्सरो वि०,

सप्तदशरात्रीर्दीक्षितः स्याद्द्वादश मासाः पञ्चर्तवः संवत्सरः संवत्सरो वि०, चतुर्विंशतिरात्रीर्दीक्षितः स्याच्चतुर्विंशतिः संवत्सरस्यार्धमासा रात्रयोऽर्धमासशः, संवत्सर आप्यते, संवत्सरो वि०, त्रिंशतँ रात्रीर्दीक्षितः स्यात्त्रिंशदऽक्षरा विराड्० ॥ मासन्दीक्षितः स्याद्यो वै मासः संवत्सरः संवत्सरो विराड्वि०, चतुरो मासो दीक्षितः स्याच्चतुरो वा एतं मासो वसवोऽबिभरुस्ते, पृथिवीमाऽजयन्गायत्रीं च्छन्दोऽष्टौ, रुद्रास्तेऽन्तरिक्षऽऽजयंस्त्रिष्टुभं छन्दो द्वादशाऽदित्यास्ते दिवमाजयञ्जगतीच्छन्दस्ततो वै ते व्यावृतमाऽगच्छञ्छ्रैष्ठ्यन्देवानां तस्माद्द्वादशमासो भूत्वाऽग्निञ्चिन्वीत, द्वादशमासाः संवत्सरः संवत्सरोऽग्निर्वैश्वानरस्तस्याऽहोरात्राणीष्टका आप्तेष्टकमेवैनञ्चिनुत ऋध्नोति, व्यावृतमेव गच्छति, श्रैष्ठ्यं समानानां गायत्रं पुरस्ताद्गायति, शिरो वै देवानां गायत्रं गायत्रोऽग्निस्तस्माद्गायत्रं पुरस्ताद्गायति ॥ आग्निपावमान्यामऽयं वा वयः पवते, स प्राणो मुखन्देवानामऽग्निर्मुखत एव प्राणन्दधाति, तस्मान्मुखतः प्राणो, रथन्तरमुत्तराद्गायति, बृहद्दक्षिणतः पक्ष एवास्योपदधातीयं वै रथन्तरमऽसौ बृहदाभ्यामेवैनं परिगृह्णाति, यज्ञायज्ञीयम्पुच्छे गायति, श्रोण्यां वामदेव्यमाऽत्मा वै यज्ञायज्ञीयन्तनूर्वामदेव्यमात्मानमेवैनँ, स तनूश्चिनुते, हृदयमपि कक्षे, तस्मादपि कक्षे, हृदयमऽनूचम्भवति, तस्मादानस्थकं हृदयमऽर्थ्यै, परिगायत्यऽर्को वा अग्नि-

रऽर्कमेवार्थ्यैः परिगायति शान्त्यै ॥ संवत्सरो वा अन्तरतमः, स्वर्गं लोकं ज्योतिष्मतीरेताः साहस्रीरिष्टका, यद्धिरण्यशुल्कैः प्रोक्षति, ज्योतिष्यैवास्मै संवत्सरं विवासयति, सहस्रस्य प्रमासि, सहस्रस्य प्रतिमासीति, सहस्रसंमिता हीमे लोका घ्नन्ति वा एतदग्नेर्यदस्याऽत्र न क्रियते, यन्न चीयतेऽमृतं हिरण्यं यद्धिरण्यशुल्कैः प्रोक्षत्यमृतेनैवास्य तन्वम्पृणन्ती, मा मे अग्ने इष्टका धेनवः सन्त्विवति, धेनूरेवैनाः कुरुते, ता एनं कामदुघा अमुष्मिल्लोके उपतिष्ठन्ते, रुद्रं वै देवा यज्ञान्निरभजन्, स देवानायतयाऽभिपर्यावर्तत, ते देवा एतच्छतरुद्रियमऽपश्यंस्तेनैनमऽशमयन्, यच्छतरुद्रियञ्जुहोति तेनैवैनं शमयति ॥ जानुदघ्नेऽग्रे जुहोत्यस्या एव रुद्रमऽवयजतेऽथ नाभिदघ्नेऽन्तरिक्षादेव रुद्रमवयजतेऽथ पुरुषमात्रेऽमुष्या एव रुद्रमऽवयजत, इत एवोर्ध्वं रुद्रमऽवयजतेऽथ पुरुषमात्रेऽथ नाभिदघ्नेऽथ जानुदघ्नेऽमुत एवार्वाञ्चं रुद्रमऽवयजते तत्षट् सम्पद्यते, षड्वा ऋतुभ्य एव रुद्रन्निरवयजते, गवीधुकासक्तुभिर्वा जर्तिलैर्वा मृगक्षीरेण वा जुहोति यद्ग्राम्येण जुहुयाद्ग्राम्यावचारिणँ रुद्रं कुर्यादारण्येनैवारण्यमऽभिरुद्रं निरवयजते ॥ अर्कपर्णेन जुहोत्यर्को वाऽर्केनैवैनमर्कादऽधि निरवयजत उत्तरस्य पक्षस्य या चरमेष्टका तस्यां जुहोत्येषा वै रुद्रस्य दिक्स्वायामेव दिशि रुद्रं प्रतिगृह्याऽवयजते, पशुर्वा अग्निरेतर्हि वा एष जायते, यर्हि चीयते, यथा वत्सो जातं

स्तनं प्रेप्सत्येवं वा एष एतर्हि भागधेयं प्रेप्सति, सयजमानं चैवाऽध्वर्युं च ध्यायति, यच्छतरुद्रियं जुहोति भागधेयेनैवैनं शमयति ॥ अङ्गिरसो वै स्वर्गं लोकं यन्तस्तेजायां घर्मं प्रासिश्चत्सा शोचन्ती पर्णं परामृशत्सोऽर्कोऽभवत्तदऽर्कस्याऽर्कत्वं यदऽर्कपर्णेन जुहोति सयोनित्वाय यन्द्विष्यात्तस्य सञ्चरे पशूनां न्यसेद्यः प्रथमा पशुराक्रामति त आर्त्तिमार्च्छन्ति, या उत्तमास्ता यजमानं वाचयेदेता वै देवताः स्वर्ग्यास्ताभिरेव स्वर्गलोकमित्येता वै देवता अभिचरणीया यन्द्विष्यात्तं ब्रूयादऽमुं वो जम्भे दधामि "ते०" इत्येताभ्य एवैनं देवताभ्य आवृश्चति, ताजक् प्रप्रधन्वति "इति दीक्षामन्त्रसूक्तं चतुर्थम् ॥

(रुद्रपंचके) अथ शताध्यायसूक्तं पञ्चमम् ॥ ४९ ॥

चन्द्रार्काग्निविलोचनं स्मितमुखं पद्मद्वयान्तःस्थितं मुद्रापाशसुधाक्षसूत्रविलसत्पाणिं हिमांशुप्रभम् । कोटीरेन्दुगलत्सुधाप्लुततनुं हारादिभूषोज्वलं कान्त्या विश्वविमोहनं पशुपतिं मृत्युञ्जयं भावये ॥ ( "इमा रुद्रैकादश वासिष्ठैकादश देवता भूर्भुवः स्वश्चक्षुषा रूपाणि वयमित्याङ्गिरसस्यैशानाः" ) ॐ इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः, यथा नः शमऽसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥ मृडा नो रुद्रो तन्नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते, यच्छञ्चयोश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु ॥ अश्याम ते

सुमतिं देवयज्यया क्षयद्वीरस्य तव रुद्र मीढ्वः, सुम्नायन्निद्विषो असाकमाऽचरारिष्टवीरा जुहुवाम ते हविः ॥ त्वेषं वयं रुद्रं यज्ञं साधनमऽङ्कुङ्कविमऽवसे निह्वयामहे, आरे अस्मद्दैव्यँ हेडो अस्यतु सुमतिमिद्वयमऽस्या वृणीमहे ॥ दिवो वराहमरुषङ्कपर्दिनं त्वेषँ रूपं नमसा निह्वयामहे, हस्ते बिभ्रद्भेषजा वीर्याणि शर्म वर्म च्छर्दिरस्मभ्यं वियंसत् ॥ इदं पित्रे मरुतामुच्यते वचः स्वादोः स्वादीयो रुद्राय वर्धनम्, रास्वाच नो अमृत मर्त्यभोजनं त्मने तोकाय तनयाय मृड ॥ मृड त्वमऽस्मभ्यँ रुद्रैतदऽस्तु हुतं तव, पशूनाऽस्माकं माहिंसीरेतदऽस्मा अस्मद्धुतम् ॥ मानो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम्, मानो वधीः पितरं मोत मातरं मा नः प्रियास्तन्वो रुद्र रीरिषः ॥ मा न स्तोके तनये मान आयौ मानो गोषु मानो अश्वेषु रीरिषः, वीरान्मानो रुद्र भामितो वधीर्हविष्मन्तः सदसित्वा हवामहे ॥ उपते स्तोमन्पशुपा इवाऽकरं रास्वा पितर्मरुताँसुम्नमऽस्मे । भद्रा हि ते सुमतिर्मृडयत्तमाथाऽवयमव इत्ते वृणीमहे ॥ आरे ते गोघ्नमुत पूरुषघ्नं क्षयद्वीर सुम्नमस्मे ते अस्तु, मृडा च नो अधि च ब्रूहि देवाधा च नः शर्म यच्छ द्विबर्हाः ॥ अवोचाम नमो अस्मा अवस्यवः शृण्वन्तु नो हव्यं रुद्रो मरुत्वान्, तन्नो मित्रो वरुणो मामहन्तामऽदितिः सिन्धुः पृथिवीरुत द्यौः ॥ त्वमग्ने रुद्रो असुरो महो दिवस्त्वं शर्धो मारुतं प्रक्ष्या यशसे,

त्वं वातैराऽरुणैर्यस्ते शङ्कयस्त्वं पूषा विदत्ता पासि नु त्मनः, देवा देवेषु श्रयन्तां, प्रथमा द्वितीयेषु श्रयन्तां, द्वितीयास्तृतीयेषु श्रयन्तां, तृतीयाश्चतुर्थेषु श्रयन्तां, चतुर्थाः पञ्चमेषु श्र०, पञ्चमाः षष्ठेषु श्र०, षष्ठाः सप्तमेषु श्रयन्तां, सप्तमा अष्टमेषु श्रयन्तां, अष्टमा नवमेषु श्रयन्तां,नवमा दशमेषुश्रयन्तां, दशमा एकादशेषु श्रयन्तां, देवास्त्रिरेकादशा स्त्रयस्त्रिंशाः, उत्तरे भवथोत्तरे सत्वानो उत्तरवर्त्मान उत्तरलक्ष्माणो यज्ञामयेदं जुहोमि स मे कामः समृद्ध्यतां वयं स्याम पतयो रयीणाम् ॥ ॐभूर्भुवः स्वः क्षुच्च शुक्चोष्णा चोग्रा च भीमा च राष्ट्रा च बीभत्सा च वैशन्ता च शार्दूराका चानिराका चामीवाचा नाहुतिश्च निर्ऋतिरेतास्ते अग्निवर्तिमतीस्तन्वस्ताभिस्तं गच्छ योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमऽर्पथ ॥ भवा शर्वा मृडतमा वियातं पशुपती भूतपती नमो वाम्, प्रतिहितामयतामाविस्रष्टं मा नो हिंसिष्टं द्विपदो मा चतुष्पदः, शुने क्रोष्ट्रे मा शरीराणि कर्तमारिक्रवेभ्यो गृद्ध्रेभ्यो ये च कृष्णा अवस्यवः, मक्षिकाः पशुपतिवयांसि विघसे मा विदन्ते । क्रन्दाय ते प्राणाय ते याश्च ते भव हेतयः, नमस्ते उग्रकर्मः, सहस्राक्ष मर्त्य पुरस्तात्ते नमः । कूर्मोधरागुत्तरादनु, अभी वर्गाद्दिवस्पर्यन्तरिक्षाय ते नमः, मुखानि ते पशुपते यानि चक्षूंषि ते नमः । त्वचे रूपाय सन्दृशे प्रतीचीनाय ते नमः अङ्गेभ्यस्त उदराय जिह्वायै दद्भ्यो गन्धाय घ्राणाय ते नमः

अहोरात्राणि विदधत्प्रतीचीनाय ते नमः। अस्त्रानीलकपर्दिने सहस्राक्षेण वाजिना, शर्वेणाऽध्वगगातिना तेन मासुम्भरामसि। भवा ईशोद्विपदो भव ईशश्चतुष्पदः, भवो विश्वस्य भुवनस्य राजति भवाय गाव ओषधीरजीगुर्भवाय द्यावापृथिवी नमेते। मानो रुद्रा परिणो वृणक्तु, हेत्याप इवाग्निः परिणो वृगक्तु, मानोऽभिमाँस्त नमो अस्त्वस्मे, चतुर्नमोष्टकृत्वो भवाय दशकृत्वः पशुपते नमस्ते। योऽभियातो निलयते त्वं रुद्र निचकीर्षति, यो नः पश्चादऽति प्रयुङ्क्ते तं विद्ध्यस्व पदवीरिव। नमः सायं नमः प्रातः नमो रात्र्या नमो दिवः, भवाय च शर्वाय चोभाभ्यामऽकरं नमः॥ "ॐअथ वायोरेकादशपुरुषस्यैकादशस्त्रीकस्य" [१]प्रभ्राजमानानाँ रुद्राणाँ स्थाने स्वतेजसा भानि, [२]व्यवजातानाँ रुद्राणां, [३]वासुकिवैद्युतानाँ रु०, [४]रजतानाँ रु०, [५]पुरुषाणाँ रु०, [६]श्यामानाँ रु०, [७]कपिलानाँ रु०, [८]अतिलोहितानाँ रु०, [९]ऊर्ध्वानाँ रु०, [१०]अवपतन्तानाँ रु०, [११]वैद्युतानाँ रु०, "ॐभूर्भुवः स्वः रूपाणि वो मिथुनं मा वो मिथुनं रीढ्वम्" ॐप्रभ्राजमानानाँ रुद्राणीनाँ स्थाने स्वतेजसा भानि, व्यवजातानां रु०, वासुकिवैद्युतीनां रु०, रजतानाँ रु०, पुरुषाणाँ रु०, श्यामानाँ रु०, कपिलानाँ रु०, अतिलोहितानाँ रु०, ऊर्ध्वानाँ रु०, अवपतन्तीनाँ रु०, वैद्युतीनाँ रु०, "ॐभूर्भुवः स्वः स्त्रियो वो मिथुनं मा वो मिथुनं रीढ्वम्" ॐवयमऽग्ने धनवन्तः स्यामाऽलं यज्ञायोत दक्षिणायै, ग्रावावदेदभि

सोमस्याँशुमिन्द्रं सिक्षिमिन्दुना सुतेन १३ रायस्पोषं नो देहि जातवेद ऊर्जो भागं मधुमत्स्यां घृतावत, दधान यज्ञँ सुनवाम सोमं यज्ञेन त्वामुप शिक्षेम शक्र १४ ईशानं त्वा शुशुमा वयं धनानां धनपते गोमदऽग्ने, अश्ववद्भूरि पुष्टँ हिरण्यवद्धनवद्देहि मह्यम् १५ दुहान्ते द्यौः पृथिवी पयोऽजगरस्त्वा सोदको विसर्पतु, प्रजापतिनाऽत्मानमाऽप्रीणेऽरिक्तो म आत्मा १६ "ते०" यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पतिषु, यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु देवाः॥

मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां विधाय। भस्मच्छन्नो भस्म शय्यां शयानो रुद्राध्यायी मुच्यते सर्वपापैः ॥१॥ नित्यं दण्डी नित्ययज्ञोपवीती नित्यं ध्याता भस्मना कर्मबन्धी। रुद्रं दृष्ट्वा देवमीशानमुग्रं याति स्थानं तेन साकं तदीयम् ॥ २॥ अनेन मन्त्रपाठेन० अघोरः, तत्पुरुषः, सद्योजातः, वामदेवः, बहुरूपः, असुरबहुलः, त्र्यम्बकः, त्रिनेत्रः, त्रिशूलहस्तः, मृत्युंजयः, वृषभवाहनः, शतरुद्रेश्वरः, अनेकरुद्रः, उमासहितः शिवः, भवोदेवः ८ सपरिवारः, सानुचरः प्रीयतां प्रीतोऽस्तु॥ इति रुद्रपञ्चकम् ॥ ४९॥

## अथ देवीपञ्चकम् ५०

### (देवीपञ्चके) अस्यवामाख्यं दुर्गादेवीसूक्तं (प्र०१)

ॐआरक्ताभां त्रिनेत्रां मणिमुकुटवतीं रत्नताटङ्करम्यां हस्ताम्भोजैः सपाशाङ्कुशमदनधनुःसायकैर्विस्फुरन्तीम्। आपीनोत्तु-

ङ्गवक्षोरुहतटविलुठत्तारहारोज्ज्वलाङ्गीं ध्यायाम्यऽम्भोरुहस्थामऽरुणनिवसनामीश्वरीमीश्वराणाम् ॥ ("ॐ अस्य द्विपञ्चाशदऽरूपस्तवन्त्वेतत्संशयोत्थापनप्रश्नप्रतिवाक्यान्यत्र प्रायेण ज्ञानमोक्षाक्षरप्रशंसा च पञ्चपादं साकञ्जानां यद्गायत्रेयं स शिङ्क्ते सप्तार्धगर्भा गौरीरिति जगत्य एतदन्तं च वैश्वदेवं, तस्याः समुद्रा इति वाचः समुद्रा आपोक्षरं, सा प्रस्तारपङ्क्तिः, शकमयमिति शकधूम उक्षाणं, पृश्निमिति सोमस्त्रयः केशिन इत्यग्निवायुसूर्याश्च केशिनः चत्वारिवाग्वाचः, इन्द्रं मित्रं सौर्ये द्वादशेति संवत्सरसंस्थं कालचक्रवर्णनं, यस्ते सारस्वत्यं, यज्ञेन साध्येभ्यः, परानुष्टुप् सौरी पर्जन्याग्निदेवता वाऽन्त्या सरस्वत्या सूर्यस्य वा शिष्टास्त्रिष्टुभः" ॥) ॐअस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः । तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ॥ १ ॥ सप्तयुञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा । त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधितस्थुः ॥ २ ॥ इमं रथमऽधि ये सप्ततस्थुः सप्तचक्रं सप्त वहन्त्यश्वाः । सप्त स्वसारो अभि सन्नवन्ते यत्र गवान्निहिता सप्तनाम ॥ ३ ॥ को ददर्श प्रथमञ्जायमानमऽस्थन्वन्तं यदऽनस्था बिभर्ति । भूम्या असुरऽसृगात्मा क्वस्वित्को विद्वाँसमुपगात्प्रष्टुमेतत् ॥ ४ ॥ पाकः पृच्छामि मनसाऽविजानन्देवानामेना निहिता पदानि । वत्से भष्कयेऽधि सप्ततन्तून्वितन्निरे कवय ओत वा उ ॥ ५ ॥ "वर्ग १" अचि-

कित्वाश्चिकितुषश्चिदऽत्र कवीन्पृच्छामि विद्मने न विद्वान्। वि यस्तस्तम्भ षडिमा रजाँस्यजस्य रूपे किमपि स्विदेकम् ॥ ६ ॥ इह ब्रवीतु य ईमङ्ग वेदाऽस्यवामस्य निहितं पदं वेः। शीर्ष्णः क्षीरं दुह्रते गावो अस्य वव्रिं वसाना उदकं पदापुः ॥७॥ माता पितरमृत आबभाज धीत्यग्रे मनसा सं हि जग्मे। सा बीभत्सुर्गर्भरसा निविद्धा नमस्वन्त इदुपवाकमीयुः ॥ ८ ॥ युक्ता माताऽसीद्धुरि दक्षिणाया अतिष्ठद्गर्भो वृजनीष्वऽन्तः। अमीमेद्वत्सो अनु गामऽपश्यद्विश्वरूप्यं त्रिषु योजनेषु ॥९॥ तिस्रो मातॄस्त्रीन्पितॄन्बिभ्रदेक ऊर्ध्वस्तस्थौ नेममऽवग्लापयन्ति। मन्त्रयन्ते दिवो अमुष्य पृष्ठे विश्वविदं वाचमऽविश्वमिन्वाम् ॥१०॥ "व० २" द्वादशारन्न हि तज्जराय वर्वर्ति चक्रं परि द्यामृतस्य। आ पुत्रा अग्ने मिथुनासो अत्र सप्तशतानि विंशतिश्च तस्थुः ॥ ११ ॥ पञ्चपादं पितरं द्वादशाकृतिन्दिव आहुः परे अर्धे पुरीषिणम्। अथेमे अन्य उपरि विचक्षणं सप्तचक्रे षडर आहुरर्पितम् ॥ १२ ॥ पञ्चारे चक्रे परिवर्तमाने तस्मिन्नातस्थुर्भुवनानि विश्वा। तस्य नाऽक्षस्तप्यते भूरिभारः सनादेव न शीर्यते सनाभिः ॥ १३ ॥ सनेमि चक्रमजरं वि वावृत उत्तानायां दश युक्ता वहन्ति। सूर्यस्य चक्षूरजसैत्याऽवृतं तस्मिन्नार्पिता भुवनानि विश्वा ॥ १४ ॥ साकञ्जानां सप्तथमाहुरेकजं षडिद्यमा ऋषयो देवजा इति। तेषामिष्टानि विहि-

तानि धामशः स्थात्रे रेजन्ते विकृतानि रूपशः ॥ १५ ॥ "व० ३" स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदऽक्षिण्वान्न वि चेतद्ऽन्धः । कविर्यः पुत्रः स ईमा चिकेत यस्ता विजानात्स पितुष्पिताऽसत् ॥ १६ ॥ अवः परेण पर एना वरेण पदा वत्सं बिभ्रती गौरुदस्थात् । सा कद्रीची कंस्विदऽर्धं परागात्कः स्वित्सूते नहि यूथे अन्तः ॥ १७ ॥ अवः परेण पितरं यो अस्यानुवेद पर एना वरेण । कवीयमानः क इह प्रवोचद्देवं मनः कुतो अधि प्रजातम् ॥ १८ ॥ ये अर्वाञ्चस्ताँ उ पराच आहुर्ये पराञ्चस्ताँ उ अर्वाच आहुः । इन्द्रश्च या चक्रथुः सोम तानि धुरा न युक्ता रजसो वहन्ति ॥ १९ ॥ द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यऽनश्नन्ऽन्यो अभि चाकशीति ॥ २० ॥ "व० ४" यत्रासुपर्णा अमृतस्य भागमऽनिमेषं विदथाभिस्वरन्ति । इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमऽत्राऽविवेश ॥ २१ ॥ यस्मिन्वृक्षे मध्वदः सुपर्णा निविशन्ते सुवते चाधि विश्वे । तस्येदाहुः पिप्पलं स्वाद्वऽग्रे तन्नो नशद्यः पितरन्न वेद ॥२२॥ यद्गायत्रे अधि गायत्रमाऽहितं त्रैष्टुभाद्वा त्रैष्टुभं निरतक्षत । यद्वा जगज्जगत्याऽहितं पदं य इत्तद्विदुस्ते अमृतत्वमाऽनशुः ॥ २३ ॥ गायत्रेण प्रति मिमीते अर्कमऽर्केण साम त्रैष्टुभेन वाकम् । वाक्येन वाकं द्विपदा चतुष्पदाऽक्षरेण

मिमते सप्त वाणीः ॥ २४ ॥ जगता सिन्धुं दिव्यस्तभायद्रथन्तरे सूर्यं पर्यपश्यत् । गायत्रस्य समिधस्तिस्र आहुस्ततो मह्ना प्ररिरिचे महित्वा ॥ २५ ॥ "व० ५" उपह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनाम् । श्रेष्ठं सवं सविता साविषन्नोऽभीद्धो घर्मस्तदुषु प्रवोचत् ॥ २६ ॥ हिंकृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाऽभ्यागात् । दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ॥ २७ ॥ गौरऽमीमेदऽनु वत्सं मिषन्तं मूर्धानं हिङ्ङकृणोन्मात वा उ । सृक्वाणङ्घर्ममऽभि वावशाना मिमाति मायुं प्यायते पयोभिः ॥२८॥ अयं स शिङ्क्ते येन गौरभीवृता मिमाति मायुं ध्वसनावऽधिश्रिता । सा चित्तिभिर्निहि चकार मर्त्यं विद्युद्भवन्ती प्रति वव्रिमौहत ॥ २९ ॥ अनच्छये तुरगा तु जीवमेजद्ध्रुवं मध्य आ पस्त्यानाम् । जीवो मृतस्य चरति स्वधाभिरऽमर्त्यो मर्त्येनासयोनिः ॥ ३० ॥ "व० ६" अपश्यङ्गोपामऽनिपद्यमानमाऽऽच परा च पथिभिश्चरन्तम् । स सध्रीचीः स विषूचीर्वसान आ वरिवर्ति भुवनेष्वऽन्तः ॥ ३१ ॥ य ईं चकार न सो अस्य वेद य ईं ददर्श हिरुगिन्नु तस्मात् । स मातुर्योना परिवीतो अन्तर्बहुप्रजा निर्ऋतिमाऽविवेश ॥ ३२ ॥ द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम् । उत्तानयोश्चम्वोर्योनिरन्तरत्रापिता दुहितुर्गर्भमाधात् ॥ ३३ ॥ पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि

यत्र भुवनस्य नाभिः । पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योम ॥ ३४ ॥ इयं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः । अयं सोमो वृष्णो अश्वस्य रेतो ब्रह्मायं वाचः परमं व्योम ॥ ३५ ॥ "व० ७" सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि । ते धीतिभिर्मनसा ते विपश्चितः परि भुवः परि भवन्ति विश्वतः ॥ ३६ ॥ न विजानामि यदि वेदमस्मि निण्यः सन्नद्धो मनसा चरामि । यदा मागन्प्रथमजा ऋतस्यादिद्वाचो अश्नुवे भागमऽस्याः ॥ ३७ ॥ अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना स योनिः । ताः शश्वन्ता विषूचीना वियन्तान्यून्यं चिक्युर्न नि चिक्युरऽन्यम् ॥३८॥ ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः । यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥ ३९ ॥ सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम । अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ॥ ४० ॥ "व० ८" गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥ ४१ ॥ तस्याः समुद्रा अधि विक्षरन्ति तेन जीवंति प्रदिशश्चतस्रः । ततः क्षरत्यक्षरं तद्विश्वमुप जीवति ॥ ४२ ॥ शकमयं धूममारादऽपश्यं विषूवता पर एनाऽवरेण । उक्षाणं पृश्निमपचन्त धीरास्तानि

धर्माणि प्रथमान्यासन् ॥ ४३ ॥ त्रयः केशिन ऋतुथा विच-
क्षते संवत्सरे वपत एक एषाम् । विश्वमेको अधि चष्टे शची-
भिर्ध्राजिरेकस्य ददृशे न रूपम् ॥ ४४ ॥ चत्वारि वाक् परि-
मिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि
निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥ ४५ ॥
इन्द्रं मित्रं वरुणमऽग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यऽग्निं यमं मातरिश्वानमाहुः ॥४६॥
"व० ९" कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमु-
त्पतन्ति । त आववृत्रन्सदनादृतस्यादिद्घृतेन पृथिवी व्युद्यते
॥ ४७ ॥ द्वादश प्रधयश्चक्रमेकं त्रीणि नाभ्यानि क उ तच्चि-
केत । तस्मिन्साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चला
चलासः ॥ ४८ ॥ यस्ते स्तनः शशयानो मयोभूर्येन विश्वा
पुष्यसि वार्याणि । यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह
धातवे कः ॥ ४९ ॥ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि
प्रथमान्यासन् । तेह नाकं महिमानाः सचन्त यत्र पूर्वे साध्याः
सन्ति देवाः ॥ ५० ॥ समानमेतदुदकमुच्चैत्यव चाहोभिः ।
भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः ॥ ५१ ॥ "ते०"
दिव्यं सुपर्णं वायसं बृहन्तमऽपां गर्भं दर्शतमोषधीनाम् ।
अभीपतो वृष्टिभिस्तर्पयन्तं सरस्वन्तमऽवसे जोहवीमि ॥ ५२ ॥
"व० १०" इति अस्यवामाख्यदुर्गादेवीसूक्तं प्रथमम् ॥

(देवीपंचके) **त्रिपुरादेवीसूक्तं** (द्वितीयम् २) ॥ ५० ॥

ॐ गणेशवटुकस्तुता रतिसहायकामान्विता स्मरारिवरविष्टरा कुसुमबाणबाणैर्युता । अनङ्गकुसुमादिभिः परिवृता च सिद्धैस्त्रिभिः कदम्बवनमध्यगा त्रिपुरसुन्दरी पातु नः ॥ ("कया पञ्चोनः संवादस्तृतीयाद्ययुजो मरुतां वाक्यमन्त्यस्तृचोऽगस्त्यस्य शिष्टा इन्द्रस्यैकादशी च मरुतां त्विन्द्रो देवता") ॐ कया शुभा सवयासः सनीडाः समान्या मरुतः सं मिमिक्षुः । कया मती कुत एतास एतेऽर्चन्ति शुष्मं वृषणो वसूया ॥ १ ॥ कस्य ब्रह्माणि जुजुषुर्युवानः को अध्वरे मारुत आववर्त । श्येनाँ इव ध्रजतो अन्तरिक्षे केन महामनसा रीरमाम ॥२॥ कुतस्त्वमिन्द्र माहिनः सन्नेको यासि सत्पते किं त इत्था । सं पृच्छसे समराणः शुभानैर्वोचेस्तन्नो हरिवो यत्तेअस्मे ॥ ३ ॥ ब्रह्माणि मे मतयः शँ सुतासः शुष्म इयर्ति प्रभृतो मे अद्रिः । आशासते प्रति हर्यन्त्युक्थेमा हरी वहतस्तानो अच्छ ॥ ४ ॥ अतो वयमऽन्तमेभिर्युजानाः स्वक्षत्रेभिस्तन्वः शुम्भमानाः । महोभिरेताँ उप युज्महे निन्द्र स्वधामनु हि नो बभूव ॥ ५ ॥ "व० १" क स्यावो मरुतः स्वधासीद्यन्मामेकँ समधत्ताहिहत्ये । अहं ह्युग्रस्तविषस्तुविष्मान्विश्वस्य शत्रोरनमं वधस्नैः ॥ ६ ॥ भूरि चकर्थ युज्येभिरस्मे समानेभिर्वृषभ पौंस्येभिः । भूरीणि हि कृणवामा शविष्ठेन्द्र क्रत्वा मरुतो यद्वशाम ॥ ७ ॥ वधीं वृत्रं मरुत

इन्द्रियेण स्वेन भामेन तविषो बभूवान् । अहमेता मनवे विश्वश्चन्द्राः सुगा अपश्चकार वज्रबाहुः ॥ ८ ॥ अनुत्तमा ते मघवन्नकिर्नु न त्वावाँ अस्ति देवता विदानः । न जायमानो नशते न जातो यानि करिष्या कृणुहि प्रवृद्ध ॥ ९ ॥ एकस्य चिन्मे विभ्वस्त्वोजो या नु दधृष्वान्कृणवै मनीषा । अहं ह्युग्रो मरुतो विदानो यानि च्यवमिन्द्र इदीश एषाम् ॥ १० ॥ "व० २" अमन्दन्मा महतः स्तोभो अत्र यन्मे नरः श्रुत्यं ब्रह्म चक्र । इन्द्राय वृष्णे सुमखाय मह्यं सख्ये सखायस्तन्वे तनूभिः ॥११॥ एवेदेते प्रति मा रोचमाना अनेद्यः श्रव एषो दधानाः । सञ्चक्ष्या मरुतश्चन्द्रवर्णा अच्छान्त मे छदयथा च नूनाम् ॥ १२ ॥ कोन्वऽत्र मरुतो मामहे वः प्रयातन सखीँरच्छा सखायः । मन्मानि चित्रा अपि, वातयन्त एषां भूत न वेदाम ऋतानाम् ॥१३॥ आ यद्दुवस्यादुवसेन कारुरस्माञ्चक्रे मान्यस्य मेधा । ओषुवर्त मरुतो विप्रमच्छेमा ब्रह्माणि जरिता वो अर्चत् ॥१४॥ "ते०" एष वः स्तोभो मरुतो इयं गीर्मान्दार्यस्य मान्यस्य कारोः । एषा यासीष्ट तन्वे वयां विद्यामेषं वृजिनं जीरदानुम् ॥ १५ ॥ "व० ३" इति त्रिपुरादेवीसूक्तं द्वितीयम् ॥

(देवीपञ्चके) **शारिकादेवीसूक्तं** ( तृतीयम् ३ ) ॥ ५० ॥

ॐबीजैः सप्तभिरुज्वलाकृतिरसौ या सप्तसप्तिद्युतिः सप्तर्षिप्रणताङ्घ्रिपङ्कजयुगा या सप्तलोकार्तिहृत् । कश्मीरप्रवरेशमध्य-

नगरे प्रद्युम्नपीठे स्थिता देवीसप्तकसंयुता भगवती श्रीशारिका पातु नः ॥ ("ॐ अहमष्टौ वागाऽऽम्बिनी तुष्टावाऽऽत्मानं त्रिष्टुप् द्वितीया जगती") अहं रुद्रेभिर्वसुभिश्चराम्यऽहमादित्यैरुत विश्वेदेवैः । अहं मित्रावरुणोभा बिभर्म्यऽहमिन्द्राग्नी अहमऽश्विनोभा ॥ १ ॥ अहं सोममाहनसं बिभर्म्यऽहं त्वष्टारमुत पूषणं भगम् । अहं दधामि द्रविणं हविष्मते सुप्राव्ये यजमानाय सुन्वते ॥ २ ॥ अहं राष्ट्री सङ्गमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् । तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम् ॥३॥ मयासो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम् । अमन्तवो मां त उप क्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि ॥ ४ ॥ अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः । यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥ ५ ॥ अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ । अहं जनाय समदं कृणोम्यऽहं द्यावापृथिवी आविवेश ॥ ६ ॥ अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वऽन्तः समुद्रे । ततो वि तिष्ठे भुवना नु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ॥ ७ ॥ "ते०" अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा । परो दिवा पर एना पृथिव्यै तावती महिना सम्बभूव ॥ ८ ॥ "इति शारिकादेवीसूक्तं तृतीयम् ॥

(देवीपञ्चके) राज्ञीदेवीसूक्तं ( चतुर्थम् ४ ) ॥ ५० ॥

ॐ उद्यद्दिवाकरसहस्ररुचिं त्रिनेत्रां पद्मासनोपरिगताम्बुर-

गोपवीताम् । खड्गाम्बुजाब्जकलशामृतपात्रहस्तां राज्ञीं भजामि विकसद्वदनारविन्दाम् ॥ "इंद्रं मित्रं सप्त त्रिष्टुबन्तम् ।" ॐ इंद्रं मित्रं वरुणमग्निमूतये मारुतं शर्धो अदितिं हवामहे । रथं न दुर्गाद्वसवः सदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ १ ॥ त आदित्या आगता सर्वतातये भूत देवा वृत्रतूर्येषु शम्भुवः । रथं न० ॥ २ ॥ अवन्तु नः पितरः सुप्रवाचना उत देवी देवपुत्रे ऋतावृधा । रथं न० ॥ ३ ॥ नराशंसं वाजिनं वाजयन्निह क्षयद्वीरं पूषणं सुम्नैरीमहे । रथं न० ॥ ४ ॥ बृहस्पते सदमिन्नः सुगं कृधि शं योर्यत्ते मनुर्हितं तदीमहे । रथं न० ॥ ५ ॥ इन्द्रं कुत्सो वृत्रहणं शचीपतिं काटे निबाढ ऋषिराह्वदूतये । रथं न० ॥ ६ ॥ "ते०" देवैर्नो देव्यदितिर्नि पातु देवस्त्राता त्रायतामऽप्रयच्छन् । तन्नो मित्रो वरुणो मामहन्तामदितिः सिंधुः पृथिवी उत द्यौः ॥ ७ ॥ "इति राज्ञीदेवीसूक्तं चतुर्थम् ॥"

(देवीपञ्चके) **ज्वालादेवीसूक्तं** ( पञ्चमम् ५ ) ॥ ५० ॥

ॐ ज्वालापर्वतसंस्थितां त्रिनयनां पीठत्रयाधिष्ठितां ज्वालाडम्बरभूषितां सुवदनां नित्यामऽदृश्यां जनैः । षट्चक्राम्बुजमध्यगां वरगदाम्भोजाभयान्बिभ्रतीं चिद्रूपां सकलार्थदीपनकरीं ज्वालामुखीं नौम्यहम् ॥ "इदमपि च ॥ ॐतामग्निवर्णा सौभरिर्दुर्गा त्रिष्टुप्" ॥ ॐतामऽग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् । दुर्गां देवीं शरणमऽहं प्रपद्ये सुत-

रसितरसे नमः ॥ अग्ने त्वं पारयानव्यो अस्मान्स्वस्तिभिरति दुर्गाणि विश्वा । पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शं योः ॥ विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावा दुरितातिपर्षि । अग्ने अत्रिवन्नमसा गृणानोऽस्माकं बोद्ध्यविता तनूनाम् ॥ पृतनाजितं सहमानमुग्रमऽग्निँ हुवेम परमात्सधस्थात् । स नः पर्षदऽतिदुर्गाणि विश्वा क्षामाद्देवो अति दुरितात्यग्निः ॥ (प्रतो हिक मीड्यो पृष्ट३०३-१२॥) अग्न आयूंष्यग्ने पवस्वाग्ने पावक रोचिषा, स नः पावक दीदिवोऽग्ने देवाँ इहावह, उपयज्ञं हविश्चनः, अग्निः शुचिव्रततम, उदग्ने शुचयस्तव, सुत्रामणं महीमूषु, तँहि शश्वन्त ईडते शुचा देवँ घृतश्चुता, अग्निर्हव्याय वोढवे, अग्निं दूतं पुरो दधे, स हव्यवाडमर्त्य, उशिग्दूतश्च नो हितः, अग्निर्धिया समृण्वति, अग्निँ स्तोमेन बोधय, समिधानो अमर्त्यम्, हव्या देवेषु नो दधत्, भद्रो अग्न इमो अग्ने, पीपिवांसं सरस्वतः, स्तनं यो विश्वदर्शतः, धुक्षीमहि प्रजामिषं, ये ते सरस्वन्नूर्मयो, मधुमन्तो घृतश्चुतः, तेभिर्नोऽविता भव, दिव्यं सुपर्णं वायसं बृहन्तमऽपाँ पतिं वृषभमोषधीनाम् । अभीपतो वृष्टिभिस्तर्पयन्तं सरस्वन्तमवसे जोहवीमि, यस्य व्रतमुपतिष्ठन्त आपो यस्य व्रते पशवो यन्ति सर्वे । यस्य व्रते पुष्टिपतिर्निविष्टस्तं सरस्वन्तमऽवसे जोहवीमि ॥ मयोभूर्वातो अभि वातूस्रा ऊर्जस्वतीरोषधीराविशन्ताम् । पीवस्वतीर्जीवधन्याः पिबन्त्यऽवसाय पद्वते रुद्र नो

मृड ॥ १ ॥ याः सरूपा विरूपा एकरूपा यासामऽग्निरिष्ट्या नामानि वेद । या अङ्गिरसस्तपसेह चकुस्ताभ्यः पर्जन्य महि शर्म यच्छ ॥ २ ॥ या देवीषु तन्वमैरयन्त यासां सोमो विश्वा रूपाणि वेद । ता अस्मभ्यं पयसा पिन्वमानाः प्रजावतीरिन्द्र गोष्ठे रिरीहि ॥ ३ ॥ प्रजापतिर्मह्यमेता रराणो विश्वैर्देवैर्यज्ञियैः संविदानः । बह्वीर्भवन्तीरुप नो गोष्ठमागुस्तासां वयं प्रजया सँसदेम ॥४॥ इह धृतिः स्वाहेह विधृतिः स्वाहेह रन्तिः स्वाहेह रमतिः स्वाहा महीमूषु सुत्रामाणम् ॥५॥ कास्विदेकाकी चरति क उ स्विज्जायते पुनः । किं स्विद्धिमस्य भेषजं किं स्विदावपनं महत् ॥ १ ॥ सूर्य एकाकी चरति चन्द्रमा जायते पुनः । अग्निर्हिमस्य भेषजं भूमिरावपनं महत् ॥२॥ का स्विदासीत्पूर्वचित्तिः किं स्विदासीद्बृहद्वयः । का स्विदासीत्पिलम्पिला कास्विदासीत्पिशङ्गिला ॥ ३ ॥ द्यौरासीत्पूर्वचित्तिरश्व आसीद्बृहद्वयः । अविरासीत्पिलम्पिला रात्रिरासीत्पिशङ्गिला ॥ ४ ॥ पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि यत्र भुवनस्य नाभिः । पृच्छामि त्वावृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योम ॥५॥ वेदिमाहुः परमन्तं पृथिव्या यज्ञमाहुर्भुवनस्य नाभिम् । सोममाहुर्वृष्णो अश्वस्य रेतो ब्रह्मैव वाचः परमं व्योम ॥६॥ अम्बे अम्बाल्यम्बिके न मानयति कश्चन ससस्त्यश्वकः ॥१॥ सुभगे काम्पीलवासिनी, स्वर्गे लोके संप्रोर्णुवाथा माहमजामि गर्भध

मात्वमजामि गर्भधन्तां सह चतुरः पादाः, संप्रसारयवहै, वृषां रेतो दधातूत्सक्थ्यो गृहदुग्धेह्यञ्जिमुदञ्जिमऽन्वाजयः स्त्रीणां जीवभोजनो, य आसां बिलदानवः, प्रियः स्त्रीणामऽपीच्यो य आसां कृष्णे लक्ष्माणि, सन्धिगृधिं परावधीत्, अम्बे० ॥ २ ॥ ऊर्ध्वामेनामुच्छ्र्यताद्वेणुभारं गिराइव, अथास्या मध्यमेदताँ शीतो वाते पुनन्निव, अम्बे अ० ॥ ३ ॥ यद्धरिणी यवमऽत्ति, न पुष्टं पशु मन्यते, शूद्रा यदर्यजारा, न पोषाय धनायति, अम्बे० ॥ ४ ॥ इयं यका शकुन्ती, काहलमिति वञ्चति, आहतं गभे पसो, निजल्गाल्गति धानिका, अम्बे० ॥ ५ ॥ माता च ते पिता च ते, ऽग्रं वृक्षस्य रोहतः, प्रसुलामिति ते पिता, गभे पुष्टिमतँ स यत् ॥ ६ ॥ दधि क्राव्णो अकारिषं० ॥७॥ आपो हि ष्ठा मयो भुवस्ता०॥८॥ प्रत्नो हिक मीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि । स्वां चाग्ने तनुं पिप्रयस्वाऽस्मभ्यं च सौभगमाऽयजस्व ॥ १ ॥ यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा । चतस्त्रमूर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम ॥२॥ देवीं वाचमऽजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु ॥ ३ ॥ प्रणो देवी सरस्वती वाजेभिर्वाजिनीवती । धीनामवित्र्यवतु ॥ ४ ॥ ॐगायत्र्यै नमः ॐभूर्भुवःस्व० ३ ॥५॥ "ते०" जातवेदसेसुनवाम सोममऽरा-

तीयतो निदहाति वेदः। स नः पर्षदऽति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥ ६ ॥ माया कुण्डलिनी क्रिया मधुमती काली कलामालिनी मातङ्गी विजया जया भगवती देवी शिवा शाम्भवी। शक्तिः शङ्करवल्लभा त्रिनयना वाग्वादिनी भैरवी ह्रींकारी त्रिपुरा परापरमयी माता कुमारीत्यसि ॥ अनेन मन्त्रपाठेन० श्रीदेवीप्रीत्यर्थं भगवती अमा० ८ सहस्रनाम्नी देवी सपरिवारा प्रीयतां प्रीता मेऽस्तु ॥ "इति देवीपञ्चकं" ॥ ५० ॥

## रक्षोघ्नमन्त्राख्यं महौषधिसूक्तम् ॥ ५१ ॥

"ॐ या ओषधय इत्यनुवाको भिषगस्याथर्वणस्य ॥" या ओषधयः प्रथमजा देवेभ्यस्त्रियुगं पुरा। मनै नु बभ्रूणामहं शतं धामानि सप्त च ॥ शतं वो अम्ब धामानि सहस्रमुत वो रुहः। अधा शतक्रतवो यूयमिमं मे अगदंकृत ॥ पुष्पवतीः प्रसुमतीः फलिनीरफला उत। अश्वा इव स जित्वरीर्वीरुधः पारयिष्णवः ॥ ओषधीरिति मातरस्तद्वु देवीरुपब्रुवे। अपांसि विघ्नतीरिव रक्षश्च तयमाना ॥ अश्वत्थवो निवेदनं पर्णे वो वसतिष्कृता। गोभाज इत्किलासथ यत्सनवथ पूरुषः ॥ अश्वावतीं सोमवतीमूर्जयन्तीमुदोजसा। आवित्सि सर्वा ओषधीरस्मा आरिष्टतातये ॥ यदोषधयः समग्मत राजानः समिता इव। विप्रः स उच्यते भिषग्रक्षोहामीवचातनः ॥ उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते। धनं सनिष्यन्तीनामात्मानं तव पुरुषः ॥ अति

विश्वाः प्रतिष्ठाःस्तेन इव व्रजमक्रमुः । ओषधयः प्रचुच्यवुर्य-
त्किञ्चित्तन्वोरपः ॥ यास्त आतस्थुरात्मानमाविविशुःपरुष्परुः ।
तास्ते यक्ष्मं विबाधन्तामुग्रो मध्यमशीरिव ॥ यदहं वाजयन्निमा
ओषधीर्हस्त आदधे । आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो
यथा ॥ निष्कृतिर्नाम वोमाताऽथो त्वमसि निष्कृतिः । सराः
पतत्रिणीः स्था यदामयति निष्कृत ॥ साकं यक्ष्म प्रपत चाषेण
किकिदीविना । साकं वातस्य ध्राज्या साकं नश्यन्निहाकया ॥
अन्यावो अन्याभवत्वन्यान्यस्या उपावत । ताः सर्वाः संविदाना
इदं मे प्रावता वचः ॥ अवपतन्तीरवदन्दिवन्तेभ्यस्परिपरि ।
यञ्जीवमश्नवामहै न सरिष्यति पूरुषः ॥ याः फलिनीर्या अफला
अकोशाः कोशिनीश्च याः । बृहस्पतिप्रसूतास्ता नो मुञ्चंत्वंहसः ॥
याश्चेदमुपशृण्वन्ति याश्च दूरं परागताः । बृहस्पतिप्रसूतास्ता-
नो मुञ्चंत्वंहसः ॥ याः सोमराज्ञी वरुणस्य राज्ञो यासां विश्वेदेवा
अधिपतयश्च सर्वे । या अन्तरिक्षे दिवि याः पृथिव्यां ता नः
स्तुता ओषधीः पारयन्तु ॥ ॐ सहस्रधा रेवतीसमस्वरन्देवो
नाके मधुजिह्वा असश्चतः । तस्य स्पृशो न निमिषन्ति तूर्णयः
पदे पदे पशवः सन्ति सेतवः ॥ मलिम्लुचो नामासि त्रयोदश
मासाः । इन्द्रस्य शर्मासीन्द्रस्य वर्मासि इन्द्रस्य वरूथमसि ॥
तन्त्वा प्रपद्ये सगुः साश्वः सपूरुषः सह यन्मे स्थितेन । स मे
शर्म च वर्म च भवा गायत्री लोमभिः प्रविशामि ॥ त्रैष्टुभं

त्वचा प्रविशामि जागंती मांसेन प्रविशामि । आनुष्टुभमस्थ्ना प्रविशामि पाङ्क्ति मज्जा प्रविशामि ॥ ऐन्द्राग्नं वर्म बहुलं यदुग्रं विश्वेदेवा नातिविध्यन्ति शूराः । तन्नस्त्रायतां तन्वः सर्वतो महदायुष्मन्तो जरामुपगच्छेम जीवाः ॥ ( "अनेन मन्त्रहोमेन आत्मनो० अमुकराश्या ग्रहपीडानिवारणार्थं दिव्यन्तरिक्षभौमोपद्रव-निवारणार्थं महौषधिगणा रक्षोघ्नमन्त्राः प्रीयन्तां प्रीताः सन्तु ॥ इति महौषधिसूक्तम् ॥ ५१ ॥

## अथ उदकलशम् ॥ ५२ ॥

( उदकलशमुपनिधाय स्वस्त्ययनं वाचयति ), उत्तिष्ठ ब्रह्मण-स्पते ! देवयन्तस्त्वेमहि उपप्रयन्तु मारुतः, सदानव इन्द्र प्राशूर्भवासचा, अर्यमाऽयातु वृषभस्तुविष्मान्, यन्ता वसूनि विधत्ते तनूपाः सहस्राक्षो गोत्रभिद्वज्रबाहुः, अस्मासु देवो द्रविणं ददातु, ये ते अर्यमन्बहवो देवयानाः पन्थानो राजन् ! दिव आचरन्ति, तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च ब्रूहि देव ! ( राष्ट्रभृतान्देवानामार्षम् ) बोधश्च मा प्रति-बोधश्च पुरस्ताद्गोपायतामऽस्वप्नश्च मानवद्राणश्च दक्षिणतो गोपा-यतां, गोपायमानश्च मा रक्षमाणश्च पश्चाद्गोपायतां जागृविश्च मारुन्धती चोत्तराद्गोपायतां, अनमित्रन्नो अधरागऽनमित्रमु-दक्कृधि, इन्द्रानमित्रन्न पश्चादानमित्रं पुरस्कृधि, अनमित्रैरहोभिः सचेमहि विश्वेदेवा अनमित्रा न उषसः सन्तु निम्रुचः, याः

यद्युर्वीः पञ्च प्रदिशस्ता नः पान्तु मित्रधानो मित्रे दधाता अभयं नो अस्तु, ये रात्रीमऽनुतिष्ठथ ये च भूतेषु जागृथ पशून्ये सर्वान्त्रक्षथ तेन आत्मसु जागृत, बोधप्रतीबोधा स्वप्नानवद्राण गोपायमान रक्षमाण जागृवेऽनन्धतीति, ये देवास्तनूपाः स्थ ते म इह तन्वं पात बोधप्रतीबोधेत्यसौ वा आदित्यो बोधोऽग्निः, प्रतीबोधो स्वप्नानवद्राणेति चन्द्रमा वा अस्वप्नोऽयं यः पवते सोऽनवद्राणो गोपायमान रक्षमाणेत्यहर्वै गोपायमानो रात्री रक्षमाणो जागृव्यऽरुन्धतीति यज्ञो वै जागृविर्दक्षिणाऽरुन्धत्येते वै देवा राष्ट्रभृतास्तानेवेष्टे आत्मने गोपीथाय ।। मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः । शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव । मार्कण्डेयमुनेः स्वर्गवैद्ययोः स्वर्पतेर्यथा । आयुरारोग्यमैश्वर्यमेतत्त्रितयमस्तु ते । जीव त्वं शरदः शतम् इति 'उदकलशस्वस्त्ययनम् ।। ५२ ।।

## यज्ञान्तस्नानेऽभिषेकः ।। ५३ ।।

ॐ सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुशिवादयः । वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ।। प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते । आखण्डलोग्निर्भगवान्यमो वै निर्ऋतिस्तथा ।। वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः । ब्रह्मणा सहितो विष्णुर्दिक्पालाः पान्तु त्वां सदा ।। कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः । बुद्धिर्लज्जा कृपा शान्तिस्तुष्टिः कान्तिश्च तर्पिताः ।। एतास्त्वामभिषिञ्चन्तु देव-

पत्न्यः समागताः । आदित्यश्चन्द्रमा भौमो बुधो जीवः
सितो[५]ऽर्कजः ॥ ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ।
देवदानवगन्धर्वा [६]यक्षराक्षसपन्नगाः ॥ ऋषयो मनवो गावो
देवमातर एव च । देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां
[७]गणाः ॥ अस्त्राणि सर्वशास्त्राणि राजानो वाहनानि च । औष-
धानि च रत्नानि कालस्यावयवाश्च ये[८] ॥ सरितः सागराः
शैलास्तीर्थानि जलदा नदाः । एते त्वामभिषिञ्चन्तु धर्मकामा-
[९]र्थसिद्धये ॥ कृत्तिका रोहिणी देवी इल्वकाऽऽर्द्रा तथैव च । पुन-
र्वसुश्च तिष्यश्च तथाऽश्लेषा च [१०]सर्वदा ॥ मघा च फाल्गुनीपूर्वा
तथैवोत्तरफाल्गुनी । हस्तश्चित्रा तथा स्वातिर्विशाखा च [११]नरा-
धिप ॥ अनूराधा तथा ज्येष्ठा मूलं च यजमानकम् । पूर्वाषाढा
चोत्तरा वै आषाढा [१२]त्वभिजिच्छ्रुतिः ॥ धनिष्ठा शततारा च
पूर्वभाद्रपदा तथा । उत्तरभद्रा रेवती च अश्विनी भरणी [१३]तथा ॥
एतास्त्वामभिषिञ्चन्तु चन्द्रपत्न्यः समागताः । अनन्तश्च महा-
नागः शेष[१४]वासुकितक्षकाः ॥ सुपर्णोरिश्वकुम्भश्च वामनश्चाञ्जन-
स्तथा । ऐलापत्रश्च शङ्खश्च [१५]कार्कोटकधनञ्जयौ ॥ महाकर्णमहा-
नीलौ धृतराष्ट्रमहाहकौ । ऐलवतो महानागः [१६]कम्बलाश्वतरा-
वुभौ ॥ कुमारः पुष्पदन्तश्च सुमुखो दुर्मुखस्तथा । सुशरीरो
दधिमुखः [१७]कालियश्चालिपिण्डकः ॥ बिल्वपादः पुण्डरीको
नागश्चापूरणस्तथा । कपिलश्चाम्बरीषश्च कुमारश्चापि [१८]कच्छपः ॥

प्रह्लादः पुष्पदन्तश्च गन्धर्वश्च मनस्विकः । ब्रहुषः खररोमश्च
शङ्खपालश्च [19]नागराट् ॥ पद्मश्च कुलिकश्चैव कालिकादय एव च ।
नागास्त्वामभिषिञ्चन्तु धर्म[20]कामार्थसिद्धये ॥ वेदव्यासश्च वाल्मी-
किर्वसिष्ठोथ पराशरः । देवलः पर्वतश्चैव दुर्वासो भार्गवः
[21]शुचिः ॥ याज्ञवल्क्यश्च जाबालिर्जमदग्निः शुचिश्रवाः । विश्वा-
मित्रःस्थूलशिरा मरीच्यत्र्यङ्गिरा[22]स्तथा ॥ पुलस्त्यः पुलहश्चैव
त्रितो गौतमगालवौ । शाण्डिल्यश्च भरद्वाजो मौद्गल्यो वेद-
[23]वाहनः ॥ बृहदश्वः क्रतुश्चैव जूटाधारी घटोदरः । यवक्रीतः
शौनकश्च मार्कण्डेयश्च [24]जैमिनिः ॥ कात्यायनिः शार्ङ्गरवः
काण्वोऽगस्त्योथ कश्यपः । एते त्वामभिषिञ्चन्तु ऋषयो [25]ब्रह्म-
योनयः ॥ पृथुर्दिलीपो भरतो रघुर्दशरथो निमिः । मनुः ककु-
त्स्थः शत्रुजिच्छिनिश्चैव [26]जयद्रथः ॥ मान्धाता मुचुकुन्दश्च हरि-
श्चन्द्रः पुरूरवाः । अजश्च नहुषश्चैव [27]ययातिरपराजितः ॥
इक्ष्वाकुश्च यदुश्चैव रामो भूरिश्रवस्तथा । अम्बरीषश्चैव कुशो
बृहदश्वो [28]महाहनुः ॥ प्रद्युम्नश्चाथ सुद्युम्नो भूरिद्युम्नश्च संजयः ।
एते त्वामभिषिञ्चन्तु राजानो [29]धर्मवृद्धये ॥ ऋग्वेदोऽथ यजु-
र्वेदः सामवेदस्त्वथर्वणः । कृतस्त्रेता द्वापरश्च [30]कलिस्त्वामभिषि-
ञ्चतु ॥ इतिहासो धनुर्वेदो गान्धर्वश्चायुसंज्ञितः । पुराणमुप-
वेदाश्च विजयाय भवन्तु ते[31] ॥ गायत्री पापशमनी दुर्गादेवी
महाशिवा । गान्धारी च तथा विद्या विजयं प्रदिशन्तु [32]ते ॥

पुष्करश्च प्रयागश्च प्रभासो नैमिषस्तथा । गया ब्रह्मसरः पुण्यं गयशीर्षं च मानसम्[33] ॥ कालो देवो नन्दिकुण्डस्तथैवोत्तरमानसः । गंगानदी महापुण्या ह्लादिन्यैलावती तथा[34] ॥ तपनी च तथा सीता वङ्क्षुः सिन्धुश्च नर्मदा । सुप्रभा करतोया च विशाला गण्डकी नदी[35] ॥ सरस्वती च यमुना सुवेणुर्विमलोदका । सिप्रा शोणः शतद्रुश्च सरयूश्चन्द्रभागिका[36] ॥ चत्वारः सागराश्चैव स्वेन तोयेन शान्तये । सर्वास्त्वामभिषिञ्चन्तु विजयं प्रदिशन्तु ते[37] ॥ अच्छोदश्च विपाशा च चन्द्रभागाऽमरावती । वितस्ता देविका रम्भा कावेरी च शतह्रदा[38] ॥ एताश्चान्याश्च सरितः सर्वलोकस्य मातरः । स्वतोयपूर्णैः कलशैरभिषिञ्चन्तु त्वां मुदा[39] ॥ मंत्रैर्यथोक्तैरिह यज्ञप्रान्ते दत्ताऽभिषेकः पृथिवीं समग्राम् । ससागरां भुङ्क्ष्व चिरं च जीव धर्मे शुभा बुद्धिरतीव चास्तु[40] ॥ इति यज्ञान्तस्नानेऽभिषेकः ॥ ५३ ॥

## अथ कलशावाहनम् ५४ ॥

आवाहयाम्यहं देवं गणेशं सुरपूजितम् । सदैव विघ्नहर्तारं सर्वकामफलप्रदम् ॥ १ ॥ रक्तवर्णो महातेजा रक्तस्रग्दामभूषितः । बलिः पुष्पं चरुश्चैव धूपोयं प्रतिगृह्यतां ॥ २ ॥ निषुसीद गणपते० १ । आवा० कुमारं षण्मुखं प्रभुम् । मयूरासनमारूढं भक्तानामभयङ्करम् ॥१॥ शुक्लवर्णो महातेजाः० ॥ २ ॥ कुमारं माता० २ । आवाहयाम्यहं देवीः श्रियं लक्ष्मीं सरस्वतीम् ।

तथा च विश्वकर्माणमन्याश्च द्वारदेवताः ॥ १ ॥ नानावर्णधरा देवीः० २ । आगच्छागच्छ देवेशि क्षीरार्णवसमुद्भवे । लोकानामुपकारार्थं सन्निधिं कुरु सर्वदा ॥ १ ॥ रक्तवर्णा० २ ॥ अश्वपूर्वां० ३ । आवाहयाम्यहं देवीं वागीशीं वाक्प्रदायिनीम् । हंसस्थां सुरदितिजैः पूजितां विघ्नहारिणीम् ॥ १ ॥ शुक्लवर्णा० ॥ २ ॥ इयं शुष्मेभिः० ४ । आवाहयाम्यहं देवीं लक्ष्मीं त्रैलोक्यपूजिताम् । भक्तं मोहाकुलमार्तं पश्यन्तीं स्निग्धचक्षुषा ॥१॥ रक्तवर्णा० ॥२॥ कांस्यस्मितां० ५ । आवाहयाम्यहं देवं विश्वकर्माणमीश्वरम् । सर्वासां देवतानां च सदाशिल्पप्रवर्तकम् ॥ १ ॥ शुक्लवर्णो ॥ २॥ विश्वकर्मा० ६ । (इति द्वारदेवताः ॥ अथ ब्रह्मकलशे ।) आवाहयाम्यहं देवं ब्रह्माणं च चतुर्भुजम् । हंसयानं स्वक्षमालाकमण्डलुधरं प्रभुम् ॥ १ ॥ रक्तव० ॥२॥ ब्रह्मा देवानां० १ । आवाहयाम्यहं विष्णुं गदाशङ्खाब्जचक्रिणम्। अतसीपुष्पसङ्काशं पीतवाससमच्युतम् ॥ १ ॥ पीतवर्णो० ॥ २ ॥ प्रतद्विष्णु०२ । आवाहयाम्यहं देवं ईश्वरं पार्वतीपतिम् । वृषभासनमारूढं नागाभरणभूषितम् ॥१॥ शुक्लवर्णो० ॥२॥ यो रुद्रो अग्नौ० ३ । आवाहयाम्यहं दुर्गां शङ्खचापशरान्विताम् । त्रिशूलहस्तां वरदां त्रिनेत्रां चारुहासिनीम् ॥१॥ रक्तवर्णा० ॥२॥ जातवेदसे० ४ । ( चतुर्वेदेश्वरान् क्वचित् ) मध्ये" आवाहयाम्यहं देवं रुद्रं ( विष्णुं ) सानुचरं विभुम् । चतुर्वेदेश्वरं श्रेष्ठं मध्ये

तिष्ठन्तमऽव्ययम् । यो रुद्रो । "वा" । (प्रतद्विष्णुः) । पूर्वे" आवाहयामि पृथिवीमऽग्निना संयुतां शुभाम् । ब्रह्माणं पूर्वतो देशे छन्दांसि सर्वसिद्धये । अग्निमीळे० । "दक्षिणे" आवाहयाम्य न्तरिक्षं यजुर्वेदं च मारुतम् । ब्रह्माणं दक्षिणे देशे छन्दांसि सर्वसिद्धये ॥ इषे त्वोर्जे । पश्चिमे" दिवमावाहयिष्यामि सूर्यसामसमन्वितम् । ब्राह्मणं पश्चिमेदेशे छन्दांसि सर्वसिद्धये ॥ अग्न आयाहि । उत्तरे" दिशश्चन्द्रमसं देवमथर्वाणयुतं शुभम् । आवाहयामि ब्रह्माणं छन्दांसि चोत्तरे दिशि ॥ शन्नो देवी ॥ (विष्णुपञ्चायतने) आवाहयाम्यऽमर वृन्दनुताङ्घ्रियुग्मं । तद्विष्णोः० । भूमेर्ज लात्तु पवनादऽनलाद्धिमांशो० योरुद्रो ॥ शैलेश्वरस्य तनयार्भक भक्तविघ्न० । गणानान्त्वा० ॥ ब्रह्माण्डगेहपरिदीपक शम्भुमूर्ते० । चित्रन्देवानां ॥ श्रीशारदे सुरवरे त्रिपुरे सुरेशि० । जातवेदसे ॥ ( अथेन्द्रकलशे दिक्पालान् । ) आवाह० वज्रहस्तं शचीपतिम् । ऐरावणसमारूढं पूर्वस्यां दिशि पूजयेत् ॥ १ ॥ पीतव० ॥२॥ इन्द्रा पर्वताः० १ । आवा० रक्तं वैश्वानरं तथा । शक्तिहस्तं शुकारूढमाग्नेय्यां दिशि पूजयेत् ॥ १ ॥ रक्तव० ॥ २ ॥ अग्नि सप्तिं० २ । आवा० धर्मराजं महाबलम् । महिषासनमारूढं दक्षिणस्यां दिशि यजेत् ॥१॥ कृष्णव० ॥२॥ यमो दाधार०३ । आवा० नैर्ऋतं दैत्यपूजितम् । खड्गपाणिं रक्षोऽध्यासं नैर्ऋत्यां दिशि पूजयेत् ॥ १ ॥ नीलव० ॥ २ ॥ यन्ते देवी ४ । आवा०

वरुणं यादसां पतिम् । पाशहस्तं तिमिवाहं पश्चिमायां दिशि यजेत् ॥ १ ॥ श्यामव० ॥ २ ॥ उदुत्तमं० ५ । आवा० मारुतं ध्वजधारिणम् । सर्वेषां जीवनं वीरं वायव्यां दिशि पूजयेत् ॥ १ ॥ रक्तव० ॥ २ ॥ वायवायाहि ६ । आवा० कुबेरं गदया युतम् । नरासनसमारूढमुत्तरस्यां दिशि यजेत् ॥ १ ॥ कृष्णव० ॥ २ ॥ सोमो धेनुं० १ ॥ आवा० ईशानं शूलधारिणम् । शिरश्चन्द्रं वृषारूढमैशान्यां दिशि पूजयेत् ॥ १ ॥ शुक्लव० ॥ २ ॥ ईशानन्त्वा० ८ । आवा० ब्रह्माणं गायत्रीपतिम् । चतुरास्यं हंसयानमूर्ध्वायै दिशि पूजयेत् ॥ १ ॥ रक्तव० ॥ २ ॥ ब्रह्मजज्ञानं० ९ । आवा० विष्णुं त्रैलोक्यपूजितम् । रमायुतं खगारूढमधरायां दिशि यजेत् ॥ १ ॥ पीतव० ॥ २ ॥ वषट् ते विष्ण० १० । ( मध्ये ग्रहान् ) आवाह० भानुं सर्वजगद्गुरुम् । अरुणः सारथिर्यस्य सप्ताश्वरथवाहनः ॥ १ ॥ रक्तव० ॥ २ ॥ आकृष्णेन० १ । आवा० चन्द्रं नक्षत्रनायकम् । शम्भोः शिरस्थलङ्कारं प्रत्यक्षं लोकनायकम् ॥ १ ॥ शुक्लव० ॥ २ ॥ याते धामानि० २ । आवा० भौमं मयूरवाहनम् । लोहिताङ्गं महौजस्कं शत्रूणां च भयङ्करम् ॥ १ ॥ रक्तव० ॥ २ ॥ अग्निर्मूर्धा० ३ । आवा० बुधं बुद्धिविवर्धनम् । सुवर्णरथगं दीपं सोमवंशस्य दुःखहं ॥ १ ॥ पीतव० ॥ २ ॥ बोधास्य मे ४ । आवा० जीवं देवेन्द्रमन्त्रिणम् । गजासनं देवपूज्यं वाक्पतिं च ग्रहेश्वरम् ॥ १ ॥

पीतव० ॥ २ ॥ बृहस्पति अ० ५ । आवा० भार्गवं दैत्यपूजितम् । असुराणां गुरुं चैव ग्रहाणामतिपूजितम् । शुक्लव० ॥२॥ अन्नात्परि० ६ । आवा० सूर्यपुत्रं शनैश्चरम् । मेचकप्रतिवर्णाभं भूतसंहारकारकम् ॥ १ ॥ कृष्णव० ॥ २ ॥ शन्नोदेवी० ७ । आवाहयाम्यहं देवं सैंहिकेयं महाबलम् । अबाहुमन्तरिक्षस्थं देवदानवपूजितम् ॥ १ ॥ हरिद्वर्णो० ॥ २ ॥ कया नश्चि० ८ । आवा० केतुं सर्वग्रहान्तकम् । नीलजीमूतसङ्काशं मृत्युतुल्यपराक्रमम् ॥ १ ॥ धूम्रव० ॥ २ ॥ केतुं कृण्व० ९ । आवा० ध्रुवराजं महाबलम् । ऋषीणां प्रवरं पूज्यं रुद्रैकादशवासिनम् ॥ १ ॥ ग्रहचक्रे स्थितं नित्यमुदीच्यां दिशि पूजयेत् । रक्तव० ॥ २ ॥ ध्रुवाद्यौ० । आवा० अगस्त्यं देवपूजितम् । उग्ररूपधरं नित्यं रुद्ररूपं मुनिस्तुतम् । दक्षिणस्यां ज्वलन्तं च जलधिचुलुकीकरम् ॥ १ ॥ पीतव० ॥ २ ॥ अगस्त्यः ख० । आवा० वास्तोष्पतिमतिप्रियम् । अधोमुखं धराकाशदिक्षु सर्वासु व्यापकम् ॥ १ ॥ स्वेच्छाव० ॥ २ ॥ अमीवहा० । वास्तोष्पते० आवाहयाम्यहं देवान्क्षेत्रपालान्महाबलान् । दंष्ट्राकरालवदनाञ्जटामुकुटमण्डितान् । भूपातालखदिक्व्याप्य संस्थितान्भक्तवत्सलान् । नानारूपधरान्देवान्नानावर्णोपशोभितान् । बलिः पुष्पं० । क्षेत्रस्य पतिना० । भगवन्पुण्डरीकाक्ष० ॥ इति कलशावाहनम् ॥ ५४ ॥ इति वेदकल्पद्रुमपुस्तकं द्वितीयं समाप्तम् ॥

श्रीकृष्णार्पणमस्तु ॥

# द्वितीयवेदकल्पद्रुमस्य विषयानुक्रमणिका ।